UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES NO. 122

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला–१२२

MAMMATA'S

# KAVYAPRAKASHA

with Sanketa and Madhumati

श्रीमम्मटभट्टविरचितः

# काव्यप्रकाशः

सङ्केतमधुमतीभ्यां समलङ्कृतः

(Volume II, Ullasas 7–10)

(द्वितीयः सम्पुटः ७–१० उल्लासाः)

ORIENTAL RESEARCH INSTITUTE, MYSORE
प्राच्यविद्यासंशोधनालयः, मैसूरु
1977

प्राच्यविद्यासंशोधनालयग्रन्थमाला—१२२

श्रीमम्मटभट्टविरचितः

# काव्यप्रकाशः

आचार्यमाणिक्यचन्द्रविरचितया सङ्केतटीकया,
श्रीरविभट्टाचार्यविरचितया मधुमतीटीकया,
भावुकप्रियाख्यटिप्पण्या विविधानुबन्धैश्च
समलङ्कृतः

(द्वितीयः सम्पुटः ७-१० उल्लासाः)

सम्पादकः
श्री॥ एन्. एस्. वेङ्कटनाथाचार्यः
न्याय-व्याकरण-साहित्यालङ्कारविद्वान्
सीनियर् रिसर्च् असिस्टेण्ट्
प्राच्यविद्यासंशोधनालयः
मैसूरु

प्राच्यविद्यासंशोधनालयः
मैसूरु विश्वविद्यानिलयः
मैसूरु
१९७७

UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES

*First Edition,*

*1977*



*General Editor*

DR. G. MARULASIDDIAH, M.A., PH. D.

Director, Oriental Research Institute and

Professor and Head of the department of Post Graduate

studies and Research in Sanskrit, Manasagangothri

University of Mysore, Mysore

*Published by*

The Director, Oriental Research Institute

University of Mysore, Mysore

*Printed by*

Sri M. Nanjappa, at the Karunodaya Printing

Kalidasa Road, V. V. Mohalla, Mysore

Oriental Research Institute Series No. 122

# KAVYAPRAKASHA
## OF
# MAMMATA

WITH

Saṅketa of Acharya Manikyachandra,
Madhumati of Ravi Bhattacharya and
Bhavukapriya tippani

(Vol. II, Ullasas 7-10)

*Critically Edited by*

Sri N. S. VENKATANATHACHARYA
Nyaya Vyakarana Sahityalankara Vidwan
Senior Research Assistant
Oriental Research Institute,
Mysore

ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1977

प्रथमं मुद्रणम्

१९७७



प्रधानसम्पादकः

डा॥ जि. मरुळसिद्धय्य, एम्. ए. पिहेच्. डि.

डैरेक्टर् प्राच्यविद्यासंशोधनालयः मैसूरु

प्रोफेसर् & हेड् आफ् दि डिपार्ट्मेण्ट्

यु. जि. सि. संस्कृतविभागः, मानसगङ्गोत्री

मैसूरु विश्वविद्यानिलयः

मैसूरु

प्रकाशकः

प्राच्यविद्यासंशोधनालयनिर्देशकः

मैसूरु—५

मुद्रकः

श्री॥ एम्. नंजप्प, करुणोदयमुद्रणालयः

कालिदास रोड्, वाणीविलास मोहल्ला मैसूरु—२

प्राच्यविद्यासंशोधनालयग्रन्थमाला—१२२

श्रीमम्मटभट्टविरचितः

# काव्यप्रकाशः

आचार्यमाणिक्यचन्द्रविरचितया सङ्केतटीकया,

श्रीरविभट्टाचार्यविरचितया मधुमतीटीकया,

भावुकप्रियाख्यटिप्पण्या विविधानुबन्धैश्च

समलङ्कृतः

(द्वितीयः सम्पुटः ७-१० उल्लासाः)

सम्पादकः

श्री॥ एन्. एस्. वेङ्कटनाथाचार्यः

न्याय-व्याकरण-साहित्यालङ्कारविद्वान्

सीनियर् रिसर्च् असिस्टेण्ट्

प्राच्यविद्यासंशोधनालयः

मैसूरु

प्राच्यविद्यासंशोधनालयः

मैसूरु विश्वविद्यानिलयः

मैसूरु

१९७७

# अनुक्रमणिका

—o—

**भूमिकाभागः—**



**ग्रन्थभागः—** 1—614



**अनुबन्धभागः—(N. S. V.)**



———

## FOREWORD

—o—

Here comes to your hands the II volume of the Kavyaprakasha of Mammata (11th Cen. A.D.) in continuation of the I volume published in February, 1974 under the Oriental Research Institute's publication series. Vidwan Sri N. S. Venkatanathacharya, the very Editor of the I volume, is bringing out this volume also containing 7–10 ullasas dealing with Dosa, Guna and Alankaras.

The speciality of this volume containing the Madhumati commentary is that it adds the following new points and thus removes many lacunae in explanations found in the innumerable commentaries on this great work on Sanskrit poetics ; the Kavyaprakasha.

1. Mistakes found in many commentaries, knowingly or unknowingly, are corrected with respective readings.
2. A distinctly analytical contents section is appended for immediate reference with necessary notes on them.
3. The various laksyas and Laksanas are alphabetically arranged in indices.
4. The final definitions of the figures of sppeech are relatively discussed and their mutual differences and variations are also noted.
5. The various axioms used in various other commentaries are analysed to fecilitate research students and scholars.
6. Important technical points of poetics dealt with by Rajanaka Mammata spread over all the ullasas of this volume are properly indexed for easy understanding and reference.

It is heartening that our Institure should publish an easier and clearer commentary, Madhumati duly amennded by the editor to a clear-cut understanding of the Kavyaprakasha an excellent and extraordinary exposition of Sanskrit poetics. His division and definition of Kavya, above all his systematisation of the Rasa evolution according to almost all the schods of Indian Philosophy is very important. Our present day teachers and students forget usually to point out and emphasise how Mammata has taken painselucidate these points. Prof. M. Hiriyanna, a rare Scholar of the day has explained the mutual intricacies in the Vedanta, Sankhya and other systems in relationship with the Rasa realisation in his small but sweetest book 'THE ART EXPERIENCE'. A compendium on the special contribution of the Kavya Prakasha intended to be appended here is given up for obvious reasons. We propose to bring it out separately. The book justifies the title in its clear classification and clearer commentaries in the style of Patanjali or Sankara. No other work on Alankara is as elegant and pregnant as the Kavya Prakasha. Hence I hope & request our inquisitive and interested public to make use of these volumes and offer useful comments if any so that we might add in our next edition.

My thanks are due to the learned Editor Vidwan Sri N. S. Venkatanathacharya, the Senior most Research Asst. of O. R. I and also M. Nanjappa, Karunodaya Press, Mysore, the print of this book. Though not expressed, our gratitude goes to the University which has facilitated us to bring out such ground works through this unique premier Institution.

Dr. G. MARULASIDDAIAH,
DIRECTOR AND GENERAL EDITOR.

# किञ्चित् प्रास्ताविकम्

## १. श्लाघनीयोऽयं काव्यप्रकाशस्य पूर्णोदयः

" नक्षत्राणि बहूनि सन्ति परितः पूर्णोदयान्यम्बरे
किं तैः शान्तिमुपैति दीर्घतिमिरं ? किं वार्धिरुज्जृम्भते ?
किं स्यादार्तचकोरपारणविधिः ? भ्रातः ! सुधादीधिते !
तन्नूनं भुवनैकतापशमनः श्लाघ्यः तवैवोदयः ॥ "

सत्यमेवमेवास्य ग्रन्थरत्नस्य पूर्णोदयमपि श्लाघ्यं मन्यामहे, सहृदयजन-सुहृदयेष्वभ्युदितेन येनानेनापि ग्रन्थरत्नेन सः आदिकविधर्मः सर्वोऽपि सरहस्यः सम्यक् प्रकाशितो भवेदिति ॥

सोऽयं—विविधविद्याविद्योतितस्वान्तेन वाग्वैखरीविजितवाचस्पतिना विद्वन्मण्डलमण्डनायमानेन मम्मटभट्टेन विरचितः, " भारतीकवे "रिति काव्य-पदार्थमुपक्रम्य " प्रतिभासते " इति प्रकाशोपगुम्फितोपसंहारतया काव्यप्रकाश-नाम्ना प्रतीतः, सर्वेषु साहित्यालङ्कारग्रन्थेषु चूडामणितामुपगतः काव्यमीमांसा-रूपः सूत्रप्रायोऽलङ्कारग्रन्थः, इतः पूर्वमस्मादेव संशोधनालयात् प्रकाशितेन १२० तमाङ्केन पूर्वभागेण अनेन चोत्तरभागेण सम्पूर्णतामगमदिति सप्रमोदमा-वेदयामः ॥

## २. कवीनां मार्गदर्शकोऽयं ग्रन्थः

अलङ्कारशास्त्रप्रबन्धेषु अयं ग्रन्थः सर्वानप्यन्यानतिशेत इति, नास्य तुलामन्यः कश्चनालङ्कारग्रन्थः अधिरोहेदिति, एतत्प्रतिपादितांश्च विषयान् याथातथ्येनावगच्छतां सहृदयानां चेतसि सत्यमयं मम्मटः श्रीवाग्देवतावतार-रूपतया पदं दधात्येवेति, वामन-भामहादिप्राचीनालङ्कारशास्त्रप्रवर्तकैर्निबद्धेषु

नैकविधग्रन्थेष्वपि इदमित्थमिति निर्णयात्मकः साहित्यशास्त्रमार्गः शृङ्गग्राहिकया न प्रज्ञातुं शक्यत इति मन्वानाः महाकवयः एतत्प्रदर्शिते निष्कण्टकेऽध्वनि निर्भयं सञ्चरन्तः लब्धप्रतिष्ठाः महाकवय एव सम्पन्नाः विराजामानाः दृश्यन्त इति च पूर्वमेव बह्वीभिर्भङ्गीभिरावेदयाम ॥

## ३. समुचिते च व्याख्ये

टीकाकाराणां च विषये कविहृदयविप्लवकारितारूपः यः कश्चनापवादः आरोपितो भोजेन—

> " दुर्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः
> स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिभिः ।
> अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैः श्रमं तन्वते
> श्रोतॄणामितिवस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः ॥ "

इति, सोऽयमपवादः आभ्यां माणिक्य-रविपाणिभ्यां सत्यं प्रमार्जितः इति सुधीरं वदामः । यतः—मूलाशयं सहृदयस्पृहणीयाकारेण सरसललितोदारं मर्मविशदीकरणपर्याप्तं च विवृण्वत्योः, स्वरूपव्याक्रिययैव इतरमतानि पराकुर्वत्योः, अनयोः तदीययोः सङ्केत-मधुमत्योः व्याख्ययोः—केवलं मूले यस्यांशस्य अभिप्रायः अतीव दुरधिगमः, यं चांशं परिनिष्ठितमतयोऽपि याथातथ्येन मनोविषयीकर्तुमक्षमा भवन्ति च, तादृशाः सर्वेऽपि भागाः सुग्रहाः सुगमाश्च यथा भवेयुः तथैव विवृताः इति ॥

## ४. अस्य प्रकाशनेन संस्थेयं समुचितकारिणी

किमधिकप्रशंसनेन ? न हि प्रशंसोद्रेकेण अप्रशंसया वा यथावस्थितांशस्य उपचयापचयौ सम्भवेताम् । किन्तु—सारतः इदमेवात्रावश्यं ख्यापनीयम्—यत्—सव्याख्यः सुपरिष्कृतश्चायं ग्रन्थः एवं प्रकाशितः, व्युत्पित्सूनां

सुमधुरसमानाधिकरणव्युत्पत्तिविलासाय अतीवोपकारको भवेदिति, सोऽयं शुभोदर्कप्रकाशनोद्यतः संशोधनालयः अनन्तान् धन्यवादानर्हतीति च ॥

## ५. मातृकाः

अस्य च भागस्य पूर्ववत् मुद्रिता अमुद्रिताश्च विविधाः मातृकाः आदर्शीकृत्यैव परिशोधनं निरवर्ति । यथा—

(*a*) काव्यप्रकाशस्य—

1) S. P. 369 आन्ध्रलिपिः O. R. I. Mss. ।
2) प्रदीपोद्योतसंयुता (आनन्दाश्रमे मुद्रिता) ।
3) सुधासागरीसंयुता (चौखाम्बामुद्रिता) ।
4) सम्प्रदायप्रकाशिनी-साहित्यचूडामणिभ्यां सहिता (अनन्तशयनमुद्रिता) ।
5) श्रीधरीयटीकासहिता (कल्कत्तानगरे मुद्रिता) ।
6) बालबोधिनीसहिता (पुण्यपत्तने मुद्रिता) ।

(*b*) सङ्केतटीकायाः—

1) प्राच्यविद्यासंशोधनालयेऽस्मिन् 1922 तमे खिस्ताब्दे मुद्रिता ।
2) पुण्यपत्तने 1921 तमे खिस्ताब्दे मुद्रिता ।
2) सोमेश्वरविरचिता सङ्केतटीका (सहकारार्थं स्वीकृता) । (राजास्थानप्राच्यविद्याप्रतिष्ठापने मुद्रिता) ॥
4) रुय्यकविरचिता सङ्केतटीका (सहकारार्थं स्वीकृता) । (देहल्यां मुद्रिता)

(*c*) मधुमतीटीकायाः—

1) S. B. 407 आंध्रलिपिः O. R. I. Mss.

2) R. 1676 ग्रन्थलिपिः गौर्नमेण्ट् ओरियण्टल् म्यानस्क्रिप्ट् लैब्ररि, मदरास् (प्रतिलिपीकृता)।

इतोऽप्यन्ये राजचूडामणिदीक्षितीयकाव्यदर्पणादयः अनेके ग्रन्थाः संवादाग अवलोकिताः ॥ इति ॥

## ६. भावुकप्रिया टिप्पणी

भावुकप्रिया टिप्पणी च नास्मिन् भागे पूर्वभागवत् किञ्चिद्विस्तृता संयोजिता। किन्तु निर्दिष्टग्रन्थ-कालप्रमाणानुगुणं निर्देशकनिर्देशमनुसृत्यातीव संक्षिप्तैव योजिता। परं अन्ते सौलभ्याय सर्वेषामलङ्काराणां निष्कृष्टं लक्षणं अन्तर्भावादिकं च संयोजितम् ॥

## ७. सम्पादकीयम्

प्रकृते चात्र मुद्रणे आपाततोऽप्यध्येतॄणां भ्रमः श्रमो वा माभूदिति प्रायशः सर्वत्र सन्धिर्न कृतः। मूलव्याख्ययोरसङ्कीर्णा विस्तृता विषयसूचनी दत्ता। यत्र चोदाहरणं केवलं प्रदर्शितं मूले तत्रापि उदाहरणशब्दवर्जं स विषय एव निर्दिष्टः प्रेक्षकाणां 'कस्योदाहरणमिद'मित्याकाङ्क्षोपशान्तये ॥

सारतः—विदुषामास्वादने बालानां सुखबोधे चोपयोगिनीं रीतिमेवावलम्ब्य प्रकाशनं कार्यमित्यभिसन्ध्या महानेव यत्नः कृतः। केवलमल्पकाल एव सुसम्पन्नेऽस्मिन् महति कार्ये मनुजबुद्धिसुलभाः अशुद्धयः तत्र तत्र सम्भाव्येरन्नेवेति, ताश्च संशोधनेनापबाध्य गुणान् गृह्णन्तः सुजनाः मदीयं परिश्रमं सफलयेयुरिति च सहृदयानधीतिनः सप्रश्रयं प्रार्थये।

## ८. कृतज्ञतासमर्पणम्

अत्र च—यैः प्रकृतग्रन्थसम्पादनायाहमन्वरुध्ये तेषां—सर्वविध-सहकारसम्पत्तिप्रदानेन पदे पदे दिग्दर्शनेन च प्रोत्साहितवतां महानुभावानां एतत्प्राच्यविद्यासंशोधनालयाध्यक्षाणां, मैसूरु विश्वविद्यालयानुबन्धि यु. जि. सि. संस्कृतविभागप्रधानानां प्राध्यापकानां च विदुषां श्रीमतां डा॥ **जि. मरुळसिद्धय्य**, एम्.ए., पिहेच्.डि. महोदयानां सन्निधौ हार्दीः अनन्ताः कृतज्ञताः इमाः धन्यवादांश्चेमान् सप्रश्रयं निवेदयामि ॥

## ९. आशंसनम्

भूयश्चेदमन्तत आशास्महे—

जयतु जगतां मूलं सत्यं सनातनमञ्जसा<br>
जयतु सरसा वाणी दिव्या तदीयमनोऽनुगा ।<br>
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः<br>
जयतु च निधिस्तेषां पूर्णा चिरन्तनभारती ॥

प्राच्यविद्यासंशोधनालयः, मैसूरु<br>
नळसंवत्सरपुष्यबहुळनवमी-मकरसङ्क्रान्तिः<br>
14—1—1977

इति<br>
सहृदयवशंवदः<br>
**एन्. एस्. वेङ्कटनाथाचार्यः**

सव्याख्यकाव्यप्रकाशद्वितीयसम्पुटगतानां

# विषयाणां अनुक्रमणी

---

## सप्तमः उल्लासः

(दोषादोषनिरूपणात्मकः)

—o—



---

व्याख्यास्थाः विशिष्टविषयाः



---

* S=सङ्केतटीका। M=मधुमतीटीका। सर्वत्र प्रथमा संख्या—पुटसंख्या, द्वितीया तु पंक्तिसंख्येति ज्ञेयम्॥

---

अवाचकत्वपरिष्कारः M. 23-12
अप्रतीतत्वपरिष्कारः M. 28-22
अविमृष्टविधेयांशस्वरूपनिष्कर्षः M. 32-11

---

नञर्थविचारः S. 35–10, M. 34–17
विरुद्धमतिकृत्त्वनिर्णयः M. 36–19
च्युतसंस्कृत्यादीनां अवाक्यदोषत्वोपपादनम् M, 39–8

---

---

वचननिर्देशनिर्णयः M. 59–8
समासासमासयोः उद्देश्यविधेयभावप्रतीतिव्यवस्था S. 61-6
प्रकृत्यैकदेशस्य पदांशरूपताविचारः S. 64–4
परस्मैपदात्मनेपदविषयव्यवस्था M. 67–8

---

प्रकृतिप्रत्यययोः पृथग्दोषत्वोपपादनम् M. 71–11
सन्धेः दोषरूपता कदेति निर्णयः M. 75–16

---

छन्दोविशेषस्य रसविशेषव्यञ्जकत्वम् M. 83–9
समाप्तपुनरात्तत्वदोषविषयनिर्णयः M. 89-9

---

अव्ययविशेषाणामर्थव्यवस्था S. 116-12

---

अनौचित्यस्यैव सर्वदोषमूलत्वम् M. 160–10

## अष्टम उल्लासः

(गुणनिरूपणात्मकः)



---

समप्राधान्येन रसभावानां निवेशोपपादनम् S. 199–8

## नवमः उल्लासः

(रीति-शब्दालङ्कारनिरूपणात्मकः)



---

---

प्रसादकोमलयोर्विषयभेदव्यवस्था M. 277-13

---

## दशमः उल्लासः

(अर्थालङ्कारनिरूपणात्मकः)

---

गम्यस्थले लोपव्यवहारोपपत्त्युपपादनम् S. 344–7

मनो-विषकल्पशब्दयोः सामानाधिकरण्यनिर्णयः S. 346–10

---

अपह्नुतेः रूपकाद्भेदः S. 387-6, M. 387-10

शब्दार्थश्लेषयोः भेदोपपादनम् M. 391-14

---

---

दृष्टान्ते प्रतिवस्तूपमासाङ्कर्यनिराकरणम् M. 419–11

उपमाव्यतिरेकयोर्वैलक्षण्योपपादनम् M. 428–9

व्यतिरेकभेदान्तरोपपादनम् S. 432–14

---

---

भाविकस्वभावोक्त्योर्भेदः S. 466–4

उदात्तस्यातिशयोक्तेर्भेदः S. 473–10

---

व्याजोक्तेरपह्नुतेर्भेदः S. 490–5
परिसङ्ख्यापदार्थनिर्णयः M. 493–12

---

लक्षणानिमित्ताः अभेदप्रयोगाः S. 496–13
तत्रैव वैलक्षण्यम् S. 497–10
असङ्गत्यतिशयोक्त्योर्भेदः 506–18
असङ्गत्यपह्नुत्योर्भेदः M. 507–18
विरोधसङ्गत्योर्भेदः M. 508–10

---

असङ्गतौ उत्सर्गापवादभावव्यवस्था M. 509-12
विषमस्य विरोधासङ्गतिभ्यां भेदः M 514-18
विषमभेदोन्तरोदाहरणे S. 514-13
मीलितस्य सामान्याद्भेदः S. 521-9

---

---

ग्रन्थसौन्दर्यदर्शने हेतुः 609-1



———

“ सरस्वती स्वादु तदर्थवस्तु
निःस्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति
परिस्फुरन्तं प्रतिभाविशेषम् ॥ ”

(आनन्दवर्धनः)

“ यानेव शब्दान् वयमालपामः
यानेव चार्थान् वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः
संमोहयन्ते कवयो जगन्ति ॥ ”

(नीलकण्ठदीक्षितः)

“ कटुकौषधवत् शास्त्रं
अविद्याव्याधिनाशनम्
आह्लाद्यमृतवत् काव्यं
अविवेकगदापहम् ॥ ”

(कुन्तकः)

---

अथ काव्यप्रकाशमूलकारिकासु दोषप्रदर्शनो नाम

## सप्तमः उल्लासः

—०—

दोषसामान्यलक्षणम्—

मुख्यार्थहतिर्दोषः रसश्च मुख्यः तदाश्रयाद्वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्याः तेन तेष्वपि सः[1] ॥ १ ॥

पददोषविशेषपरिगणनम्—

दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥ २ ॥

सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव[2] ॥ ३ ॥

---

1 एवं निरूपिते काव्ये धर्मिभूते विशेषतः । दोषस्यावश्यहेतुत्वात् दोषस्ताव-न्निरूप्यते ॥ रसापकर्षहेतुत्वं दोषत्वं परिकीर्तितम् ॥ 2 तत्र श्रुतिकटु भ्रष्टसंस्कारं चाप्रयुक्तकम् । असमर्थं च निहतानुचितार्थे निरर्थकम् । अवाचकं तथाऽश्लीलं संदिग्धं त्वप्रतीतकम् । ग्राम्यं तथैव नेयार्थं अथ क्लिष्टं प्रकीर्तितम् । अविमृष्ट-विधेयांशं विरुद्धमतिकृत्तथा । पदान्येतानि दुष्टानि प्रवदन्ति मनीषिणः ॥ समास एव दुष्टत्वं भवेत् क्लिष्टादिषु त्रिषु ॥

तत्र श्रुतिकटु ज्ञेयं माधुर्यान्यञ्जकं पदम् । नतेऽपि दयिते किं वा नैष्ठुर्यमव-लम्बसे ॥ यद् व्याकरणदुष्टं तत् भ्रष्टसंस्कारमुच्यते । रथ्यया सञ्चरन्तं त्वां वीक्ष्य सा विवशाऽभवत् ॥ अप्रयुक्तं तथाऽऽम्नातमपि पूर्वैरनादृतम् । विहायाः पूरितो भाति तारैः स्मरयशोङ्कुरैः ॥ असमर्थमशक्तं यत् उपसन्दानमन्तरा । निर्माय स्वयशश्शिष्टो लेशस्पृष्टः शशिच्छलात् । निहतार्थं द्व्यर्थं यत् अप्रसिद्धे प्रयुज्यते । राजा सतां

पददोषाणामेव वाक्ये पदैकदेशे चातिदेशः—

अपास्य च्युतसंस्कारं असमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते, पदस्यांशेऽपि केचन[1] ॥ ४ ॥

वाक्यमात्रगामिनो दोषाः—

प्रतिकूलवर्णं उपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५ ॥

अर्थान्तरैकवाचकं अभवन्मतयोगं अनभिहितवाच्यम् ।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥ ६ ॥

---

क्षयकरो राजते विजिताहितः ॥ प्रस्तुतार्थविरुद्धार्थं भवेदनुचितार्थकम् । अनुनीय मुहुर्दूतीं प्रेषयामास मानिनी ॥ पादपूरणमात्रार्थमव्ययं स्यान्निरर्थकम् । हेवं कुण्ठितकालं च कण्ठेकालमुपास्महे ॥ अवाचकं तु तात्पर्यविषयार्थाप्रतीतिकृत् । लुब्धका विहरन्ति स्वद्रिपुस्त्रीसिचया वने ॥ व्रीडाजुगुप्सा माङ्गल्यव्यक्त्याऽश्लीलं त्रिधा मतम् । उपस्थास्यत्युत्सवं ते कालक्षेपसृते विधिः ॥ संदिग्धं तत्तु कथितं यदनिर्धारितार्थकम् । धत्ते कलंकशोभां यः स सोमोऽपोहतात् तमः ॥ शास्त्रान्तरैकसिद्धार्थं अप्रतीतमुदाहृतम् । सन्तः कुर्वन्ति कर्माणि नियोगफलनिस्पृहाः ॥ लोकमात्रप्रसिद्धार्थं ग्राम्यमित्यभिधीयते । भवत्कङ्काणरिङ्खाङ्कैः नखाङ्कैरिव भाति भूः ॥ नेयार्थं स्याल्लाक्षणिकं अशक्तं फलबोधने । दृशाऽपि नैव स्पृशति वाचामोचारसं तव ॥ क्लिष्टं भवेत्तद्यत्रार्थप्रतिपत्तिर्विलम्बिता । दशास्यजजितोद्भूतरिपुस्त्रीजननीपतिः । अविमृष्टविधेयांशं चेद्विधेयाप्रधानता । सर्वं कर्षसि गर्वं त्वं न केषां युधि विद्विषाम् ॥ भवेत् विरुद्धमतिकृत् वर्ण्यानुत्कर्षधीकरम् । नित्यं धर्माहितमतिः सोऽयं परमशोभनः ॥ एवं श्रुतिकटुत्वाद्याः समासेऽपि भवन्त्यमी । पर्वेन्दुगर्वसर्वस्वनिर्वापणमुखी प्रिया ॥

1 अपास्य च्युतसंस्कारं असमर्थं निरर्थकम् । दोषाः श्रुतिकटुत्वाद्याः सर्वे वक्येऽप्यमी मताः ॥ अर्हन्ति बर्हिणां बर्हागर्हां तन्मूर्धजा यदि । तदीयवरसजातौ चेत् कुहनाकुध्रसम्पदः ॥ एते दोषाः सम्भवेयुः पदस्यांशेऽपि केचन । सिध्योदरीं मम दृशां उत्सवं कुरुतेतराम् ॥

भग्नप्रक्रमं अक्रमं अमतपरार्थं च वाक्यमेव तथा [1]॥

---

1 प्रतिकूलाक्षरमुपहतलुप्तविसर्गके। तथा स्फुटविसर्गं च विसन्धिहतवृत्तके। न्यूनाधिकपदं तद्वत् पुनरुक्तपदं तथा। पतत्प्रकर्षं पश्चाच्च समाप्तपुनरात्तकम्॥ अर्थान्तरस्थैकपदं अभवन्मतयोगकम्। अनुक्तवाच्यं पश्चात् स्यात् अपदस्थपदं ततः॥ अपदस्थसमासं च सङ्कीर्णं गर्हितं तथा। प्रसिद्धिविधुरं भग्नप्रक्रमं चाक्रमं तथा। अथामतपरार्थं च वाक्यं दुष्टं विदुर्बुधाः॥

प्रतिकूलाक्षरं तत्तद्रसाननुगुणं वचः। ज्ञानध्वस्तसमस्तांहा ब्रह्म साक्षात्क्रिये कदा॥ ओत्वप्राप्तौ विसर्गाणां ज्ञेयं हतविसर्गकम्। भवतो विमतो भीतो यातो वारयतो वनम्॥ विसर्गा यत्र लुप्यन्ते तत्तु लुप्तविसर्गकम्। विनता रक्षिता राज्ञा विमता निहता रणे॥ स्फुटा यत्र विसर्गाः स्युः तत्तु स्फुटविसर्गकम्। अहितः सहितः सैन्यैः सरितः क्षपितस्त्वया॥ विसन्धिसन्धेर्वैरूप्यं तत्र सन्धेर्विरूपता। विश्लेषे-श्लीलधीकृत्वे कष्टत्वे च त्रिधा भवेत्॥ सकृदप्यैच्छिको दुष्टो विश्लेषः शास्त्रजोऽसकृत्। भाति इन्दुतमी अस्य करा अच्छा अहो अहो!॥ व्रीडाजुगुप्सादाद्यर्थामङ्गलार्थप्रतीति-कृत्। विसंध्यश्लीलधीकृत्तु त्रिविधं कथितं बुधैः॥ वपुरीषद्गलद्धारि गिरिविप्रे तव द्विपः॥ सन्धौ श्रुतिकटुत्वं चेत् भवेत् कष्टविसन्धि तत्। असिपुत्र्यलिरुग्घन्त! द्रोग्धुरस्यपतद्धठात्॥ हतवृत्तं लक्षणानुसारेऽप्यश्राव्यतां गतम्। अनन्यललना-सामान्याभिरूप्येयमङ्गना॥ हतवृत्तं तदत्यन्त्ये लघुन्यप्राप्तगौरवे। इयं शरत्सरसिज-सदृशाक्षी विलासिनी। हतवृत्तं तदप्याहुः वृत्तं रसविशेषहृत्॥ वल्गत्खड्गेन तेन द्राक् खण्डिताः खण्डशो द्विषः॥ अपेक्षितपदानुक्तिः यत्र न्यूनपदं तु तत्॥ किं तपश्चरितं हार यदालिङ्गसि तत्कुचौ। अवक्तव्यार्थबोधः स्याद्यत्राधिकपदं तु तत्॥ नीलोत्पलदलाकारसदृशं तव लोचनम्॥ पुनरुक्तपदं द्विश्चेत् प्रयुज्येताधिकं पदम्॥ नीलाम्बुजातसौभाग्यभव्यसौभाग्यमक्षिते। पतत्प्रकर्षं बन्धस्य पादेपादे प्रहीणता। विपक्षक्षितिभृत्पक्षभेदी विजयते नृपः॥ मुख्यक्रियान्वये ज्ञाते पुनः किञ्चिद्विशेषणम्। यत्रोपादीयते तत्र समाप्तपुनरात्तकम्। स्मरजैत्रपताकेयं जयत्यखिलरञ्जनी॥ एकार्थ-बोधकेष्वेकं पदमर्थान्तरे यदि। अर्थान्तरस्थैकपदं तदानीं कथितं बुधैः। कौस्तुभे-नाङ्कितं वक्षः कैटभारेः कपर्दिनः। चूडालो बालचन्द्रेण जटाजूटश्च पातु वः॥ अभवन्मतयोगं स्यादिष्टान्वयमतिर्न चेत्। यैर्ध्यातस्त्वं ये स्तुवन्ति जनास्त्वामीश! पाहि तान्॥ अनुक्तवाच्यं वक्तव्यानभिधायि पदोक्तितः। शौरेः पद्मानुरक्तस्य तथाप्येषा मनोहरा॥ अपदस्थपदं तत् स्यात् यत्रास्थाने पदं भवेत्। वसुन्धरायामेव

अर्थदोषाः—

अर्थोऽपुष्टः कष्टः व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ७ ॥
संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥ ८ ॥
साकांक्षोऽपदमुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तः त्यक्तपुनस्स्वीकृतोऽश्लीलः [1] ॥ ९ ॥

---

त्वं धारानाथ! धनुर्धरः ॥ अपदस्थसमासं स्यात् अस्थाने चेत् समस्यते । नमयन्ति धनूंष्येते न शिरांसीत्यरीन् प्रति ॥ सद्यस्समुद्यत्क्रोधोच्चैर्बद्धभ्रूकुटिरासनः ॥ सङ्कीर्ण-मन्यवाक्ये स्यात् अन्यवाक्यपदं यदि ॥ चित्त मुञ्चाक्षयं भोगं शिवं क्षणिकमाश्रय ॥ गर्हितं वाक्यमध्ये स्यात् वाक्यान्तरमुदीर्यते । शिवं श्रेयस्करं चित्त! मुञ्च तृष्णां सदा भज ॥ कविप्रसिद्ध्यतिक्रान्तं प्रसिद्धिविधुरं भवेत् । भुवनान्युपकाराणां श्रेणिभिः प्रीणयत्यसौ ॥ प्रक्रान्तशैलीत्यागे तु भग्नप्रक्रम इष्यते । पयः पपुः बिसं जक्षुः बिससूनभृतः स्त्रियः ॥ सोऽक्रमः स्याद्यत्र पदं स्वस्थाने न प्रयुज्यते । शरणागत-संत्राता त्वं चरामो महीपते । विरुद्धरसयोर्व्यक्तौ उक्तोऽमतपरार्थकः ॥ आरुह्योरू मुनेर्व्यांघ्री चुम्बत्यसकृदाननम् ॥

1 अपुष्टकष्टौ व्याघाती पुनरुक्तश्च दुष्क्रमः । ग्राम्यः सन्दिग्धनिर्हेतू विरुद्धश्च प्रसिद्धितः ॥ विद्याविरुद्धोऽप्यनवीकृतश्च नियमच्युतः । च्युतश्च नियमेनान्यो विशेषाभाववान् परः ॥ अविशेषाभाववांश्च साकांक्षो पदमुक्तकः । भिन्नः सहचरा-दन्यः प्रकाशितविरुद्धकः ॥ विध्ययुक्तोऽनुवादेनायुक्तस्त्यक्तगृहीतकः । अश्लीलश्चेत्यमी दुष्टाः अर्थास्त्र्यधिकविंशतिः ॥

उत्कर्षं यो न पुष्णाति सोऽर्थोऽपुष्ट इति स्मृतः । उदयाचलकोटीगादुद्गच्छ-न्निन्दुरेधते ॥ कृच्छ्रेण गम्यते योऽर्थः स कष्ट इति कथ्यते । तर्कोयस्त्वाहमभ्यर्च्यं तत्फलोक्तावववाक स किम् ॥ व्याघाती पूर्वकथितविरुद्धार्थोपवर्णने । इन्दोः कलङ्किनस्तन्वि! त्वन्मुखेन्दुतुला कुतः ॥ पुनरुक्तं प्रतीतार्थकथनं स्याद्विनाफलम् । यथा स्कन्देन गिरिजा जयन्तेन यथा शची । तथा सुतेन सा रेजे तत्समेन हि तत्समा ॥ दुष्क्रमत्वं यथायोग्यं क्रमहीनार्थता मता । समुद्धरत्यसावद्रीन् पादपान् वा महाबलः ॥ अविदग्धैरुच्यमानस्त्वर्थो ग्राम्यो निगद्यते ॥ मयि सम्भोगसाकांक्षेऽप्यबले किमुपेक्षसे ॥

अर्थदोषस्य क्वचिददोषत्वम्—

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
संनिधानादिबोधार्थं स्थितेष्वेतत्समर्थनम्[1] ॥ १० ॥

अर्थदोषवत् पददोषाणामपि क्वचिददोषत्वम्, गुणत्वं च—

ख्यातेऽर्थे निर्हेतोः अदुष्टतानुकरणे तु सर्वेषाम् ।
वक्त्राद्यौचित्यवशात् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ[2]॥११॥

---

तात्पर्यग्राहकाभावात् सन्दिग्धोऽनवधारितः ॥ धर्मस्सेव्योऽथवा कामो भवन्तः कथयन्तु मे ॥ हेतुं विनोच्यते योऽर्थः स निर्हेतुरुदाहृतः । सन्नद्धा युद्धमभ्येत्य पलायन्त वलीमुखाः ॥ लोकादिभिः स्यात्प्रसिद्धिविरुद्धस्तु विरोधतः । कैलासः शिखरो यस्य स एष कनकाचलः ॥ विशेषापर्यवसितस्त्वर्थः स्यादनवीकृतः । किं विद्यया ? किं धनेन ? किमपत्यैः ? किमायुषा ? ॥ अवश्यवाच्यनियमरहितो नियमच्युतः । त्वया राजन्वती जाता नरनाथ ! वसुन्धरा ॥ वक्तव्यानियमानुक्तौ भवेदनियमच्युतः । कृष्णैव कबरी तन्व्या नर्मदा मे तदप्यहो ! ॥ अविशेषाभाववांस्तु विशेषपदबोधितः । माऽवमंस्थाः कपिरिति हताक्षो हि हनूमता ॥ पदार्थान्तरसापेक्षस्त्वर्थः साकांक्ष उच्यते । भीमो नामृष्यत तथा क्लिश्यमानां परैः प्रियाम् ॥ प्रकृतार्थविरुद्धोऽर्थो भवेदपदमुक्तकः । श्लाघ्यो रत्नाकरो नो चेत् लवणः क्वदुष्टता ॥ अतुल्येन सहोक्तोर्थो भिन्नः सहचरान्मतः । ज्योत्स्नेवेन्दुं मृषोद्येव धूर्तं सा न जहौ पतिम् ॥ प्रकाशितविरुद्धः स्यात् विरुद्धार्थप्रकाशने । आश्रिता विदुषो लक्ष्मीः त्वयि लालयति क्षमाम् ॥ विधेयत्वेऽनुवाद्यस्य विध्ययुक्त उदाहृतः । दुरीश्वराश्रयक्लेशमुक्ता त्वां श्रयते मही ॥ अनुवादायुक्तता स्यात् अयुक्तस्यानुवादतः । हरते पथिकप्राणान् जगत्प्राणोऽतिपातकी ॥ भवेत् त्यक्तगृहीतस्तु त्यक्तस्य स्वीकृतौ पुनः । तस्या एव स्मरत्येष तवास्तु विदितं सखि ! । तन्नाम्नैवाह्वयति मां इति रुद्धा रुदन्मुहुः ॥ अश्लीलः स्यात् स वाक्यार्थो व्रीडाद्यर्थसूचने । प्रविशत्युद्धतो वीरो रन्ध्रं दृष्ट्वा पुनः पुनः ॥

1 अपुष्टोऽर्थो न दोषाय प्रयोजनवशात् क्वचित् । विभान्ति पुष्पस्तबकैः लताः कान्ता इव स्तनैः ॥ महाकविप्रयुक्तेषु गतिरेषा निरूपिता । अतो जघनकाञ्चीति प्रयोज्यं नाधुनातनैः ॥ मधुरां गिरमाहेति विशेषणकृते भवेत् । विशेष्यमित्ययुक्तं यत् क्रियार्थत्वेऽपि तन्मतिः ॥ 2 हेतोरतिप्रसिद्धत्वेनि र्हेतोरप्यदुष्टता । वदनं वीक्ष्य

साक्षाद्रसविरोधिनो दोषाः—

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिः अनुभावविभावयोः ॥ १२ ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः ।
अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः ॥ १३ ॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः [1] ॥ १४ ॥

रसदोषाणां क्वचिददोषत्वम्—

न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।
सञ्चार्यादेः विरुद्धस्य बाध्यस्योक्तिर्गुणावहा [2] ॥ १५ ॥

---

तन्व्यङ्गयाः सरःपद्मान्यली जहौ ॥ सर्वेषामपि दोषाणामनुकारे न दोषता । मृग-चक्षुषमद्राक्षीदित्यादि यथयत्ययम् ॥ पश्यैष च गवीत्याह सुत्रामाणं यजेति च ॥ वक्त्राद्यौचित्यवशतो दोषोऽपि च भवेद्गुणः । दीधीवेवीङ्समः कश्चित् गुणवृद्ध्योरभाजनम् । क्विप्प्रत्ययनिभः कश्चित् यत्र संनिहितेन ते ॥ नीरसादौ क्वचिद्दोषः न दोषो नाप्यसौ गुणः । पर्जन्यः तर्जयामास गर्जितैरूर्जितैर्जनान् ॥

1 व्यभिचारि रसस्थायिभावानां शब्दवाच्यता । कष्टकल्पनया व्यक्तिः अनुभाव विभावयोः । प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः । अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः ॥ अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः । अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ 2 दृष्टे प्रियेऽस्या लज्जाभूत् रसतां च ययौ गतिः । व्यभिचारी रसः स्थायी त्रयो वाच्याः क्रमादिह ॥ लीलावनेऽस्य तन्वङ्गी याता नयनगोचरम् । इत्यादौ अनुभावस्य व्यक्तिः स्यात् कष्टक्लृप्तितः ॥ उत्कम्पतेतरामेषा मीलयत्यपि लोचने । भयानकसमत्वात् स्यात् विभावस्येह कष्टता ॥ व्याघ्रो व्यात्ताननो वर्त्मन्यास्ते मुग्धे ! क्व यास्यसि ? इत्यादौ प्रतिकूलस्य विभावादेः भवेद्ग्रहः ॥ ज्ञेया पुनःपुनः दीप्तिः प्रलपितादिषु । शृङ्गारवर्णने भानुमत्या दुर्योधनस्य तु । अकाण्डप्रथनं ज्ञेयं वेणीसंहार-नाटके ॥ भार्गवेण समं काष्ठां परां वीररसे गते । कङ्कणोन्मोचनायाहं गच्छामीत्युदिते रवौ ॥ रसच्छेदो महावीरचरितेऽकाण्ड इष्यते ॥ अप्रधानस्य बहुधा हयग्रीवस्य वर्णने ।

रसविरोधपरिहारोपायः—

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः [1] ॥ १६ ॥

रसविरोधपरिहारोपायान्तरम्—

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् [2] ॥ १७ ॥

इति काव्यप्रकाशमूलकारिकासु

सप्तमः उल्लासः

———

हयग्रीववधे काव्ये विज्ञेयोऽङ्गस्य विस्तृतिः ॥ रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सति । अङ्गिनोऽननुसन्धानं नायिकाविस्मृतेर्मता ॥ अदिव्यादिषु दिव्यादिगुणादिपरिकीर्तने । विद्वद्भिरिह विज्ञेयः प्रकृतीनां विपर्ययः ॥ प्रशंसनं कृतं राज्ञा वन्दिना वर्णितस्य यत् । तदनङ्गाभिधानं स्यात् सट्टके प्रथमाङ्कके ॥

1 न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् । श्रुतप्रियागतिर्बाला तथाऽजनि समुत्सुका ॥ सञ्चार्यादेः विरुद्धस्य बाध्यस्योक्तिर्गुणावहा । द्रष्टव्या सा महद्भिः स्यामपहास्यः क सा भवेत् ॥ 2 आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः । धनुर्धरं त्वामालोक्य पलायन्त रणात्परे ॥ रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः । यथा जीमूतवाहस्य शान्तस्याद्भुतमन्तरे ॥ निवेश्य शृङ्गाररसो नागानन्दे प्रकाशितः ॥ स्मर्यमाणो विरुद्धोऽपि रसो नैव प्रदुष्यति ॥ अयं स रशनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ विवक्षितो यः साम्येन विरुद्धरसोऽप्यदोषभाक् । नखैः प्रियाणां असिभिः वीराणां च विदारणम् ॥ शोभामङ्गेषु पुष्णन्ति तव सातिशयां समम् ॥ रसावन्यां गतां प्राप्तौ विरुद्धौ च न दुष्यतः । अलिप्तवपुषो वीराः लोहितैः हरिचन्दनैः । अलङ्कृता इवाभान्ति विवोढुं विजयश्रियम् ॥ अङ्गाङ्गिताजुषोश्चैवं अन्याङ्गत्वेऽप्यदुष्टता । कामीव त्वद्रिपुस्त्रीणां कान्तारे कण्टकिद्रुमः ॥ प्रगृह्य केशेष्वधरं व्रणयन् लिखति स्तनौ ॥

इति श्रीराजचूडामणिदीक्षितकृतकाव्यदर्पणकारिकासु

सप्तम उल्लासः

———

॥ श्रीः ॥

श्री मम्मटभट्टविरचितः

# काव्यप्रकाशः

आचार्यमाणिक्यचन्द्रविरचितया सङ्केतटीकया

रविभट्टाचार्यविरचितया मधुमतीटीकया

भावुकप्रियाख्यटिप्पण्या च समलङ्कृतः

## दोषदर्शनो नाम सप्तमः उल्लासः

—o—

**काव्यस्वरूपं निरूप्य, दोषाणां सामान्यलक्षणमाह[1]—**

---

### सङ्केतः

सङ्केतवर्त्मनाऽनेन सम्यग्घटनतत्पराः ।
नन्दयन्ति विदग्धानां मनांसि सुमनोगिरः[2] ॥

### मधुमती

अवसरसङ्गतिं प्रदर्शयन्नाह—**काव्यस्वरूपमिति** । काव्यस्वरूपनिरूपणेन दोषादिनिरूपणप्रतिबन्धकजिज्ञासापगमात् इति भावः । **सामान्यलक्षणमाहेति** । सामान्ये अविज्ञाते विशेषजिज्ञासानुदयादिति भावः ॥

### भावुकप्रिया

1 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इत्यत्र लक्षणांशे विशेष्यभूतं शब्दार्थस्वरूपं, लक्ष्यभूतकाव्यस्वरूपं च निरूप्य, तत्रैव लक्षणांशे विशेषणीभूतेषु दोषाभाव-गुणालङ्कारेषु काव्यशोभाविरोधिनां दोषाणामभावे प्रप्रथमं निरूपणीये तदङ्गतया दोषाणां विशेषलक्षणमभिधातुं सामान्यलक्षणमाहेत्यर्थः । 2 अयं श्लोकः 'ग' पुस्तके एतदुल्लासान्ते दृश्यते । तत्रापि—'सम्यक्पठन–ग, 'मदयन्ति'–ग.

## मुख्यार्थहतिर्दोषः,
## रसश्च मुख्यः, तदाश्रयाद्वाच्यः ।

---

### सङ्केतः

मुख्यार्थेति । एतेन रसापकर्षहेतुत्वं दोषाणां सामान्यलक्षणं उक्तम् । **तदाश्रयादिति** । तस्य—रसस्य आश्रयभूतत्वात् वाच्योऽपि अर्थोऽपि मुख्यः ।

### मधुमती

**ननु**—अनुद्दिष्टदोषलक्षणाभिधानमेवासङ्गतम् । न च वाच्यम्—दोषाभावस्य दोषरूपप्रतियोगिग्रहाधीनग्रहत्वेन दोषाभावलक्षणानुकूलतयैव दोषलक्षणाभिधानम्, दोषाभावश्च पूर्वमुद्दिष्ट एवेति । अथाप्यत्र दोषाभावस्यात्यन्तमलक्षणात्—इति चेत्—उच्यते । प्रकृते दोषलक्षणस्य शाब्दत्वेऽपि दोषाभावलक्षणस्यैव आर्थत्वात् ॥ अत्र च 'गुणाभाव एव दोषः' इति कस्यचिदभिधानं तु [1] विनिगमनाविरहादपास्तम् [2] । तर्हि गुणनिरूपणात् प्राक् दोषनिरूपणे किं बीजमिति चेत्—उच्यते । न हि मुख्यतया दोषनिरूपणं इह प्रस्तुतम्, किन्तु दोषाभावनिरूपणाङ्गतयैव । तत्र च उद्देश एव निमित्तम् । तत्रापि निमित्तप्रश्ने तु स्वतन्त्राभिप्रायः इत्येवोत्तरम् ॥

**मुख्यार्थहतिरिति** । मुख्यार्थस्य विघातकः—अपकर्षकः इत्यर्थः । ननु 'साक्षात् सङ्केतितोऽर्थो मुख्यः' इत्युक्तम् [3] । न च सर्वेषामपि दोषाणां तद्विघातकत्वम् । अत आह—**रसश्चेति** । तथा च अत्र प्रधानत्वमात्रं मुख्यत्वं [4] विवक्षितमित्यर्थः । नन्वेवं वाच्यादिदोषकथनं असङ्गतं स्यात्, वाच्यादेरमुख्यत्वात् इत्यत आह—**तदाश्रयादिति** । वाच्यस्य रसाश्रयत्वात्

---

1 'गुणविपर्ययात्मानो दोषाः' इति वामनोक्तमित्यर्थः । 2 'दोषविपर्ययात्मानो गुणाः' इत्यपि वक्तुं शक्यत्वादिति भावः । 3 'स मुख्योऽर्थः' इति द्वितीयोल्लासे उक्तम् । 4 अत्र मुख्यत्वं—इतरेच्छानधीनेच्छाविषयत्वम् ।

**उभयोपयोगिनः स्युः**
**शब्दाद्याः, तेन तेष्वपि सः ॥ ४९ ॥**

**हतिः—अपकर्षः[1] । ‘शब्दाद्याः, इति आद्य-ग्रहणात् वर्ण-रचने[2] ॥ ४९ ॥**

---

## सङ्केतः

‘अपि ’शब्दोऽत्र लुप्तः ज्ञेयः । **उभयेति** रसवाच्यौ । **तेष्वपीति** । न केवलं रसवाच्ययोः, किन्तु शब्दादिष्वपि स दोषः वाच्यः । शब्दादीनां रसे वाच्ये च उपयोगसद्भावात् **तेष्वपि सः** दोषः स्यादित्यर्थः ॥

## मधुमती

वाच्यदोषोऽपि रसदोषः, एवं शब्दवचनादीनां च वाच्याश्रयत्वात् एतद्दोषोऽपि रसदोष एवेत्यर्थः । साक्षात् परम्परया वा चमत्कृतिप्रतिबन्धकस्यैव दोषत्वात् इति । **हतिः**—हननम् । तच्च रसस्य न संभवतीति अन्यथा व्याचष्टे—**अपकर्षः** इति । तथाच—यद्विषयतया काव्यज्ञानं चमत्कारप्रतिबन्धकं तत्त्वं दोषत्वं इत्यर्थः । अत एव ‘सकलचमत्कारप्रतिबन्धकत्वं श्रुतिकटूवादौ अतिव्याप्तम् । तत्तच्चमत्कारप्रतिबन्धकत्वं तु अननुगतम् ।’ इत्यादिदूषण-मपास्तम् । न हीदं लक्षणं प्रतिबध्नात्येवेति नियमगर्भम् । किन्तु सम्भव-गर्भमेव । तेन रौद्रादौ प्रतिबन्धमकुर्वत्यपि श्रुतिकटूवादौ न दोषः । तथाच चमत्कारत्वावच्छिन्नप्रतिबन्धकत्वं न विवक्षितम् । किन्तु चमत्कारत्वाश्रय-प्रतिबन्धकत्वमेव । प्रतिबन्धश्च अनुत्पत्तिः, न तु नाशः । तेन दुष्टादपि काव्यात् दोषाज्ञाने चमत्कारोत्पत्तावपि न विरोधः ॥

---

1 अपकर्षः—स्वारसिकप्रतीतिप्रतिबन्धः । रस्यते इति व्युत्पत्त्या रसोऽपि मुख्यार्थभूतः प्रकृते व्यङ्ग्यसामान्यमेव । 2 रचना—सङ्घटना—आनुपूर्वी ।

विशेषलक्षणमाह—

दुष्टं पदं श्रुतिकटु
च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं
निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥
सन्दिग्धमप्रतीतं ग्राम्यं
नेयार्थं अथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं
विरुद्धमतिकृत् समासगतमेव[1] ॥५१॥

---

सङ्केतः

विशेषेति । दोषाणामिति शेषः । मुख्यतया रसे एव दोषाः, भक्त्या तु शब्दार्थयोः[2] । 'मुखे शब्दमुपलभामहे" इति नयेन आदौ

मधुमती

इदमत्रावधेयम्—ये तावत् योग्यताऽऽसत्त्याकांक्षाविरहपर्यवसायिनो दोषाः, ते वाक्यार्थज्ञानप्रतिबन्धद्वारा रसप्रतीतिप्रतिबन्धकाः । कट्वादयस्तु न तथा । तेषां असामर्थ्यादेव अव्यञ्जकत्वात् । ते च साक्षादेव चमत्कार-प्रतिबन्धकाः । यथा हि नैयायिकैः—"पर्वतो वह्निमान् धूमात् इत्यादि-न्यायवाक्यादेव अन्वयबोधः, न तु तत्समानार्थकादपि पर्वतेऽग्निर्धूमो यतः

---

1 क्लिष्टादित्रयं समास एव दुष्टम् । इतराणि तु समासे व्यासे च दुष्टानि भवन्तीत्यर्थः । 2 तदुपकारिणोरिति शेषः ।

तत्र–श्रुतिकटु=परुषवर्णमयं दुष्टं[1] यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गि[2]तरङ्गितैः ।
आलिङ्गितः स तन्व्यङ्ग्या कार्तार्थ्यं लभते कदा[3] ॥ १४२ ॥

अत्र—'कार्तार्थ्यं' इति[4] ॥

---

## सङ्केतः

शब्दप्रतीतिः, तत्पूर्वाश्च सर्वाः रसार्थादिप्रतीतयः इति । शब्दोऽप्ययं पदवाक्यरूपं इत्यतः सूत्रक्रममुल्लङ्घ्य प्राक् पददोषानाह—दुष्टमिति । अथेति । क्लिष्टाद्याः त्रयः समासपदेष्वेव दुष्टाः स्युः, नान्यत्रेत्यर्थः ॥

अनङ्गेति । अनङ्गमङ्गलगृहस्य अपाङ्गस्य भङ्ग्या[5]—विच्छित्त्या, तरङ्गितैः युक्तया, कार्तार्थ्यं—कृतार्थताम् ॥

## मधुमती

इत्यादितद्विसदृशाकारात् वाक्यात्" इति कथकसम्प्रदायानुरोधात् अङ्गीक्रियते, तथा—श्रुतिकटूत्वादिदोषरहितादेव पदादेः चमत्कारः, न तु अतथाभूतात् इति आलङ्कारिकसम्प्रदायानुरोधात् अङ्गीकार्यमेव; विशेषाभावात् इति ॥

यद्यपि—'मुख्यार्थहतिः दोषः' इति स्वरसात् प्रथमं रसदोषः, ततः शब्दादिदोषश्च अभिधातुमुचितः । तथापि रसाभिव्यक्त्यानुगुण्येन शब्दार्थयोः प्राधान्यं विवक्षित्वा, तत्रापि अर्थापेक्षया शब्दस्यैव प्राधान्यमित्यभिप्रेत्य च वृत्तिकृत् तथैव दोषान् निरूपयति—दुष्टमिति । श्रुतिकटूत्वादिकं दुष्टमित्यन्वयः ॥

परुषेति । श्रुतिवैरस्याधायकशब्दत्वं श्रुतिकटुत्वम् । अत्रेति ।

---

1 अर्थालोचनमन्तरा श्रवणमात्रेणैव रसभङ्गहेतुत्वात् अस्य प्राथम्यम् । 'वर्णरूपं कष्टम्'–क. 2 'भङ्ग'–क. 3 काचन कुट्टनी कयोश्चिद्यूनोः समागमं निरीक्षते–सः युवा मन्मथोत्सवमन्दिरायमाणानां कटाक्षाणां विविधपरम्पराभिः परिपूर्णया अनया तरुण्या आलिङ्गितः सन् कदा वा कृतार्थतां लभते इति । 4 इदं पदं शृङ्गारानुगुणमाधुर्यव्यक्तिप्रतिबन्धद्वारा रसाभिव्यक्तिप्रतिबन्धकमित्यर्थः । 5 'भङ्गस्य'–ग.

च्युतसंस्कृति=व्याकरणलक्षणहीनं यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-[1]
प्रान्तं हन्त ! पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
तत् पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं[2] त्वामनुनाथते, कुचयुगं पत्रावृतं मा कृथाः[3] ॥१४३॥

---

### सङ्केतः

**व्याकरणेति**। न तु छन्दःप्रभृतिलक्षणहीनम्। तस्य विरत्यादिरूपत्वेन अपदविषयत्वात्। **एतदिति**। तिन्दुकफलं, तद्धि अस्य टिम्बरूपमिति[4] ख्यातिः। तदिव श्यामोदरं आपाण्डुरप्रान्तं च। अयं भावः—

### मधुमती

माधुर्यव्यञ्जनसमुचितायां रचनायां 'वर्णाः' इत्यादिवत्, रेफमकारयोः लघ्वन्तरितयोरेव उचितत्वेन, प्रकृते गुर्वन्तरिततया 'कार्तार्थ्य'पदं दुष्टम्। यत्र वर्णान्तरपदान्तराणामुचितत्वेऽपि एकानुचितपदज्ञानात् माधुर्यमनुभूयते तत्र पददोषः, यत्र तु नानापदज्ञानादेव वैरस्यानुभवः तत्र वाक्यदोषः। एतच्च प्रतिकूलवर्णलक्षणवाक्यदोषे स्फुटीभविष्यति ॥

**व्याकरणेति**। एतच्च सति संस्कारे द्रष्टव्यम्। तेन अपभ्रंशनिर्मितकाव्ये न व्यभिचारः। तस्यापि संस्कृतस्येव काव्योपयोगात्। **कुचयुगमिति**। कुचयुगावलोकनोद्दीपितमन्मथाः शबरयुवानः न प्रहरन्तु—

---

1 'पाण्डुर'–क. 2 'र्थनादीनं'–क. 3 तरुण्याः कुचयुगं दिदृक्षुः कश्चन वदति—अयि पुलिन्दाधिपकन्ये! सहजविपक्वतिन्दुकफलवत् श्यामलाग्रभागं ईषत्पाण्डरप्रान्तभागं च दृश्यमानं एतत् त्वदीयं स्तनयुगं सत्यं वनेचरकरोपलालनसमर्थं लक्ष्यते। तदेतत् किसलयावृतं मा कुरु इति अत्रत्यः करिसमूहः स्वकीयकुम्भस्थलाभयप्रार्थनाकातरः सन् त्वां प्रार्थयते, यतः—त्वदीयकुचदर्शनासक्तमनसः शबरयुवानः आत्मनो न हन्युः इति ॥ 4 'तचास्य दिम्बरूकमिति'–घ.

अत्र—'अनुनाथते' इति। 'सर्पिषो नाथते' इत्यादौ[1] आशिष्येव नाथतेः आत्मनेपदं नियमितं[2]— "आशिषि नाथः"[3] इति। अत्र तु याचनं अर्थः। तस्मात् 'अनुनाथति स्तनयुगं' इति पठनीयम्॥

---

## सङ्केतः

यथा स्तनतटीदर्शनात् सरागाः सन्तः त्वां भजन्तः च्युतवीर्यतया, कुम्भिकुम्भान् न भिन्दन्ति भल्लाः इति। अत्र, काप्यन्यत्र च "पदैकदेशोऽपि पदम्" इति न्यायात् अनुनाथते इति पददोषत्वम्। यत्तु—"अपास्य च्युतसंस्कारमसमर्थम्" इत्यत्र च्युतसंस्कारादिवर्जनं चक्रे तत् वाक्यविषयमेवं, न तु पदांशविषयम्। पदांशविषयता तु प्रपञ्चायोक्ता। यावता तु पदविषयतयैव सिद्ध्यतीति॥

## मधुमती

इति वा, अवलोकितत्वत्कुचाः इमे इभकुम्भे तद्भ्रान्तिभाजो न प्रहरन्तु इति वा अभिप्रायः॥ सर्पिष इति। "आशिषि नाथः"[3] इत्यस्य—'सिद्धे सत्यारम्भो नियमार्थः' इति नियमपरत्वलाभात्॥ अत्र च—नाथतेः आशिष्येव आत्मनेपदमेवेति, अन्यत्र तु अनियमः इति च नियमः। अत एव—

'नाथसे किमु पतिं न भूभृताम्।'[4]

इत्यादावपि च्युतसंस्कारत्वमेव। तेन अत्र नेदमुदाहरणम्। किन्तु अन्यदेवेति बोद्धव्यम्॥

---

1 'सर्पिषोऽनुनाथते इत्यादाविव'–ख. 2 'दं विहितम्'–क. नाथृधातोरनुदात्तेत्वादेव सिद्धे आत्मनेपदे पुनर्वार्तिकेन आत्मनेपदविधानं 'नाथतेः आशिष्येवात्मनेपदं' इति नियमार्थमिति कल्प्यते इति भावः। 3 ('क्रीडोऽनुसंपरिभ्यश्च' पा. सू. १-३-२१ इति सूत्रे वार्तिकम्)। 4 (किरातार्जुनीये १३-५९)।

अप्रयुक्तं=तथा आम्नातमपि कविभिरनादृतम्। यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा[1] ॥ १४४॥

अत्र 'दैवत'शब्दः "दैवतानि पुंसि वा"[2] इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते॥

## सङ्केतः

दैवत इति। देवताधिष्ठातेति यावत्। 'दैवतानी'ति बहुत्वं तु लिङ्गानुशासने पूर्वपदसंलग्नत्वात्॥

## मधुमती

तथेति। अत्र—यत्किञ्चिदप्रयोगस्य अतिप्रसक्तत्वात् सकलाप्रयोगस्य दुर्निरूपत्वात्, अस्मिन्नेव पद्ये प्रयोगेण दूषणस्यैवासम्भवाच्च अन्यथा व्याचष्टे—अनादृतमिति। तथाच काव्यादराविषयत्वं अप्रयुक्तत्वमित्यर्थः सम्पद्यते। तदादरस्तु तदेकवाक्यतागम्यः। तथाच यत्प्रयोगे कवीनां विप्रतिपत्तिः तत्त्वं अप्रयुक्तत्वम्। न हीयं विप्रतिपत्तिः विगीतिप्रयुक्ता। सकलकाव्यान्तर्वर्तिपदानां अविगानेन प्रयोगात्। किन्तु क्वाचित्कत्वप्रयुक्ता। अत एव महाकविकाव्यावेक्षणं पूर्वमुक्तम्। वस्तुतस्तु—अज्ञायमानैककविप्रयोगविषयत्वमेव सम्मतम्। अज्ञानघटितत्वेन चास्य अनित्यदोषत्वम्। अत एव बहुप्रयोगज्ञानदशायां तत एव पदात् चमत्कारः, अप्रयुक्तत्वज्ञानदशायां तु प्रयुक्तपदज्ञानादपि चमत्काराभावश्च। एकत्वं च कविविशेषणम्। तेन एककविकृतनानाप्रयोगमादाय न दोषः॥

---

1 यतोऽयं सर्वैरपि सर्वदा क्रूरवृत्तिरित्येव विभाव्यते, अत एव अयं दैवतपिशाचराक्षसेष्वन्यतमेनाविष्टः स्यादित्येव मन्ये इत्यर्थः। 2 (ना. लिं. १-१-६)।

**असमर्थं**=यत् तदर्थं[1] पठ्यते, न च तत्रास्य शक्तिः[2]।

यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।[3]
सुरस्रोतस्विनीमेषः हन्ति सम्प्रति सादरम्[4] ॥ १४५ ॥

अत्र—'हन्ती'ति गमनार्थम् ॥[5]

**निहतार्थं**=यत् उभयार्थं अप्रसिद्धेऽर्थे प्रयुक्तम्[6]।

## सङ्केतः

असमर्थमिति। अर्थान्तरात् व्याघाताभावे अप्रयुक्तम्, अर्थान्तरेण इष्टार्थस्य व्याघाते स्वस्य चानुपपत्तौ असमर्थम्। यथा—**हन्ति** इत्यत्र गत्यर्थं वधार्थः व्याहन्ति, स्वयं च न घटते, गङ्गायाः वधानुपपत्तेः। निहतार्थं तु अर्थान्तरं घटतेऽपि, पादप्रहारे रुधिरसंभवात् ॥

## मधुमती

यत्तदर्थमिति। येन रूपेण यत् पठ्यते तेन रूपेण तत्राशक्तमित्यर्थः। न चैवं द्विरेफादिपदस्यापि तत्त्वापत्तिः, शक्तिपदेन तत्तुल्यवृत्तेरभिधानात्। तत्र च तस्य निरूढलाक्षणिकत्वात्। प्रकृते च हन्तेः केवलस्य गमने प्रयोगाभावेन शक्तिलक्षणयोरन्यतरस्यापिकल्पयितुमशक्यत्वात् ॥

---

1 'यदर्थं'—क. 2 'पदार्थादियत्किञ्चित्सहकारसम्पत्त्यैव विवक्षितार्थबोधकमित्यर्थः। 3 'सत्क्रियः'—क. 4 इतरेष्वनेकेषु तीर्थेषु मुहुर्मुहुः स्नानात् सम्पादितपुण्यराशिरयं इदानीं प्रीत्या गङ्गां प्रति गच्छति इत्यर्थः। 5 हिंसायां शक्तं गमने प्रयुज्यमानमसमर्थमित्यर्थः। 6 यत्र शक्त्या योगेन वा उभयार्थं अप्रसिद्धेऽर्थे प्रयुज्यते, तत्र प्रसिद्धोऽर्थः अप्रसिद्धार्थेन प्रथमप्रतीतेन निहन्यते व्यवधीयते इति निहतार्थमित्यर्थः।

यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिरभ्य चुम्बिता[1] सहसा[2] ॥१४६॥

## मधुमती

**यद्यपि**—केवलस्य इङ् धातोः अध्ययन इव सादिलाक्षणिकपदानां तत्तदर्थे पाठ एव नास्तीति न दोषः । एवं च पद्धतिजघनजङ्घादौ हन्तेः गमनमप्यर्थः प्रतीयते । पद्भ्यां हन्यते इति पद्धतिः इति, जङ्घन्यते अनयेति जङ्घा इति च व्युत्पत्तेः । तथापि तत्तदुत्तरहन्तित्वेन तत्र औपसन्दानिकी[3] शक्तिरेव, न तु हन्तित्वेन । धातुमध्ये तु तथैव पाठः, इति[4] एषाम-समर्थत्वम् ॥ **केचित्तु**—भवतु तस्य तत्र शक्तिः बाहुल्येन तु न प्रयोगः इत्यसमर्थत्वमित्याहुः । **अन्ये तु**—केवलं योगमाश्रित्यैव यत्पदं प्रयुज्यते तदसमर्थम् । यथा जलधरपदं समुद्रे इत्याहुः ॥ अत एव अप्रयुक्तादस्य भेदः । तस्य क्वचिदप्यप्रयोगात् इत्यपि वदन्ति ॥ अप्रयुक्तनिहतार्थयोरपि शक्तिमत्त्वं वर्तते एव ॥ **वस्तुतस्तु**—वैयाकरणानामिव आलङ्कारिकाणामपि सुप्तिङन्तत्वमेव पदत्वम् । न तु शक्तत्वम् । असमर्थादयस्तु पददोषाः । तथाच पदमात्रमेवाशक्तमिति, घातयतीत्यादौ गमनस्याप्रतीतिः । यदर्थमिदं पठ्यते, यदर्थं चेदं प्रयुज्यते, नैवास्य तत्र शक्तिः, न चागृहीतशक्तेः झटिति तदर्थोपस्थापकत्वमिति नास्य निहतार्थत्वम् । द्वयोरप्यनयोः उपाधिभेदेन उपधेयसङ्करेऽप्यदोषात् । झटित्यप्रतीतिश्च प्रसिद्धान्वयबोधापेक्षया, शक्या-न्वयबोधापेक्षयेव लक्ष्यस्य । तत्र च लाक्षणिकानां च प्रयोगोऽपि नास्तीति, तत्र दोषः इति युक्तमुत्पश्यामः ॥

---

1 'परिचुम्बिता'—ख. 2 मानिन्याः प्रियायाः पादयोः पतितः दयितः तस्याः लाक्षारसार्द्रचरणघातेन अरुणीकृतकेशोऽपि, अनुपदमेव स्वपादेन दयितप्रहरण-मनुचितमिति मान्वानां भयेन च व्याकुलां तां दृष्ट्वा मुग्धां विभाव्य तां तत्क्षणमेव आलिङ्गनपूर्वकं अचुम्बदित्यर्थः । शोणशब्दात् तत्करोतीतिण्यन्तात् क्तप्रत्यये योगः । 3 उपसन्दानं—यत्किञ्चित्पदान्तरस्य अर्थान्तरस्य वा सहकारः । उपसन्धानमित्यप्यग्रे-प्रयुज्यते । 4 हनहिंसागत्योरिति पाठमात्रमादाय तदर्थे तत्प्रयोग इति हेतोरित्यर्थः ।

अत्र—'शोणित'शब्दस्य रुधिरलक्षणेनार्थेन उज्ज्वलीकृतत्वरूपः अर्थः व्यवधीयते ॥

अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तां आशु गतिं यशस्विनः
रणाश्वमेधे पशुतां उपागताः[1] ॥ १४७॥

अत्र—'पशु'पदं कातरतां अभिव्यनक्तीति[2] अनुचितार्थम् ॥

---

## सङ्केतः

शोणितेति । शोणिताः वर्णान्तरापादिताः, अत एव उज्ज्वलाः कान्तिमन्तः कचाः यस्य । अन्योऽप्यर्थः—प्रहारात् यत् शोणितं, तद्युक्ताः कचाः यस्य । यद्वा – काश्मीरभाषया उज्ज्वलशब्दः अरुणार्थः ॥

## मधुमती

अत्र शोणितेति । यद्यपि यावकेत्यादिपदस्य सामासिकतया समासगतदोषप्रकरणान्तर्भावः, पदैकदेशान्तर्भावो वा । तथापि असमस्तस्यापि शोणितशब्दस्य तथात्वात् विग्रहदशायां उदाहरणत्वं विवक्षितम् । उपाध्यसाङ्कर्येण अप्रयुक्तसाङ्कर्येऽपि न दोषः ॥

अनुचितार्थमिति । उपश्लोक्यापकर्षव्यञ्जकपदमित्यर्थः[3] । अत्र च—पशुतामुपागताः इति निदर्शनालङ्कारेण[4] उपमाक्षेपिपशुपदात् पशु-

---

1 सत्रिणः=याज्ञिकाः । रणमेवाश्वमेधः, तत्र तनुत्यजः इत्यर्थः । वीराणां स्वर्गावाप्तिः सुलभेति भावः । 2 'रणे धीरं' इत्युक्तिविरोधादिति भावः । 3 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राट् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति श्लाघनीयगतेः विषये अपकर्षभावनस्यायुक्तत्वादिति भावः । 4 'पदार्थयोः सदृशयोः ऐक्यारोपो निदर्शना ।' उपमानोपमेययोः अन्यतरस्मिन् अन्यतरधर्मारोपः पदार्थवृत्तिनिदर्शना ।

निरर्थकं=पादपूरणमात्रप्रयोजनं 'चा'दिपदम् ।

यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!
अभिवाञ्छितं प्रसिद्ध्यतु भगवति! युष्मत्प्रसादेन[1] ॥१४८॥

अत्र 'हि' शब्दः ॥

---

### सङ्केतः

सत्रिभिः याज्ञिकैः ॥

**युष्मदिति ।** **गौरीं** एकत्वेन आमन्त्र्य युष्मत् इति बहुत्वं च असत् ॥

### मधुमती

साम्यप्रतीतेः अनौचित्यम् ॥

**पादेति ।** पादपूरणमात्रप्रयोजनकाव्ययत्वमित्यर्थः[2] । अत्र **मात्र**-पदोपादानात् न समुच्चयार्थकाव्ययशब्दे अतिव्याप्तिः अव्ययत्वेन विशेषणात् न अधिकपदेऽतिव्याप्तिः । पूर्ववच्छब्दस्य विवक्षाविशेषेण पदैकदेशत्वाभिधानेऽपि अत्र स्ववर्गत्वेन पदेनाभिधानमविरुद्धम् । **अत्र हीति ।** अवधारणादेः तदर्थस्य अत्र अविवक्षितत्वादिति भावः ॥

---

1 मलयवती गौरीं स्तौति । (नागानन्दे १-१३) । 2 'तु हि च स्म ह वै पादपूरणे' इत्यमरः ।

अवाचकं यथा—

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः[1] ॥ १४९ ॥

अत्र 'जन्तु' पदं अदातर्यर्थे विवक्षितम्, तत्र च नाभिधायकम् ॥

---

## सङ्केतः

अवन्ध्येति विहन्तुः इति च पदाभ्यां सामर्थ्योदारत्वे लभ्येते । न ह्यसामर्थो भयकारी, कृपणश्च विपद्धाती[2] । एतदेव व्यतिरेकेणाह—अमर्षेति । हार्दम् मैत्री ॥

## मधुमती

अवन्ध्येति । अमर्षशून्येन विद्विषा जनस्य दरः भयं न, जातहार्देन जन्तुना आदरोऽपि न इत्यर्थः । अत्र चेति । यद्यपि अस्वानभिधायकत्वरूपशक्तिरहितप्रकृतिकत्वं उदाहृतजन्तुपदे एव अव्याप्तम् । जन्तुत्वेन रूपेण तस्यापि अदातरि शक्तत्वात् । एवं असमर्थे लाक्षणिकपदे च अतिव्याप्तं च । अत एव न तात्पर्यविषयप्रकारकशक्तिरहितप्रकृतिकत्वमपि । शक्तिपदस्य तत्तुल्यवृत्तिपरत्वे सादिलाक्षणिकपदेऽतिव्याप्तेः दुष्परिहरत्वात् । न च वृत्तिमात्रपरत्वम् । जन्तुपदस्यापि अदातरि लक्षणासम्भवात्

---

1 अपराधिनि विग्रहपर्यवसायिकोपस्य, तथा सुहृदि अर्थप्रदानेन दारिद्र्यविद्रावकस्य च राज्ञो विषये मानवाः सर्वेऽपि स्वस्वाधिकाराप्रमादिनो भवन्ति । अपराधिन्यपि कोपरहितात् भयं वा, सुहृदां दारिद्र्येऽपि अर्थप्रदानशून्येन जातस्नेहेन साकं बहुमानो वा जनस्य नैव भवेदित्यर्थः । (कि. अ. १-३३) । 2 'लभ्ये । तेन ह्यमर्षोऽभयकारी कृपणश्च विपद्यते'—ग.

यथा वा—

हा धिक्! सा किल तामसी शशिमुखी, दृष्टा मया यत्र सा,
तद्विच्छेदरुजाऽ[1]न्धकारितमिदं दग्धं दिनं कल्पितम् ।

## सङ्केतः

**हा धिगिति ।** अनेकार्थत्वात्—**तामसी** रात्रिः, **तामसी** तमोमयी इति आवृत्त्या, यस्यां **तामस्यां** निशि सा इन्दुमुखी **दृष्टा** सा धात्रा तामसी तमोमयी चक्रे; यत्र तु **दिने** सा वियुक्ता तत् **दिनं** प्रकाशमयं चक्रे, इति

## मधुमती

अव्याप्तितादवस्थ्यापत्तेः । तथापि—तात्पर्यविषयीभूतप्रकारकप्रतीत्यप्रयोजकत्वमेव लक्षणं विवक्षितम् । जन्तुपदेन च शक्त्या जन्तुत्वेनैव रूपेण अदातृज्ञानजननात्, अदातृत्वस्य च तात्पर्यविषयत्वात्, लक्षणायामपि जन्तुत्वेन रूपेणैवामीषामुपस्थितेः । अत एव "स्रोतस्त्वेनैव तीरोपस्थितिः" इत्युक्तम्[2] ॥ असमर्थे तु उपस्थितिमात्रविरह एवेति ततोऽस्य भेदः ॥

ननु—जन्तुसामान्यवाचकं जन्तुपदं प्रकृते अदातृत्वरूपार्थान्तरे सङ्क्रमितम्, सर्वप्रकारानुपास्यत्वप्रतीतिश्च प्रयोजनमिति क्व अवाचकत्वम्? इति चेत्—सत्यम् । 'गङ्गादिपदेनापि लक्षणया स्रोतस्त्वेनैव तीरप्रतीतिः न तु तीरत्वेन' इति मतेन इदमुदाहृतम् । एतन्मते जन्तुपदेन लक्षणयाऽपि अदातृत्वप्रकारकप्रतीत्यभावात् । अत एवास्वरसादाह—**यथा वेति । शशिमुखीति ।** शशयेव मुखं यस्याः इति विग्रहः । तेन प्रकाशमयत्वं लक्ष्यते । तेन—तत्समागमे तमोमय्यपि निशा प्रकाशमयी, तद्विरहे तु प्रकाशमयमपि दिनं तमोमयम्—इति प्रतीयते । केचित्तु—'सा शशिमुखी

---

1 'तद्विश्लेषरजो'–क. 2 (काव्यप्रकाशे द्वि० उ०) ।

किं कुर्मः ? कुशले[1] सदैव विधुरो धाता, न चेत् तत् कथं
　ताहृग् यामवतीमयो भवति मे नो जीवलोकोऽधुना ? [2] ॥

अत्र—'दिनं' इति प्रकाशमयमित्यर्थे अवाचकम् ॥

यच्च उपसर्गसंसर्गात् अर्थान्तरगतं तदप्यवाचकम् । यथा—

जङ्घाकाण्डोरुनालः नखकिरणलसत्केसरालीकरालः
　प्रत्यग्रालक्तकाभाप्रसरकिसलयः मञ्जुमञ्जीरभृङ्गः ।

---

## सङ्केतः

अहो! धातुः कुशले सत्कर्तव्ये वैमुख्यं इत्यर्थः । दिनशब्दस्तु अनेकार्थत्वाभावेन प्रकाशमयत्वस्यावाचकः [3] इति आवृत्त्याऽप्यत्र दिनशब्दस्य अवाचकता, पूर्वत्र तु नैवम् ॥

## मधुमती

तरुणी यत्र दृष्टा' इत्यर्थः इति वदन्ति । अत्रेति । इदमुपलक्षणम्—प्रथमव्याख्याने 'शशिमुखी' इति पदमपि अवाचकं बोद्धव्यम् ॥

न च अत्रापि दिनादिपदं प्रकाशमयत्वाद्यर्थे लाक्षणिकमिति वाच्यम् । उपादानलक्षणासामग्र्यभावेन प्रकृते लक्षणलक्षणैव वाच्या । तत्र च दिनत्वेनैव तदुपस्थितेः वाच्यत्वेन तद्दोषतादवस्थ्यप्रसङ्गात् । अत एव अस्वरसादाह—

---

1 'कुशलैः'–क.　2 रात्रौ स्वप्ने प्रियतमां दृष्टवतः कस्यचिदुक्तिरियम् । यत्र रात्रौ सा दृष्टा सा रात्रिः तमोमय्यपि ज्यौत्स्न्येव । तद्दर्शनशून्यमिदं दिनमपि तद्वियोगवेदनया सञ्जातान्धकारं दग्धप्रायमिति भावः । विधिः इष्टे विषये सदैव प्रतिकूलः इति ।　3 'त्वेऽवाचकः'–ग.

भर्तुः नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवः दण्डपादो भवान्याः[1] ॥
अत्र—दधत् इत्यर्थे 'विदधत्' इति ।
'अश्लीलं त्रिधा' इति, व्रीडा–जुगुप्सा–अमङ्गल-
व्यञ्जकत्वात् । यथा—
साधनं सुमहत् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥१५२॥

---

## सङ्केतः

**विदधत्** विशेषेण बिभ्राणः । दण्डेति । नृत्ये झगिति पादोर्ध्वीकरणं **दण्डपादः**, दण्डरूपत्वात् ॥

**अरालितां** कुटिलताम् ।

## मधुमती

**यथेति** । स्त्रीणां ताण्डवपर्युदासादाह—**भर्तुरिति** ।

'झटित्यूर्ध्वीकृतः पादः दण्डपादोऽभिधीयते' ।[2]

**अत्र दधदिति** । विपूर्वात् धाञः करणे एव तात्पर्यनियमः इति, लक्षणयाऽप्यत्र नार्थान्तरप्रतीतिः । अत एव चात्र दधातेः अनेकार्थत्वाभावात् न निहतार्थत्वासमर्थत्वयोः सङ्करः ॥

**त्रिधेति** । अत्र व्रीडादिदायित्वं प्रत्येकमेव दोषः, प्रत्येकज्ञानादेव चमत्कारोदयात् । इदं त्ववधातव्यम्—भाषानिबन्धनं यदश्लीलं, तत् तद्देशनियतम् । तत्र—संस्कृतनिबन्धनं तु सकलदेशदूषणम् । प्रकृतार्थे विरुद्ध-

---

1 परमेश्वरस्य नृत्तं पार्वती यदा अनुकरोति तदा अस्याः उद्धृतं पादं सरोवरगतपद्माकारतया वर्णयति—जङ्घेति । 2 नाट्यशास्त्रे ।

लीलातामरसाहतोऽन्यवनितानिश्शङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता[1] ॥

मृदुपवनविभिन्नः मत्प्रियायाः विनाशात्
घनरुचिरकलापः निस्सपत्नोऽद्य[2] जातः ।
रतिविगलित[3] बन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे किं हरेदेष बर्ही[4] ॥ १५४ ॥

अत्र साधन-वायु-विनाशशब्दाः व्रीडादिव्यञ्जकाः ॥

---

### सङ्केतः

लीलेति । अत्र अन्यवनिता सपत्नी ।

विनाशात् अभावात्, अदर्शनादिति यावत् । निस्सपत्न इति । तदभावाद्धेतोः घनरुचिरः निस्सपत्नः जातः इत्यर्थः । अस्य बर्हिणः । अत्र श्लोके 'घनरुचिर' 'अस्य' इत्यादिस्थानेषु अन्यान्यपि दूषणानि अप्रकृतत्वात् अनुक्तानि स्वयमूह्यानि । एवमग्रे पश्चादपि ज्ञेयम् ॥

### मधुमती

व्यञ्जकत्वं अश्लीलत्वम् । तच्च सकलानुगतम्, तज्ज्ञानं चैतद्दूषकम् । विरुद्धमतिकृति तु शक्त्या विरुद्धार्थप्रतीतिः, अत्र तु व्यञ्जनया इति भेदः इत्यपरे ॥

---

1 (अमरुशतके ७२)। 2 'लोद्य'–क. 3 'विलुलित'–ख. 4 ऊर्वशी-विरहे पुरूरवसः उक्तिरियम् । (विक्रमोर्वशीये ४-२२) ।

सन्दिग्धं यथा—

आलिङ्गितः तत्रभवान् सम्पराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १५५ ॥

अत्र–'वन्द्यां' इति किं हठहृतमहिलायाम्? किं वा नमस्याम्? इति सन्देहः ॥

अप्रतीतं यत् केवलं शास्त्रे प्रसिद्धम् । यथा—

सम्यग् ज्ञानमहाज्योतिर्दलिताशयता[1]जुषः ।
विधीयमानमप्येतत् न भवेत् कर्म बन्धकम् ॥ १५६ ॥

अत्र–'आशय'शब्दः वासनापरपर्यायः योगशास्त्रादावेव प्रसिद्धः[2] ॥

---

## सङ्केतः

वन्द्यामिति द्वितीया-सप्तम्यन्ततया सन्देहः ।

अप्रतीतमिति । योगशास्त्रादावेव प्रसिद्धिः, न तु काव्यलक्षणादौ । अप्रयुक्तस्य तु सर्वशास्त्रप्रसिद्धावपि कवीनामनादृतिरेव[3] प्राणाः इति । सम्यग्ज्ञानेन महाज्योतिषा दलितः विघटितः आशयः वासना सुखदुःखे यस्य, तस्य भावः तत्ता । वासना हि सुखदुःखे । यद्वा—दलितः विकासी आशयः यस्य । विशदाशय इति यावत् । एतत् प्रस्तुतं किञ्चित् न कर्मणः बन्धकम् । यद्वा—एतत् कर्म पापं अस्य न बन्धकमित्यर्थः ॥

## मधुमती

किं हठेति । तथा च अनिर्धारितार्थकपदत्वं सन्दिग्धत्वम् । तदनिर्धारिणं च तात्पर्यसन्देहात् ॥

केवलमिति । अत्र शास्त्रपदं अलङ्कारशास्त्रातिरिक्तशास्त्रपरम् । प्रसिद्धं तन्मात्रप्रसिद्धार्थकम् । तथाच नोभयप्रसिद्धार्थके अलङ्कारशास्त्रमात्रप्रसिद्धार्थके वा दोषः । अत्रेति । मिथ्याज्ञानजन्यसंस्काररूपा वा,

---

1 'गलिताशयता'–क. 2 'क्लेशकर्मविपाकाशयैरपरामृष्टः (यो. सू. १-२४) इत्यादावित्यर्थः । 'प्रयुक्तः'–क. 3 'मनावृत्तिः'–ग.

ग्राम्यं यत् केवले लोके स्थितम्[1]। यथा—

राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम्।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १५७ ॥

अत्र—'कटिः' इति ॥

## मधुमती

यागादिजन्यापूर्वरूपा वा या वासना, तत्रैव आशयशब्दः योगशास्त्रे सङ्केतितः इत्यर्थः ॥ यद्यपि—शास्त्रान्तरमात्रप्रसिद्धार्थकत्वज्ञानं न दोषः। तथापि अविज्ञातार्थकत्वं अनेन उपलक्षितम्। तच्च कथमप्यगृहीतशक्तिकत्वम्। न चैवं—व्यङ्ग्योपस्थितिप्रतिबन्धकज्ञानविषयत्वरूपं सामान्यलक्षणं तत्राव्याप्तं स्यात्, शक्तेरग्रहे सामग्रीविरहादेव पदार्थानुपस्थितेः व्यङ्ग्यानुपस्थितिसम्भवेन अगृहीतशक्तिकत्वज्ञानस्य अप्रतिबन्धकत्वात् इति वाच्यम्। व्यङ्ग्योपस्थिति-प्रतिबन्धकतावच्छेदकरूपवत्त्वस्य सत्त्वात्। तच्च क्वचित् पदार्थानुपस्थाप-कत्वेन, क्वचित् विलम्बोपस्थापकत्वेन, क्वचित् साक्षाद्रसविरोधितयेति भेदः। प्रकृते तु पदार्थानुपस्थापकत्वेनेति ध्येयमित्याहुः। तेन च नासमर्थसाङ्कर्यम्। तत्र उपसन्दाने सति शक्तिग्रहात्। अत एव च अविज्ञातार्थस्य स्वयं विमर्शे दोष एव ॥

केवले लोके प्रसिद्धं चमत्कारकारि। यथाश्रुते—शास्त्रेऽपि कटि-शब्दस्य प्रसिद्धिसत्त्वात् असङ्गतिः स्यात्। तन्मात्रस्य चमत्कारकारित्वं च वस्तुस्वभावात्। न च व्रीडाव्यञ्जकाश्लीलसङ्करः। उपाधेरसङ्करात्। न च व्रीडाव्यञ्जकत्वे कथं लोकानामपि वा चमत्कारः इति वाच्यम्। लोकपदेन ग्राम्यजनस्यैवाभिप्रेतत्वात्। ग्राम्याणां च अविदग्धत्वात् तादृशशब्दात् व्रीडाया अनभिव्यक्तेः। अत एषां ग्राम्यत्वमपि ॥

1 'लोके प्रसिद्धम्'–क.

नेयार्थम्—

‘ निरूढाः लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥ ’ [1]

इति यत् निषिद्धं लाक्षणिकम् । यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि ! [2] चपेटापातनातिथिम् ॥ १५८ ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ॥

---

## सङ्केतः

**काश्चित् लक्षणाः** लक्षणाशब्दाः **नैव क्रियन्ते । अशक्तितः** अर्थप्रत्यायने सामर्थ्याभावात्, इति कुमारिलः । **निर्जितत्वं** पराभवः ।

## मधुमती

**‘ काश्चिन्नैव त्वशक्तितः ’** इत्यस्य—‘ निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् । क्रियन्ते साम्प्रतं काश्चित् ’ इति पूर्वपादत्रयम् । एवंच प्रयोजनप्रतिपादनक्षमे वाचकशब्दे सत्यपि यदवाचकाभिधानं सैव **अशक्तिः** । तया च प्रयुक्तं अशक्तं लाक्षणिकम्, तदृशप्रयोजनप्रतिपादनाशक्त(निष्प्रयोजन)लाक्षणिकपदत्वं नेयार्थस्य लक्षणम् । निर्जितत्वमिति । तथा च—जयतीत्येवोच्यताम्, किं लाक्षणिकपदप्रयोगेण? चन्द्रवैलक्षण्यप्रतीतेः उद्देश्यायाः तत एव भावात् । यत्र तु मुख्यशब्दप्रयोगे उद्देश्याप्रतीतिः तत्र लक्षणाऽस्तु । यथा ‘ गङ्गायां घोषः ’ इत्यादौ । दूषकताबीजं च वृत्त्यभावेन अर्थानुपस्थितिः ॥

---

1 (तन्त्रवार्तिके–पु· ७००) । 2 ‘ चण्डि ’–क.

अथ समासगतमेव दुष्टमिति सम्बन्धः । अन्यत् केवलं समासगतं च ॥

क्लिष्टं यतोऽर्थप्रतिपत्तिः व्यवहिता । यथा—

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल ! तव चेष्टितम् ॥ १५९ ॥

अत्र—अत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन-भासिभिः कुमुदैः इत्यर्थः ॥

---

## सङ्केतः

अन्यत् शेषं दोषजातं च्युतसंस्कृत्यादि ॥

अत्रीति । अत्र एकपदप्रत्याय्योऽप्यर्थः कैरवात्मा 'अत्री'त्यादि-नानापदार्थालोचनव्यवधानेन क्लिश्यमानः वाचकस्य क्लिष्टतावहः ॥

## मधुमती

अन्यदिति । सोऽयमर्थः एवकारात् लभ्यते ॥

यत इति । यतः विवक्षितस्य अन्वितविशेषस्य प्रतिपत्तिः विलम्बिता तत् इत्यर्थः । तथाच विलम्बितार्थप्रतीतिजनकत्वं लक्षणम् । निहतार्थादौ तु पदार्थोपस्थितिरेव विलम्बितेति ततो भेदः । विलम्बश्च अप्रत्यासत्तेर्वा, सामान्यशक्तात् प्रकरणाद्यभावे विवक्षितविशेषस्य द्रागनुपस्थितेर्वा । अत एव यत्र विशेषाकारेणोपस्थितिः तत्र न दोषः, यथा—'दशकण्ठारिगुरुम्' इत्यादौ ॥

अविमृष्टविधेयांशम्—अविमृष्टः–प्राधान्येन अनिर्दिष्टः विधेयांशः यत्र तत्। यथा—

मूर्ध्नां उद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः॥[1]

अत्र—मिथ्यामहिमत्वं न अनुवाद्यम्। अपि तु विधेयम्॥

---

## सङ्केतः

प्राधान्येनेति। साध्यत्वेनेत्यर्थः। विधेयांशः वाक्यतात्पर्यम्। मूर्ध्नामिति। उद्वृत्तकृत्तेभ्यः अविरलगलेभ्यः गलद्रक्तसंसक्ता निरन्तरा या धारा इति योगः। प्रयासः पुरीत्राणासामर्थ्यम्। विधेयमिति।

## मधुमती

प्राधान्येन विधेयतया अनिर्दिष्टः। विधानार्हस्य अविधानमित्यर्थः। तथा च द्वन्द्वातिरिक्तसर्वसमासानां विशेषणविशेष्यांशस्पर्शित्वेन तत्रैवास्य दोषस्यावतारः। न च समासे सति उद्देश्यविधेयभावो भासते। ऐकपद्येन तत्प्रमोषात्। तत्र हि समासाभाव एव साधुः। न चैवं समास एव क्वापि न स्यादिति वाच्यम्। यत्र उद्देश्यविधेयतावश्यंभावाभावः तत्र समासाविरोधात्। यत्र तत्त्वाविधानेन तदाश्रयगतोत्कर्षापकर्षादिप्रतीतिर्विवक्षिता तत्रैव दोषात्॥ ननु समासासमासयोः अर्थप्रतीत्यविशेषात् समासे परं कथं चमत्कारप्रतिबन्धः? इति चेत्—तस्य आलङ्कारिकसम्प्रदायानुगुण्येन ग्राह्यत्वात्। मूर्ध्नामिति। मूर्ध्नां दोष्णां च एतत् फलं इत्यन्वयः। अत्र मिथ्येति।

---

1 रामसेनया लङ्कायां वेष्टितायां रावणस्योक्तिः। (हनुमन्नाटके ८)।

यथा वा—

स्रस्तां नितम्बादवरोपयन्ती
पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण
द्वितीयमौर्वीमिव कार्मुकस्य[1] ॥ १६१ ॥

अत्र—द्वितीयत्वमात्रं उत्प्रेक्ष्यम् । 'मौर्वीं द्वितीयां'[2] इति तु युक्तः पाठः ॥

---

## सङ्केतः

'उपनतजगज्जयात् जातः मिथ्यामहिमा मूर्ध्नां' इति प्रकारेणेत्यर्थः । इत्थं हि नोक्तमत्र, किन्तु समासेन विशेषणतया सिद्धत्वेनोक्तम् । अनुवाद्यविधेयांशौ अनेकपदगतत्वेन सार्थैरसमासैः[3] निवेश्याविति भावः ॥

उत्प्रेक्ष्यमिति । मौर्वी चापस्य तावत् सिद्धैव, न तु द्वितीयत्वम् । अतः द्वितीयामिव इति पृथक् विशेषणतया वक्तुं युक्तम् । एवं हि द्वितीयत्वस्य प्राधान्यम्, अन्यथा तु गौणता ॥

## मधुमती

तथाच 'एषां महिमा वृथा' इति वक्तुमर्हति, तस्यैव विधेयत्वात्, एवं समासे तु न विधेयताप्रतीतिरिति भावः ॥

एवं बहुव्रीहौ उदाहृत्य कर्मधारये तदुदाहरति—**स्रस्तामिति** । **द्वितीयत्वमात्रमिति** । केचित्तु—द्वितीयभिक्षां इत्यत्र भिक्षायाः द्वितीयां,

---

1 कामस्य हरं प्रत्यभियोगे सहायभूतायाः पार्वत्याः वर्णनम् (कुमारसम्भवे ३-५५) 'नितम्बादवलम्बमाना पुनः पुनः केसरपुष्पकाञ्चीम्'–क. 2 'मौर्वीं-द्वितीयामिति'–क. 3 'सर्वैस्समासैः'–ग.

यथा वा—

वपुर्विरूपाक्षं अलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यत् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने?[1] ॥१६२॥

अत्र—'अलक्षिता जनिः' इति वाच्यम् ।

---

## सङ्केतः

अलक्षितेति । जन्मनो हि अलक्ष्यत्वं वाच्यत्वेन वक्तुमिष्टम् । समासे तु अलक्षितत्वं न प्रधानं स्यात् । जनिरिति । अस्मादपि 'अलक्षितं जनुः' इति पाठे, सर्वेषामपि क्लीबत्वस्यापि निर्वाहात् भग्नप्रक्रमत्वमपि त्यक्तं स्यात्॥

## मधुमती

इत्यर्थः लभ्यते । तथैव द्वितीयमौर्वी इत्यत्रापि मौर्व्याः द्वितीयां इति समासेऽपि द्वितीयत्वस्य प्राधान्यलाभात् न विरोधः इति वदन्ति । तदपि मन्दम् । विशेष्यतया तल्लाभेऽपि विधेयतया तदलाभात् । समासेन तदस्तमनात् । विवक्षितं च तथा इति ॥

ननु अन्यपदार्थप्रधानबहुव्रीहौ मूर्ध्नामित्यत्र मिथ्यामहिमत्वानुवादेन नगरीरक्षणप्रयासरूपफलविधाने 'जुगोपात्मानमत्रस्तः' इत्यादाविव नाविमृष्ट-विधेयांशत्वं स्यात् इति अत एवास्वरसेन पुनः बहुव्रीहावेव तद्धितार्थगुणी-भूतेऽन्यपदार्थे गुणीभावमुदाहरति—वपुरिति । अत्रेति । तथाच प्रसज्य-प्रतिषेध एवात्र विवक्षितः, न तु पर्युदासः । समासेन तु पर्युदासस्यैव प्रतीत्या नञो विधेयत्वेन अप्रतीतिः । न च अयं अकारशब्दः अन्य एव निषेधार्थकः इति वाच्यम् । तथापि अविमृष्टविधेयांशत्वसन्देहस्य अनपायात्,

---

1 वटुवेषधारिणः शिवस्य पार्वतीं प्रत्युक्तिः । (कुमारसंभवे ५-७२) ।

यथा वा—

आनन्दसिन्धुः अतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति धिग् धिगस्मान्[1] ॥१६३॥

अत्र—'न मुक्ता' इति निषेधः विधेयः ॥

---

## सङ्केतः

**सन्दाननं** संयमनम् । **तान्तिं** खेदम् । विरक्तत्वात् । **धिग्धिक्** इति सखीवचः । **विधेय इति** । 'या प्राक् त्वया प्रियत्वेन **क्षणमपि** न मुक्ता' इत्येवंरूपेण, विधेयो योऽर्थः स एव वृत्त्या[2] गुणीकृतः । किञ्च—अमुक्ता इत्यत्र प्रसज्यः नञ् । क्रियया सह सम्बन्धे सति प्रतिषेधप्राधान्यात् । अतो नञ्समासोऽपि न युक्तः । तस्य हि पर्युदास एव विषयः । तत्रैव[3] विशेषणत्वात् । स्याद्यन्तेन उत्तरपदेन सम्बन्धोपपत्तेः । न च पर्युदासोऽत्र युक्तः । अर्थस्यासङ्गतेः । मुक्तत्वनिषेधो ह्यत्रेष्टः, न अमुक्तत्वविधिः । तस्मात् अस्य नञः विधेयार्थनिष्ठतया प्रधानस्य तथा अनूद्यमानार्थपरतया तद्व्यस्तवृत्तिना मुक्तशब्देन समं वृत्तिः नैवेष्टा । यदाह—

'नञर्थस्य विधेयत्वे निषेधस्य[4] विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गता ॥ इति ॥

'अ-मा-नो-नाः प्रतिषेधवाचकाः' इत्युक्तः 'अ'कार एव नञर्थः अत्र पृथक्कृत्य व्याख्येयः। ततो निषेधस्य विधेयत्वे सति[5] अदुष्टत्वमित्यपि व्याख्या॥

## मधुमती

वाक्यसमासपदयोः नञ एव उक्तोभयरूपतया, प्रकृते समासे अकारस्य तथा निषेधार्थकत्वाभावाच्च विवक्षितार्थालाभात् ॥

---

1 विरक्तं नायकं प्रति नायिकासखीनामुक्तिः । 2 'विधेयोऽर्थःस्ववृत्त्या'–ग. 3 'तथैव'–ग. 4 'निषेध्यस्य'–घ. 5 'विधेयत्वे निषेध्यस्य सति'–ग.

यथा—

नवजलधरः संनद्धोऽयं, न दृप्तनिशाचरः,
सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम् ।
अयमपि पटुः धारासारः, न बाणपरम्परा,
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी[1] ॥

इत्यत्र । न तु अप्रुक्तत्वानुवादेन अन्यत् अत्र किञ्चित् विहितम् ॥ यथा—

जुगोपात्मानं अत्रस्तः भेजे धर्मं अनातुरः ।
अगृध्नुराददे सोऽर्थान् असक्तः सुखमन्वभूत्[2] ॥१६५॥

इत्यत्र अत्रस्तत्वाद्यनुवादेन आत्मनो गोपनादि ॥

विरुद्धमतिकृत् यथा—

सुधाकरकराकारविशारदविचेष्टितः ।[3]
अकार्यमित्रं[4] एकोऽसौ तस्य किं वर्णयामहे ? ॥१६६॥

---

## सङ्केतः

यथेति । यथा 'नवजले'त्यत्र वृत्तेः निषेधः विधेयतया मुख्यः ऊचे, न तथा अप्रुक्तेत्यत्रेति भावः ॥

गोपनादीति । विधेयमित्यर्थः ॥

## मधुमती

न त्वप्रुक्ततेति । नाप्यप्रुक्ततेति क्वचित् पाठः ॥

विरुद्धेति । मतिः निश्चयः । तेन न सन्दिग्धातिव्याप्तिः । ननु—'सुरस्रोतस्विनीमेषः' इत्यादौ असमर्थनिहतार्थाश्लीलादेः कथं न

---

1 ऊर्वशीविरहे पुरूरवसः मेघादौ निशाचरादिभ्रमानन्तरं विशेषदर्शने सति उक्तिरियम् । (विक्रमोर्वशीये ४-७) 'न नाम शरासनम्'–क. 2 (रघुवंशे १-२१) । 3 'विचेष्टितैः'–क. 4 'अकार्ये मित्रं'–ख.

अत्र कार्यं विना मित्रं इति विवक्षितम् । अकार्येषु मित्रं इति तु प्रतीतिः ॥

यथा वा—

चिरकालपरिप्राप्त[1]लोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥ १६७॥

अत्र 'कण्ठग्रहं' इति वाच्यम् ॥

यथा वा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतः देवात् भवानीपतेः ।

---

### सङ्केतः

भवानीति । भवस्य पत्नी भवानी । तस्याः पतिः इत्युक्ते 'हरत्यागात्

### मधुमती

विरुद्धमतिकृत्त्वम् । कथं वा समासैकपदगतत्वनियमः ? एभिः असामासिकैरपि पदैः विरुद्धार्थप्रत्ययात इति चेत्—न । विवक्षितेतरान्विततात्पर्यार्थविरुद्धतात्पर्यार्थबोधजनकपदत्वस्य विवक्षितत्वात् । न हि अश्लीलनिहतार्थादौ पदानि इतरान्वितविरुद्धार्थबोधकानि, किन्तु केवलं विरुद्धपदार्थमात्रस्मारकाणि। अत एव विरुद्धमतिकृति सामासिकपदगतत्वनियमश्च । समस्यमानानेकपदघटितत्वे एव इतरान्वितार्थबोधकत्वात् । न च अभवन्मतयोगसङ्करः । तत्र अभिमतान्वयबोधः, अत्र तु अनभिमतार्थबोधः इति भेदात् । एवं च विरुद्धपदार्थस्मारकपदानां यथायथं असमर्थाश्लीलनिहतार्थादौ अन्तर्भावः । अयं तु विशेषः—यत् समासदशायां पददोषत्वं, अन्यथा वाक्यदोषत्वमिति ॥

अत्र कण्ठग्रहमिति । गळग्रहपदस्य गळरोगविशेषाभिधायकत्वात् । (दुष्टकालविशेषाभिधायकत्वात्) अर्धचन्द्रदानाभिधायकत्वात् इति कश्चित् ॥

भवान्या इति । भवस्य पत्नी इत्यर्थे आनुको विधानात् ।

---

1 'प्राप्ति'—क.

तत्पुत्रस्तु मदान्धतारकवधात् विश्वस्य दत्तोत्सवः

स्कन्दः स्कन्द इव प्रियोऽहं, अथवा शिष्यः कथं विस्मृतः [1] ॥

अत्र–'भवानीपति'शब्दः भवान्याः पत्यन्तरे प्रतीतिं करोति। ['इन्द्रवरुणभव'[2] इत्यादिना पुंयोगात् ङीष्-प्रत्ययेन भवस्य पत्नी भवानी ॥] यथा वा—[3]

गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः।

सविधे निरहङ्कारः पायात् वः सोऽम्बिकारमणः ॥१६९॥

अत्र–'अम्बिकारमणः' इति विरुद्धां धियं उत्पादयति ॥

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्र[4]तरङ्गितविलोचना।

बर्हिर्निर्ह्लादनार्होऽयं कालश्च समुपागतः ॥ १७० ॥

एवं अन्यदपि ज्ञेयम् ॥

---

सङ्केतः

अन्योऽपि पतिर्भवेत्' इति लभ्यते, यथा 'चैत्रपत्नीपतिः' इत्युक्ते उपपतिरिति लभ्यते ॥

विरुद्धामिति। यतः अम्बिका माताऽपि। रमणौ च प्रियरासभौ ॥

मधुमती

भवान्याः पतिः इत्यर्थप्राप्तौ विरुद्धमतिकृत्त्वम्। भवान्विततया उपस्थितायां हरपत्न्यां पत्यर्थेनान्वयो भवन् तद्भिन्नमेव पतिं विषयीकरोतीति व्युत्पत्तेः ॥

अत्राम्बिकेति। मातृरमणः इति विरुद्धां मतिं जनयतीत्यर्थः ॥

श्रुतिकटाविति। तथाच सा दूतीत्यादौ बर्हिःपदादयः असमस्यमानाः न वैरस्यमुपयान्ति, किन्तु समस्यमाना एवेति अनुभवसिद्धमित्यर्थः ॥

एवमिति। 'लौहित्यवत्तक्षकः' इत्यादौ असाधुत्वादिकमपीत्यर्थः।

---

1 कृतमाहेश्वरधनुर्भङ्गं श्रीराममुद्दिश्य महेश्वरशिष्यस्य परशुरामस्योक्तिरियम्। (महावीरचरिते २-२८)। 2 (पा. सू. ४-१-४९)। 3 'करोति, यथावा'–क, 4 'सुधासिन्धुः'–क.

अपास्य च्युतसंस्कारं
असमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते
पदस्यांशेऽपि केचन ॥५२॥

केचन, न पुनः सर्वे । क्रमेणोदाहरणम्—

---

## मधुमती

अत्र परस्परव्यभिचारे एव कर्मधारयस्य साधुत्वात्, तक्षकस्य च लौहित्याव्यभिचारात् समासदशायां असाधुत्वमिति ध्येयम् ॥

अपास्येति । च्युतसंस्कृत्यादित्रयवर्जं एत एव दोषाः वाक्यवृत्तितया प्रतिसन्धीयमाना अपि चमत्कृतिप्रतिबन्धकाः इत्यर्थः । च्युतसंस्कृतित्वादीनां अशक्तत्वायोग्यत्वादिज्ञानजनकत्वेन विलम्बितोपस्थापकत्वेन वा वाक्यासम्बन्धात्, प्रकृतार्थोपयुक्तार्थानुपस्थापकत्वेन अनर्थकत्वाच्च तेषां त्यागः ॥ नचैवं वाक्यमात्रस्य अवाचकतया तत्त्यागोऽपि स्यादिति वाच्यम् । न हि शक्त्या प्रतिपादकत्वाभावः अवाचकत्वम् । किन्तु तात्पर्यविषयप्रकारकप्रतीतिजनकत्वाभावमात्रम् । न च तद्वाक्यमात्रेऽस्तीति तत्त्यागाप्रसङ्गात् इति प्राञ्चः ॥ वस्तुतस्तु—अपभ्रंशात्मककाव्यानुरोधेन संस्कारस्यावश्यकतया वाक्यस्य च असंस्कार्यत्वात् च्युतसंस्कृति वाक्ये न भवत्येव । कोशादिमात्रपठितं सत् झटित्यर्थानुपस्थापकं असमर्थम्, नचैवंविधमसमर्थत्वं वाक्यस्य दोषो भवेत् । निरर्थकत्वं तु वाक्यस्य न भवत्येव । तादृशनानापदस्य निराकाङ्क्षत्वेन अशक्यत्वात् । यदि तु तादृशपदघटितत्वेन तत्त्वमुच्यते, तदापि वाक्यत्वप्रयुक्तदोषत्वं नास्त्येव । तस्यैव प्रकृते विवक्षितत्वात् ॥ निहतार्थत्वं तु भवति । न हिकोशादिपाठात्तदर्थं तत् । किन्तु उभयार्थप्रतिपादनक्षमस्य अप्रसिद्धे प्रयोगेण । तच्च 'सायकसहायबाहो'रित्यादौ अक्षतमेव ॥ पदतदेकदेशो-

सोऽध्यैष्ट वेदान् त्रिदशानयष्ट
पितॄनताप्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गं अरंस्त नीतौ
समूलघातं न्यवधीदरींश्च [1] ॥ १७१ ॥

---

## सङ्केतः

**वाक्येऽपीति** । सविशेषणं आख्यातं वाक्यम् । अथवा—"आकाङ्क्षायोग्यतासन्निधिमतां पदार्थानां अन्वये वाक्यम् ।" इति वाक्यलक्षणम् । तच्च च्युतसंस्कारादौ मिथोविशेषणविशेष्यभावाकाङ्क्षायोग्यताद्यभावात् न स्यादिति न तत्र वाक्यदोषता । पददोषता तु स्यादेवेति । विभक्त्यन्तं पदमिति पदलक्षणस्योपपत्तेः ॥ **क्रमेण** श्रुतिकट्वादिना ॥

**अताप्सीत्** इति अन्तर्भूते अनर्थः सकर्मकः, अन्यथा कर्म चिन्त्यम् । [2] **षड्वर्गः** कामक्रोधादिः ॥

## मधुमती

भयदोषाणां श्रुतिकटुत्वादीनां तु वाक्यवृत्तित्वं न भवत्येव ॥ एवं च पदैकदेशस्य तत्तद्दोषवत्तयैव दुष्टता । पदानां तु तद्घटितत्वेन तत्तद्दोषवत्तया चेत्युभयथापि दुष्टता । वाक्येऽपि उक्तदोषत्रयं विहाय तादृशपदघटितत्वेन-दुष्टता, न तु तथाविधवाक्यत्वेनेति स्मर्तव्यम् ॥

**पदस्यांशेऽपि केचनेति** । तथा च एते एव केचन दोषाः पदैकदेशवृत्तितया ज्ञाताः चमत्कृतिप्रतिबन्धकाः इत्यर्थः । **केचन** इत्यनेन समग्राण्यपि दूषणानि न भवन्तीति प्रतिपाद्यते । तच्च तत्र तत्र उदाहरणेष्वेव सुव्यक्तं भविष्यति ॥

**सोऽध्यैष्टेति** । अत्र श्रुतिकटुपदघटितत्वेन वाक्यं श्रुतिकटु । राज-

---

1 दशरथस्य वर्णनमिदम् । अताप्सीत्—अतर्पयत् । अरंस्त—रेमे । (भट्टिकाव्ये १।२) । 2 'अताप्सीदिति अन्तर्भूतेऽनर्थम्'—ग.

स रातु [1] वो दुश्च्यवनः भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैः असंमतान् [2] ॥ १७२ ॥

अत्र —दुश्च्यवनः इन्द्रः । अनेडमूकः बधिरः ॥

सायकसहायबाहोः
मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिरभास्वरस्ते
भातितरां अवनिप! श्लोकः [3] ॥ १७३ ॥

अत्र—सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशः-
पर्यायाः शराद्यर्थतया प्रसिद्धाः ॥

---

### सङ्केतः

स रात्विति । भावुकानि मङ्गलानि । अत्र अप्रयुक्तम् । पूर्वत्र तु श्रुतिकटु ॥

शरादीति । शरसंरक्षान्तिपङ्कजपद्यार्थैः खड्गादयो निहतार्थाः ॥

### मधुमती

विषया च रतिः व्यङ्ग्या । तस्याश्च माधुर्यं गुणः इति, तद्विरुद्धतया अस्य दोषत्वम् ॥

दुश्च्यवन इति । तथाच एतयोरर्थयोः दुश्च्यवन-अनेडमूकशब्दौ अप्रयुक्ताविति तद्घटितं वाक्यमप्यप्रयुक्तमित्यर्थः ॥ यत्तु वाक्यं पुरुषविवक्षातो विलक्षणमेवेति तद्घटितं वाक्यमात्रमेव अप्रयुक्तं स्यादिति—तन्न । यथेदं विशिष्य प्रयुक्तं, तथा अनाम्नातमपि भवति । यथाऽऽम्नातं सामान्यतः तथा प्रयुज्यतेऽपि । 'योग्यतादिपदार्थसंसर्गबोधकं हि वाक्यम्' इत्युक्तेः ॥

सायकेति । निहतार्थं वाक्यं यथेत्यादिः ॥

---

1 'स पातु'–क. 2 स इन्द्रः युष्माकं कल्याणानां सन्ततिं अनुगृह्णातु । शत्रूणां मूकबधिरत्वादि दत्वा नाशयतु इत्यर्थः । 3 राजन् खड्गालङ्कृतबाहोः समुद्रान्तवसुन्धराधिपतेः ते कीर्तिः ज्योत्स्नावत् शोभतेतरामित्यर्थः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितः
यशो गायन्त्येते दिशि दिशि वनस्थाः[1] तव विभो!
शरज्ज्योत्स्ना[2]गौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिः भ्रमति विगताच्छादनमिह ॥

अत्र—कुविन्दादिशब्दः अर्थान्तरं प्रतिपादयन् उपश्लोक्यमानस्य तिरस्कारं व्यनक्तीति अनुचितार्थः ।

---

## सङ्केतः

**कुविन्द इति** । कुः पृथ्वी, तां विन्दति लभते यः स तथा । पटुं पटं वा करोति **पटयति** । **वनस्थौ** किन्नरधीवरौ । वनं अम्भोऽपि । **तथापीति** । यः किल पटकृत् तत्पत्नी कथं विगताच्छादना स्यात्? कीर्तिपक्षे **विगताच्छादनं** अस्खलितमित्यर्थः । **अर्थान्तरमिति** । **कुविन्द**पदात् तन्तुवायत्वम्, **वनस्था इति** पदात् कौपीनादिदानशीलत्वम्, **शरज्ज्योत्स्ने**त्यादिपदात् जीर्णत्वम्, **विगते**तिपदात् नग्नत्वमित्यादि ॥

## मधुमती

**कुविन्द इति** । अत्र प्राकरणिके राजरूपेऽर्थे तत्तच्छब्दानां अभिधानियमनात् तन्तुवायरूपोऽर्थः व्यञ्जनया गम्यते । ततश्च असंबद्धार्थाभिधायकत्वापत्तिः इति, नोपमायां पर्यवसानम् । एवं च राज्ञः तन्तुवायौपम्यं वाक्यमहिमलभ्यमिति वाक्यदोषत्वमित्यर्थः ।

---

1 'च नग्नाः'–ख, 2 'जरज्ज्योत्स्ना'–क,

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम्[1] ॥ १७५ ॥

अत्र---प्राभ्रभ्राड्-विष्णुधाम-विषमाश्व-निद्रा-पर्ण-शब्दाः प्रकृष्टजलद-गगन-सप्ताश्व-सङ्कोच-दलानां अवाचकाः ॥

---

## सङ्केतः

प्राभ्रेति[2] । प्रकृष्टमभ्रं कृष्णो मेघः, तद्वत् भ्राजते यत् खं तत्तथा । प्राभ्रादीनामन्वयेन एतदर्थवाचकत्वेऽपि, अवाचकता रूढ्योक्ता ॥

## मधुमती

प्राभ्रभ्राडिति । अत्र उपसर्गस्य प्रशब्दस्य धातुयोग एव अनुशासनात् प्राभ्रशब्दस्य प्रकृष्टजलदावाचकत्वात्, एवं विष्णुपदपदस्य आकाशवाचकत्वेऽपि पदशब्दस्य परिवृत्त्यसहिष्णुतया विष्णुधामपदस्य विवक्षिताकाशत्वप्रकारकप्रतीत्यजनकत्वात्, एवं सप्त-पत्र शब्दयोः परिवृत्त्यसहत्वात् विषमाश्वसहस्रपर्णशब्दयोः सप्ताश्व–सहस्रपत्रावाचकत्वाच्च अवाचकानेकपदघटितत्वात् अवाचकं वाक्यमिदम् ॥ निद्राशब्दस्तु सङ्कोचवाचक एव । अत्र च उपाधेरसाङ्कर्यात् वाच्यसमर्थसाङ्कर्येऽपि न दोषः ॥

---

1 सूर्योऽयं मेघावृते गगने स्थितोऽपि इमानि कमलानि विकासयतीत्यर्थः ।

2 एतेन प्राभ्रशब्दस्यैव प्रकृष्टाब्दार्थकत्ववर्णनेन उत्तरत्र मूले 'प्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः' इत्यस्य स्थाने 'प्राभ्रविष्णुधामविषमाश्वनिद्रापर्णशब्दाः' इति पाठस्सूच्यते। अत एवोत्तरत्रापि 'प्राभ्रादीनामन्वयेन' इति वक्ष्यति। 'प्राभ्रभ्राड्' इति पाठे तु अभ्रे गगने भ्राजते शोभत इत्यभ्रभ्राट् जलदः, प्रकृष्टोऽभ्रभ्राट् यत्रेत्यादिरर्थो बोद्धव्यः ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणो[1]त्साहवती मोहनमादधौ [2] ॥ १७६ ॥

अत्र—उपसर्पण-प्रहरण-[3]मोहनशब्दाः व्रीडादायित्वात् अश्लीलाः ॥

तेऽन्यैः वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्तनम् ॥ १७७ ॥

अत्र—वान्त-उत्सर्ग-प्रवर्तनशब्दाः जुगुप्सादायिनः ॥

---

## सङ्केतः

**कम्पना** सेना । 'क द्विपो मे सन्ति ?' इत्थं **वामान्** अरीन् **लोचते** वीक्षते । **वामं** विरुद्धं वा **लोचनं** यस्याः सा तथेति वाच्यम् । स्त्री तु व्यङ्ग्या । अत एव कम्पनैव वामलोचनेति न रूपकम् । इत्थं ह्यपरोऽर्थः वाच्यत्वात् न अश्लीलः स्यात् । व्यञ्जकत्वे ह्यश्लीलमिति । एवमन्यत्राप्यूह्यम् । स्त्रीपक्षे मां कोऽपि द्रक्ष्यतीति कम्पते इति व्युत्पत्तिः । **उपसर्पणं** रताय गमनमपि । **प्रहरणं** प्रहणनं-प्रहारः रतगतव्यापारः । **मोहनं** रत-मूर्च्छे ॥

**वान्तमिति** । **येषां इतरस्य** कवेः इतराणां वा तुच्छानां **अर्थानां ग्रहे प्रवृत्तिः** स्यात् **ते अन्यैः वान्तं** चर्वितं त्यक्तं च **भुञ्जते** इत्येकोऽर्थः । अन्यस्तु अश्लीलः । **उत्सर्गः** गूथम् । **प्रवर्तनं** अपानवायुः ॥

## मधुमती

**उपसर्पणेति** । **उपसर्पणादिशब्दाः** यथाक्रमं संयोग-चपेटाताडन निधुवनप्रतीतिकारित्वात् वाक्यार्थप्रतीतिदशायां दुष्टाः इत्यर्थः ॥

---

1 'तत्तत्प्रहणनो'–क. 2 'मादधे'–क. 3 'प्रहणन'–क.

पितृवसतिमहं व्रजामि[1] तां
सह परिवारजनेन[2] यत्र मे ।
भवति सपदि पावकान्वये
हृदयमशेषितशोकशल्यकम्[3] ॥ १७८ ॥

अत्र—पितुः गृहं इत्यादौ विवक्षिते, श्मशानादिप्रतीतौ अमङ्गलार्थत्वम् ॥

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७९ ॥

अत्र—किं सुर-कम्पन-मार्गण-भूति शब्दाः देव-सेना-शर-विभूत्यर्थाः ? किं मदिराद्यर्थाः ? इति सन्देहः ॥

---

## सङ्केतः

पावकैः पवित्रैः सह अन्वये योगे सति । यत्र मे सुखं स्यात् । अन्यत्र तु पावकः वह्निः ॥

सुरालयेति । रिपूणां रणे घातात् नाकोल्लासपरः । **कम्पनं** भयेऽपि । **मार्गणा** अर्थनेऽपि[4] **भूतिः** भस्मापि । रणस्थभूपवर्णनेयम् ॥

---

1 'प्रयामि'–क. 2 'मणेन'–क. 3 पतिगृहे प्राप्तशोकायाः कस्याश्चिदुक्तिरियम् । सपरिवाराऽहं जनकगृहं प्रयास्यामि । तस्याः पवित्रभूमेः प्राप्तावेव मदीयं सकलमिदं शोकशल्यं उन्मूलितं भवेदित्यर्थः । आपाततस्तु—श्मशानं गमिष्ये, यत्र चिताग्निसम्बन्धे हृदयमिदं भस्मैव भवेत् इति भाति । 4 'अर्थिन्यपि'–ग.

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ![1] ॥१८०॥

अत्र—अधिमात्रोपायादयः शब्दाः योगशास्त्रमात्र-प्रयुक्तत्वात् अप्रतीताः ॥

ताम्बूलभृतगल्लोऽयं भल्लं[2] जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८१ ॥

अत्र—गल्लादयः शब्दाः ग्राम्याः ॥

---

## सङ्केतः

**तस्येति** । अत्र मृदुः मध्यः अधिमात्रोपायः इति त्रिधा योगी । स च एकैकोऽपि मृदुः मध्यः तीव्रसंवेगः इति त्रिधा । एवं नव योगिनः । तत्र **अधिमात्रोपायस्य तीव्रसंवेगस्य** आसन्ने समाधिलाभ-फले । सतताभ्यस्तो **दृढभूमिः** । **प्रियं** मोक्षोऽपि । चेतोवृत्तिनिरोधनसाधनं **यत्नः** । पक्षे तस्य **अधिकोपायस्य दृढरागस्य प्रियं** स्त्रीमयम् ॥

## मधुमती

**तस्याधिमात्रेति** । **अधिमात्रे** दृढज्ञाने **उपायः** यस्य स तथा । **तीव्रसंवेगः** परमवैराग्यम् । चिरकालनैरन्तर्यक्तृतः अभ्यासः **दृढभूमिः** ॥ **तत्प्रियः** तदेकपरः, **प्राप्तौ** तत्त्वसाक्षात्कारसिद्धौ ॥

---

1 दृढज्ञानकारि-यमनियमाद्युपायानुष्ठातुः तीव्रवैराग्ययुक्तस्य तस्य दृढसंस्कार-विशेषविशिष्टः प्रयत्नः आत्मसाक्षात्कृतौ सत्यां फलित एवेति मन्ये इत्यर्थः ।
2 भल्लं-सम्यक् ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता, नेत्रयुद्धं वेदय साम्प्रतम्[1] ॥ १८२ ॥

अत्र अम्बररत्नपादैः क्षततमा अचला भूः कृता, नेत्रद्वन्द्वं बोधय, इति नेयार्थता ॥

धम्मिल्लस्य न कस्य
प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्ध-
व्युत्पत्तेः मानसं शोभाम्[2] ॥ १८३ ॥

अत्र—'धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति' सम्बन्धे क्लिष्टत्वम् ॥

---

### सङ्केतः

वस्त्रेति । अम्बररत्नं रविः । सत्त्वरजःपरं तमः । वस्त्रं अम्बरम् । वैडूर्यं रत्नम् । चरणाः पादाः । युद्धं द्वन्द्वम् । बोधय जागृहि ॥

अपूर्वेति धम्मिल्लविशेषणम् ॥

### मधुमती

अम्बररत्नेति । वस्त्रशब्देन अम्बरशब्दः वैडूर्यशब्देन रत्नशब्दः चरणशब्देन पादशब्दश्च प्रयोजनं विना लक्ष्यते इति नेयार्थता । एतच्च—'वचोबाणैरित्यत्र वचश्शब्देन गीश्शब्दो लक्ष्यते' इति वदतः वृत्तिकृतोऽप्यभिमतमिति ज्ञायते ॥

अत्र धम्मिल्लस्येति । तथाच असमासे नानापदघटिततया वाक्यमेव क्लिष्टम् । क्लिष्टपदे तु अर्थोपस्थितिविलम्बेन क्लिष्टत्वम् । अत एवास्य

---

1 निद्रितां सखीं प्रबोधयन्त्याः कस्याश्चित् उक्तिरियम् । सूर्यकिरणैः निरस्तान्धकारा कृतेयं भूमिः, अतो नेत्रयुगलमुन्मीलयेत्यर्थः ॥ 2 धम्मिल्लः संयताः कचाः । व्युत्पत्तिः—विशिष्टा उत्पत्तिः ।

न्यक्कारो ह्ययमेव मे यदरयः, तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं, जीवत्यहो! रावणः।
धिक् धिक्! शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा?
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः? ॥[1]

अत्र—'अयमेव न्यक्कारः' इति वाच्यम्। उच्छू-

---

## सङ्केतः

न्यक्कार इति। अरयः इति बहुवचनेन शत्रुमत्ता मे अनुचितेति सम्बन्धानौचित्यं नाम क्रोधविभावः व्यक्तः। तत्रापि इति निपातसमुदायेन तापसस्य अविक्रमस्य बहुशत्रुत्वं असम्भाव्यमेवेति व्यक्तम्। मत्कर्तृका यदि जीवनक्रिया, तदा हननक्रिया तावत् अनुचिता। तस्यां च स कर्ता। सोऽपि नरकीटः। अत्रैव यत्राहं तिष्ठामि। नितरां हन्ति, यथा रक्षःकुल-नामापि नश्यति। रावणः स्वःपुरीविमर्दनादिकारी। धिग्धिक् इति पदात् शक्रं जितवान् इति व्युत्पत्तिः केवलं कथेति प्रतीयते। ग्रामटिका इति कप्रत्ययेन स्त्रीप्रत्ययवता बहुमानाभावः व्यज्यते। विलुण्ठनं इत्यत्र विशब्दः निर्दयत्वेन लुण्ठनमाह। वृथाशब्दस्तु स्वविक्रम[2]निन्दाव्यञ्जकः। भुजैः इति बहुत्वेन तेषां भारकारित्वं व्यक्तम्। वाच्यमिति। इत्थमुक्तौ हि

## मधुमती

सामासिकपदत्वनियमः॥ ननु—तत्तद्दोषयुक्तानेकपदघटितत्वनिबन्धनं वाक्यस्य तत्तद्दोषवत्त्वं वाच्यम्। 'स रातु वो दुश्च्यवनः' इत्यत्राप्रयुक्तादौ तथा दर्शनात्। पदस्य च सामासिकस्यैव क्लिष्टत्वमुक्तम्। न चात्रैकमपि

---

1 रामेण राक्षसक्षये क्रियमाणे क्षुब्धस्यान्तस्य रावणस्योक्तिरियम्। न्यक्कारः—निन्दा। 'राक्षसभटान्'—क. (हनुमन्नाटके १४-)। 2 'अविक्रम'—ग.

नत्वमात्रं च अनुवाद्यम्, न वृथात्वविशेषितम्। अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य॥ यथा वा—

## सङ्केतः

न्यक्कारस्य विधेयता स्यात्, शब्दशक्तिस्वाभाव्यात्। **न वृथात्वेति**। वृथात्वस्य इत्थं विशेषणतया उक्तौ गौणतैव, न विधेयतेति भावः॥

## मधुमती

सामासिकं क्लिष्टं पदं दृश्यते। तत् कथमत्र वाक्यस्य क्लिष्टत्वम्? इति चेत्—न। न हि श्रुतिकटुत्वादयो दोषाः पदघटिताः। येन तादृशपद-घटितत्वनियतमेवं तेषां वाक्यदोषत्वं भवेत्। किन्तु तदघटिता एव। तथा च क्लिष्टत्वं न सामासिकपदघटकत्वनिबन्धनम्। किन्तु व्यवहितवाक्यार्थ-प्रतीतिजनकत्वनिबन्धनम्। तत् इहापि अनासन्नानां पदानां तथात्वेन तत्समुदायस्य वाक्यस्यापि क्लिष्टत्वं अविरुद्धम्। पदे तु क्लिष्टादित्रिकं समासे एव, न त्वसमासे॥ एवं अग्रेऽपि अविमृष्टविधेयांशादौ द्रष्टव्यम्॥

**अत्रायमेवेति**। तदुक्तम्—

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्।
न ह्यलब्धात्मकं किञ्चित् कुत्रचित् प्रतितिष्ठति॥"

इति। यथावद्विधेयानिर्देशात् अविमृष्टविधेयांशत्वम्। **वृथात्वेति**। इदं च प्रसङ्गायातम्। प्रकृते तु पूर्वोक्त एव दोषः। तस्य पदाविमृष्टविधेयांशत्वा-दिति स्मर्तव्यम्॥ ननु—उद्देश्यविधेयभाववैपरीत्ये अर्थदोषत्वमेवोचितं न वाक्यदोषत्वम्, इत्यत आह—**अत्र चेति**। पुरोवर्तिनः उद्देश्यत्वे—न्यक्कारस्य विधेयत्वे च कवेः तात्पर्यम्। तद्वाचकपदव्यत्ययेन अत्र रचनैव दुष्टा, न त्वर्थः। अत एव '**अयं न्यक्कारः**' इति करणे दोष एव नास्ति॥

अपाङ्गसंसर्गि तरङ्गितं दृशोः
भ्रुवोः अरालान्तविलासि वेल्लितम् ।
विसारि रोमाञ्चनकञ्चुकं तनोः
तनोति योऽसौ सुभगे! तवागतः[1] ॥ १८५ ॥

अत्र—'यः असौ' इति पदद्वयं अनुवाद्यविधेयार्थतया विवक्षितं अनुवाद्यमात्रप्रतीतिकृत् । तथाहि—प्रक्रान्त-

---

## सङ्केतः

पदद्वयमिति । यच्छब्दः अनुवाद्यार्थस्य, अदश्शब्दः विधेयार्थस्य च विषयः । मात्रेति । मात्रशब्दः अवधारणे । यथेदं सिद्ध्यति, तथा यत्तच्छब्दविचारपरेण 'तथाही'त्यादिना 'एवं समासान्तरेष्वप्यूह्य'मित्यन्त-ग्रन्थेन निर्णयति—तथाहीति ॥

## मधुमती

अत्र योऽसाविति । ननु—नात्र समासे विधेयस्य गुणीभावः, नापि उद्देश्यविधेयनिर्देशवैपरीत्यम् । तत् कथमत्र अविमृष्टविधेयांशता ? इति चेत्—उच्यते । "यथावद्विधेयानिर्देशो अविमृष्टविधेयांशता" इत्युक्त-त्वात् । यथावन्निर्देशाभावे च—विधेयस्य गुणीभावे, निर्देशवैपरीत्ये, व्यव-हितनिर्देशे, विधेयविशिष्टतया निर्दिष्टे, विधेयस्यानन्वये, विधेयाप्रतीतौ च सर्वत्राविमृष्टम् । अयं तु विशेषः—यत्—प्रथमे पददोषत्वम्, शेषे वाक्य-दोषत्वम् इति ॥

तिरस्कृतानुकूलतया यच्छब्दतच्छब्दयोः कुत्र मिथोऽपेक्षणम् ? कुत्र न ? इति विवेक्तुमाह—तथाहीत्यादि ॥

---

1 नायकागमनं निवेदयन्त्याः सख्याः इयमुक्तिः । तव नेत्रयोः नेत्रान्तानुबन्धि-वक्रप्रेक्षणपरम्परां तनोति । भ्रुवोः कुटिले प्रान्तभागे विलासयुक्तं नर्तनं तनोति । तनोः सुस्फुटं रोमाञ्चरूपं कञ्चुकं तनोति । यः तादृशः तव नायकः आगतः इत्यर्थः ।

प्रसिद्धानुभूतार्थविषयः तच्छब्दः यच्छब्दोपादानं नापेक्षते ॥ क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यां उभाभ्यां अन्वियेष सः [1] ॥१८६॥

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी [2] ॥ १८७ ॥

---

## सङ्केतः

सिद्धिम् हेमभूसुहृद्गताम् । सः पूर्वोक्तो नृपः ॥
सा प्रसिद्धा ।

## मधुमती

द्वयं गतमिति । चन्द्रकलारूपं एकं तु तदा शोचनीयतां गतम्, सम्प्रति तु द्वयमित्यर्थः ।

---

1 अतिथिनाम्नः राज्ञो वर्णनमिदम् । तदुक्तम्—तीक्ष्णादुद्विजते लोकः मृदुस्तु परिभूयते । एतद् बुध्द्वा महाराज! मा तीक्ष्णो मा मृदुर्भव॥ इति॥ (रघुवंशे १७-१२) 'चापलचेष्टितम्'–क. 2 (कुमारसंभवे ५. ७१.)

उत्कम्पिनी भयपरिस्खलितांशुकान्ता [1]
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन [2] दहनेन न वीक्षिताऽस्मि [3] ॥१८८॥

यच्छब्दस्तु उत्तरवाक्यानु[4]गतत्वेन उपात्तः, सा-

---

## सङ्केतः

उत्कम्पिनीति । प्रदीपने दह्यमान[5]प्रियावस्थां ध्यायन् विलपति कोऽपि ॥ ते यथानुभूते । यच्छब्दं विचारयति—यच्छब्दस्त्विति ।

## मधुमती

यच्छब्दस्य तच्छब्दानपेक्षणमाह—यच्छब्दस्त्विति । यद्यपि—

'स दुर्मतिः[6] श्रेयसि यस्य नादरः ।' इत्यादौ,

'तत्तत्[7] कर्म कृतं यदेव मुनिभिः तैस्तैः फलैः वञ्चिताः ।'

इत्यादौ च उत्तरवाक्यानुगतस्यापि यच्छब्दस्य तच्छब्दापेक्षा दृश्यत एव । तथापि उत्तरवाक्यानुगतयच्छब्दोपादाने तच्छब्दानुपादानेऽपि न वाक्यार्थ-प्रतीतिविलम्बः । अतो नाविमृष्टविधेयांशतेति तदर्थात् । न तु तच्छब्दो-पादानेऽपि न तत्रान्वयबाधः इति भ्रमः कर्तव्यः ॥ इदमुपलक्षणम्—

---

1 'स्खलिताञ्चलान्ता'–क. 2 'धूमाञ्चितेन'–क. 3 वासवदत्तां दग्धां सम्भाव्य तामनुध्याय शोचतः वत्सराजस्योक्तिः । (रत्नावली) । 4 'वाक्यार्थ'–क. 5 'दह्यमाने'–ग. 6 'स दुर्गतः'–च. 7 'ननु तत्'–ज.

मर्थ्यात् पूर्ववाक्यानुगतस्य तच्छब्दस्य उपादानं नापेक्षते । यथा—

साधु चन्द्रमसि पुष्करैः कृतं
मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः [1] ॥ १८९ ॥

प्रागुपात्तस्तु यच्छब्दः तच्छब्दोपादानं विना साकाङ्क्षः [2] । यथा—अत्रैव श्लोके आद्यपादयोः व्यत्यासे । द्वयो[3]रुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम् ।

## सङ्केतः

पुष्करैः पद्मैः इन्दूदये साधु कृतम्, यत् मीलितम् इति तदो नापेक्षा ॥ उद्यता उद्गच्छता तेन इन्दुना ॥ प्रसिद्धमिति । यथा— 'यः करोति स कर्ता स्यात् ।' इत्यत्र ।

## मधुमती

तच्छब्देऽपि द्रष्टव्यम् । यथा—

व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदविलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः ॥ [4]

इत्यादौ ॥ एवं वाक्योपक्रमस्थयोरपि यत्तदोः मिथोऽपेक्षा । एवं च— अपेक्षानपेक्षे अन्वयबोधविलम्बाविलम्बकल्पनीये ॥

प्रागुपात्तः इति । तथा च तच्छब्दानुपादाने दोष एवेति भावः ॥

---

1 स्वापेक्षया अतिशयितसौन्दर्ये चन्द्रे उदिते, कमलैः मुकुलितमित्येतत् साध्वेव, परं लोकातिशायिनि कामिनीवदने भवति सति, उदयं प्राप्नुवन् चन्द्र एव अविचारितकारी इत्यर्थः । 2 'सापेक्ष'–क. 3 द्वयोः—यत्तच्छब्दयोः । 4 (कु. सं. ८-२) ।

अनुपादानेऽपि सामर्थ्यात् क्वचित् द्वयमपि गम्यते ।
यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्ति ते किमपि? तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिः विपुला च पृथ्वी[1] ॥१९०॥

---

## सङ्केतः

**ये नामेति** । नामेति असूयायाम् । इह प्रबन्धे देशे काले वा । **किमपि** स्वल्पम्, उपहासे तु लोकोत्तरम् । एषः शास्त्रनिर्माणविषयः यत्नः । तर्हि कान् प्रतीत्यत आह[2]—उत्पत्स्यत इति । सदसद्विभक्तिज्ञः[3] भावी **कश्चित्** इति सम्भाव्यते ॥

## मधुमती

**अनुपादानेऽपीति** । तथाच यत्तदोः अन्यतरोपादान एव दोषः इति तात्पर्यम् । ननु—यथा उभयानुपादाने सामर्थ्यात् उभयावगतिः, तथा

---

1 भवभूतेरियमुक्तिः । इह—अस्मिन् प्रबन्धे विषये । प्रथयन्ति—कुर्वन्ति । कालस्यानन्तत्वात् मत्समानहृदयः कश्चन उत्पत्स्यते इति हेतोः, अतिविस्तृतायां पृथिव्यां कश्चन तादृशः अस्तीतिहेतोश्च एष यत्नः इति भावः ॥ (मालतीमाधवे. १.)
2 'तान् प्रति न हीयाद'–ग. 3 विभक्तिः—विभागः । 'व्यक्तिज्ञः'–ग.

अत्र—यः उत्पत्स्यते तं प्रतीति। एवं च तच्छब्दानुपादाने अत्र [1] साकाङ्क्षत्वम्। न च 'असौ' इति 'त'च्छब्दार्थमाह [2] ॥

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितः
वसन्तकालो हनुमानिवागतः [3] ॥ १९१ ॥

---

### सङ्केतः

इत्थं यत्तदौ विचार्य 'योऽसौ सुभगे!' इति प्रस्तुते निर्वाहयति— एवं चेति। अत्र च 'योऽसा'विति श्लोके यच्छब्दानन्तरं तच्छब्दो नोक्तः, किन्तु अदश्शब्द एव। न चायमदश्शब्दः तच्छब्दार्थवाचीत्याह—न चेति॥

असाविति। मरुत् वायुः मारुतिपिता च। केसरः वकुलसटार्थः। ताराधिपौ सुग्रीवेन्दू। मण्डले विम्बराष्ट्रे। रामाः नार्यः, रामः भरताग्रजः॥

### मधुमती

अन्यतरोपादानेऽपि स्यात्, इति चेत्—भ्रान्तोऽसि। न हि यः उत्पत्स्यते तं प्रति इत्ययमर्थः शाब्द इत्युच्यते, किन्तु—सत्यां वाक्यार्थप्रतीतौ व्यञ्जनातः ईदृगर्थः प्रतीयते इति। प्रकृते तु तच्छब्दस्य अनुपादानात् वाक्यार्थप्रतीतिरेव दुर्लभा, कुतो व्यञ्जना?। अध्याहारे तु प्रतीतिः स्यात्॥ प्रकृते तु योजयति—एवं चेति। तथा च साकाङ्क्षत्वमेवेति भावः॥

---

1 'तनोति योऽसौ सुभगे' इत्यत्रेत्यर्थः। 2 असाविति पदं तदिति पदस्यार्थं न बोधयतीत्यर्थः। 3 (हनुमन्नाटके–६)।

अत्र हि—न तच्छब्दार्थप्रतीतिः[1]। प्रतीतौ वा[2]—

करवालकरालदोस्सहायः
युधि योऽसौ विजयार्जुनैकमल्लः।
यदि भूपतिना स तत्र कार्ये
विनियुज्येत ततः कृतं कृतं स्यात्[3] ॥ १९२॥

अत्र—'सः' इत्यस्य आनर्थक्यं स्यात्।

अथ—[4]

योऽविकल्पमिदमर्थमण्डलं
पश्यतीश! निखिलं भवद्वपुः।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम्[5] ॥ १९३॥

इति 'इदं' शब्दवत् अदश्शब्दः तच्छब्दार्थमभिधत्ते

---

## सङ्केतः

आनर्थक्यमिति। पुनरुक्तत्वात्॥

योऽविकल्पमिति। वस्तुजातमिदं निश्शङ्कं त्वदङ्गात्मतया यः पश्यति विचारयतीत्यर्थः। स्वात्मपक्षेति। सुष्ठु आत्मपक्षेण, स्वेन

## मधुमती

शङ्कते—अथेति। आत्मपक्षेति। 'द्वितीयाद्वै भयं भवति'

---

1 अदश्शब्देनेति शेषः। 2 अदश्शब्दस्य तच्छब्दपर्यायत्वे बाधकमाह—प्रतीताविति। 3 यदि दुर्योधनः खड्गभयङ्करबाहुं अर्जुनकार्तवीर्यपराक्रमं इमं कर्णं सेनाधिपत्ये नियुञ्ज्यात् तदा एतदवधिकृतं सर्वं सफलं स्यात्। 'जैनैकमल्लः'—क. 4 अदश्शब्दस्य नानार्थकत्वमाशङ्कते—अथेति। 5 (उत्पलाचार्यपरमेश्वरस्तोत्रावलिः–१२) 'आत्मपक्ष'—क.

इति—उच्यते। तर्हि अत्रैव वाक्यान्तरे उपादानमर्हति, न च तत्रैव। यच्छब्दस्य हि निकटे स्थितः तच्छब्दः प्रसिद्धिं परामृशति। यथा—

यत्तदूर्जितं अत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताऽक्षैः तदाऽनेन नूनं तदपि हारितम्[1] ॥१९४॥

इत्यत्र तच्छब्दः॥ ननु कथं—

---

## सङ्केतः

आत्मपक्षेणेति च। अस्येत्यस्य तस्येत्यर्थः॥ तर्हीति। यथा अत्र वृत्ते वाक्यान्तरे प्रयुक्तः, तथा अन्यत्रापि प्रयोक्तव्यः, न तु यत्र यच्छब्दः तत्रैव। न चेति। चः पुनरर्थे॥

यत्तदिति। इत्थं हि यत्तद्भ्यां अनुवाद्यत्वमेव,[2] न विधेयत्वम्। क्वचित्तु वाक्यान्तरगतत्वेन यच्छब्दनिकटेऽप्युच्यमानः अदश्शब्दः भिन्नविभक्तिकतया तच्छब्दार्थप्रतीतिकृत्॥ यथा—

'लीलया जगती जिग्ये येनासौ जयतु स्मरः।' इति॥

## मधुमती

इति हि श्रुतिः॥ दूषयति—तर्हीति। अत एव—

'न केवलं यो महतोऽपभाषते
श्रृणोति तस्मादपि यः स पापभाक्।'[3]

इत्यत्रापि न दोषः। वाक्यन्तरोपात्तयच्छब्देनाप्यस्यानन्वयात् वाक्यान्तरे

---

1 युधिष्ठिरं निन्दतः भीमस्य सहदेवं प्रत्युक्तिः। (वेणीसंहारे-१-१३)।
2 'यत्तद्यत्वमेव'–ग. 3 (कुमारसम्भवे ५-८३)।

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते !
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय[1] ॥ १९५ ॥

---

## सङ्केतः

कल्याणानामिति । अत्र पूर्वार्धे यत्तदोः गम्यमानता । तथाहि—यतः त्वं कल्याणानां पुण्यश्रीणां विधाने प्रभुः, अतः दृग्दानरूपं प्रसादं कुरु । उत्तरार्धे तु प्रसादनप्रकारोक्तिः । भद्रमिति । पुण्यानुबन्धकं पुण्यं

## मधुमती

इति उपलक्षणम् । लक्ष्यान्तरेऽपीति द्रष्टव्यम् ॥ न च—

'आजन्मनः शाठ्यमशिक्षितो यः
तस्याप्रमाणं वचनं जनस्य ।' इत्यत्र,
'शैत्यं हि यत् सा प्रकृतिर्जलस्य ।'

इत्यत्र च यच्छब्दस्य,

'कृतं तेन महत्कर्म येनासौ शिक्षितो द्विजः ।'

इत्यत्र अदश्शब्दस्य च यच्छब्दसांनिध्येऽपि न प्रसिद्धार्थकतेति वाच्यम् । यच्छब्दसामानाधिकरण्ययोग्यस्यैव तथा व्युत्पत्तेः । उक्तस्थलेषु च भिन्नविभक्तिकत्वेन भिन्नलिङ्गत्वेन च यच्छब्दसामानाधिकरण्यायोग्यत्वात् ॥ न चैवमपि—

"शिक्षितं युवतिनैपुणं तया
यत्तदेव गुरुदक्षिणीकृतम् ॥"

इत्यत्रापि तच्छब्दस्य प्रसिद्ध्यर्थकता स्यादिति वाच्यम् । अत्रापि एवकारान्वितत्वेन तच्छब्दस्य यच्छब्दसामानाधिकरण्यायोग्यत्वात् ॥

---

1 सूत्रधारकृता सूर्यप्रार्थना । (मालतीमाधवे–१-४) 'त्वमिह महसामीशिषे त्वं विधत्से पुण्यां लक्ष्मीम्'–क. 'देहि'–ख.

अत्र—यद्यदुक्त्या तन्मे इत्युक्तम् ?। उच्यते—यद्यदिति
येनकेनचित् रूपेण स्थितं सर्वात्मकं वस्तु आक्षिप्तम्,

---

## सङ्केतः

देहीत्यर्थः । तन्म इतीति । अत्र द्वितीयः तच्छब्दः नोक्तः इति भावः ।

## मधुमती

**अत्र यद्यदिति** । तथा च द्वितीयतच्छब्दानुपादानात् अत्र दोषः इति भावः । **येनकेनचिदिति** । यत्पदद्वयेन भिन्नरूपेणोपस्थितयोरपि तयोः केनचिदेकेनैक रूपेण एकतत्पदेन परामर्शसम्भवात् न दोषः इति भावः । न त्वत्र तत्पदवीप्सानिषेधेऽपि तात्पर्यम् ॥

न चैवं—यत्पदवीप्सया उपस्थितानामेतेषां एकतत्पदोपस्थापने बहुवचनापत्तिः, वीप्साकरणे तु वीप्सयैव तदुपस्थापनात् न बहुवचनापत्तिः इति वाच्यम् । न हि यावतां तेनतेन रूपेणोपस्थितिरत्र, किन्तु एकेनैव रूपेण इत्युक्तत्वात् । यत्र तु न तथोपस्थितिर्विवक्षिता तत्र वीप्सैव नेति भाव्यम् ॥

सञ्चारिणी दीपशिखेव रात्रौ
　यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे-
　विवर्णभावं स स भूमिपालः ॥ (रघु. ६-६७)

इत्यत्र तु स्वयंवराहूतानां तावतां राज्ञां तेनतेन रूपेणैव बुद्धौ स्थिरीकर्तुं तथोक्तत्वात् । यत्र तु न तथा—'यो यो धूमवान् स वह्निमान्' इत्यादौ तत्र वीप्सयैव निर्वाहः । तत्र हि वीप्सया धूमवत्सामान्यं विवक्षितम् ।

तथाभूतमेव तच्छब्देन परामृश्यते ॥

यथा वा[1]—

किं लोभेन विलङ्घितः स भरतः? येनैतदेवं कृतं,
मात्रा?, स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा?

---

## सङ्केतः

सूर्यस्तुतिरेषा। अतः क्रूरग्रहदृष्टिः न मङ्गलायेति विरुद्धमतिकृद्दूषणं नास्ति। भक्तिप्रस्तावात् ॥

यत्तच्छब्दौ विचार्य अविमृष्टविधेयांशे पुनरुदाहरति—**किं लोभेनेति। मध्यमा माता कैकेयी। अनयोः समास इति।** भिन्नविभक्ति-

## मधुमती

क्वचित् तत्पदवीप्सायामपि एकमेव यत्पदम्।' यथा—

'तत्तत् कर्म कृतं यदेव मुनिभिः।'
'तत्तत् कर्म कृतं तेन येनारिरपि विस्मितः।' इत्यादौ।

क्वचित् अवीप्सितानेकतच्छब्दोपादानेऽपि एकमेव यत्पदं प्रयुज्यते। यथा—

"स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्।
स शूरः स च विक्रान्तः यं त्वं देवि! निरीक्षसे।"[2]

इत्यादौ। तस्मात्—यत्र यत्तदोः मिथोऽपेक्षा तत्र एकतरशब्दोपादाने दोषः। उभयोपादानं तु वीप्सया अन्यथा वा स्यात् इति न कश्चिद्विरोधः इति अखण्डार्थः ॥

---

1 'तथा'–क. 2 'यस्त्वया देविवीक्षितः'–ज.

मिथ्यैतन्मम चिन्तितं द्वितयमपि, आर्यानुजोऽसौ गुरुः,
माता तातकलत्रमिति, अनुचितं मन्ये विधात्रा कृतम् ॥ [1]

अत्र—आर्यस्येति तातस्येति च वाच्यम् । न तु अनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेष्वप्युदाहार्यम् ॥

---

### सङ्केतः

निर्देशे हि तातार्ययोः विधेयत्वे विवक्षितस्य प्रकर्षः प्रतीयते इति । ननु—असमासेऽपि कृते गौणत्वमेव, यतो गौणात् षष्ठी स्यादिति स्थितिः । सत्यम् । लक्षणभाषया इदं गौणत्वम् । साहित्यभाषया तु असमासे विधेयत्वमेव । अयं भावः—समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि [2] यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारहेतुतया प्राधान्येन विवक्षितः विधेयः स्यात्, अन्यस्तु अनूद्यमानकल्पतया गौण इव भवेत्, तदासौ न [3] वृत्तेर्विषयो भवितुमर्हति । तस्यां हि सः प्रधानेतरभावः तयोर्विनश्येत् ॥ विशेषणं अवच्छेदकत्वात् गौणम्, विधेयं च विवक्षितत्वात् प्रधानम् । तदेतयोः मिथोविरोधे एकत्र योगासम्भवात् समास एव न घटते इति तु न वाच्यम् । विरोधस्य उभयवस्तुनिष्ठत्वात् शीतोष्णादिवत् । न च वस्तुता

---

1 रामवनवासे हेतुं चिन्तयतः लक्ष्मणस्योक्तिरियम् । विलङ्घितः—आक्रान्तः, 'मातैव वा'—क. 2 सर्वेषामेव समासानां विशेषणविशेष्याभिधायिपदोपचरितशरीरत्वमेव समासप्रयोजकं सामर्थ्यम् । स च विशेषणविशेष्यभावः द्विधा—समानाधिकरणः, व्यधिकरणश्चेति । आद्यः कर्मधारये । यत्र तु द्वे बहूनि वा पदानि अन्यस्य पदस्यार्थे विशेषणभावं भजन्ते तत्र बहुव्रीहिः । तत्रैव संख्यायाः विशेषणभावे द्विगुः । प्रतिषेधस्य विशेषणभावे नञ्समासः । द्वितीयस्तु—कारकाणां सम्बन्धस्य च विशेषणत्वेन बहुविधः । तत्रैव तत्पुरुषः । अव्ययार्थस्य विशेष्यत्वे तु अव्ययीभावः । एवं सर्वेषामपि समासानां विशेषणविशेष्योभयांशस्पर्शित्वेऽपीत्यर्थः । 3 'न' इति नास्ति—ग.

विरुद्धमतिकृत् यथा—

श्रितक्षमाः रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः [1] ॥ १९७॥

अत्र—क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते, हताः इति विरुद्धार्थप्रतीतिः ॥

---

## सङ्केतः

द्वयोः स्यात् । एकस्यैव वास्तवत्वात् । अन्यस्य वैवक्षिकत्वेन व्यत्ययात् । सत्येभ-कल्पनासिंहयोरिव न च वस्त्ववस्तुनोर्विरोधः । फलभेदस्तु स्यादेव । तथाहि—एकस्य सर्वगम्यं शाब्दिकैकविषयः पदार्थसम्बन्धमात्रम् । अन्यस्य तु सहृदयवेद्यः कवीनामेव गोचरः वाक्यार्थचमत्कारातिशयः इति ॥ **एवमिति** । समासान्तरोदाहरणानि तु विस्तरभयात् नोक्तानि ॥

**श्रितेति** । सोपशमाः क्ष्मापतिताश्च । अनुरक्ता भूः येषाम्, **रक्तस्य** वा भुवः स्थानम् । शिवं श्रेयः शिवा सृगाली । विग्रहौ रणदेहौ । **असुखं** दुःखम्, असवः खानि च [2] ॥

## मधुमती

**विरुद्धेति** । अत्रापि तादृशनानापदघटितत्वादेव वाक्यदोषत्वं द्रष्टव्यम् । ननु-श्रुतिकटुत्वादिदोषदुष्टानेकपदघटितवाक्ये यथा ते दोषाः उदाहृताः तथा च्युतसंस्कारादिविषये नोदाहृतमिति चेत्—मैवम् । एते वाक्ये न सम्भवन्तीति विभावयितुं तथोदाहरणात् । न ह्यन्येऽपि दोषाः तद्घटितत्वपुरस्कारेण तत्रोदाहृताः, किन्तु येषां पदे समुदाये च सत्त्वं त एव । तत्र च—'यस्य च पदमात्रसम्भवः न तु तत्समुदाये'—इत्युक्तत्वादिति ॥

---

1 सामोपायलब्धसिद्धीनां राज्ञां वर्णनम् । 2 विगतप्राणेन्द्रियाः इत्यर्थः ।

अथ पदैकदेशे यथासम्भवं क्रमेणोदाहरणानि—

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वः तत्त्वमालोचयामः
तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा [1] ॥ १९८ ॥

अत्र—'त्वा'दिति । यथा वा—

तद् गच्छ सिद्धयै कुरु देवकार्यं
अर्थोऽयं अर्थोत्तर[2]लभ्य एव ।

---

### सङ्केतः

इदानीं पदैकदेशे यथालाभं दोषान् उदाहरति—**अथ पदैकदेश इति** ॥

**अर्थोत्तरेति** । धर्मार्थेति पाठापेक्षया **अर्थोत्तरः** कामः ॥

### मधुमती

न ह्यत्र वैरस्यमनुभूयते इति शङ्कायां तदपनेतुं अनभ्यासेऽपि तदुदाहरति—**तद्गच्छेति** । **अर्थान्तरलभ्यः**—पार्वतीतपोमहिमलभ्यः ।

---

1 कस्याञ्चित् कामिन्यां अनुरक्तस्योक्तिरियम् । (बिल्हणचरिते ५८) अङ्गनायाः सङ्गमेन अलं—प्रयोजनं नास्तीति इत्यन्वयः । 2 'अर्थान्तर'—क.

अपेक्षते प्रत्ययमङ्गलब्ध्यै [1]
बीजाङ्कुरः प्रागुदयादिवाम्भः [2] ॥ १९९ ॥

अत्र—'द्ध्यै' 'ब्ध्यै' इति कट्ठ ॥

---

## सङ्केतः

**कट्विति** । ननु—प्रकृति-प्रत्यय-सम्बन्ध-वचन-पुरुषव्यत्यय-पूर्वनिपात-तद्धित-विभक्तिविशेष-उपसर्ग-निपातानां असमासादिरूपः पदांशः स्यादिति, "द्ध्यै-ब्ध्यै" इति तु प्रकृत्येकदेशरूपत्वात् न पदांशः ? । सत्यम् । परं ऊहकानामेवात्राधिकारः इति ज्ञापनार्थं एवमुक्तम् । अत एव—

'भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।' [3]

इत्यत्र प्रस्तावे आचार्येण मतद्वयं न निषिद्धम् । तन्निषेधक्रमेण यथा गोशब्दप्रवृत्त्या तत्सहचरितानां गुणानां लक्ष्यमाणत्वम्, लक्ष्यमाणानां च गुणानां गोशब्दप्रवृत्तिहेतुत्वमिति अन्योन्याश्रयत्वम् । तस्मात्—स्वार्थसहचारिगुणाभेदेनेति गौणलक्षणायाम् गुणानां निमित्तत्वमेव, न पुनर्लक्ष्यत्वम्, ततः साधारणगुणेति इति ॥

## मधुमती

**अङ्गलब्ध्यै**—स्वरूपसिद्ध्यै । प्रत्ययं कारणं अपेक्षते ॥

---

1 'अङ्गसिद्ध्यै'-क. 2 कामं प्रति इन्द्रस्योक्तिः । देवकार्यं—स्कन्दोत्पत्ति-भूमिकारचनम् । अर्थान्तरं—उमामहेश्वरसङ्गमोऽपि । अङ्गलब्धिः—कार्यस्वरूपलाभः । 'प्रत्ययमुत्तमं त्वाम्'-क. 3 (काव्यप्रकाशकारिका १२) ।

यश्चाप्सरोविभ्रममण्डनानां
संपादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागां
अकालसन्ध्यामिव धातुमत्ताम्[1] ॥ २०० ॥

अत्र—'मत्ता'शब्दः क्षीबार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवः
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा[2] ॥ २०१ ॥

## सङ्केतः

आदाविति । दृशां स्मरभल्लीनां इति रूपके सति—

"एकत्रोत्प्रेक्षितत्वेन यत्रार्थाः बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥"

इति न्यायात् युक्ता पानकर्मणः उत्प्रेक्षा । अन्यथा तु व्याख्यायां भल्ली-पानकर्मविषयं उत्प्रेक्षाद्वयं आपद्यते । ततश्च इवशब्दद्वयं प्रसज्यते ।

## मधुमती

क्षीबार्थे इति । यद्यप्येवमर्थानुसन्धाने निहतार्थमेव । अथापि नेदं पदं अस्माभिः निहतार्थमित्युच्यते इति भावः ॥

---

1 हिमालयवर्णनमिदम् । (कुमारसंभवे १-४). 2 भाविविरहेण रुदत्याः कस्याश्चित् वर्णनमिदम् । भल्ली—बाणविशेषः । धारायाः तैक्ष्ण्यार्थं शस्त्रं पङ्केन लिप्त्वा अग्नौ सन्ताप्य पयसि निक्षिप्यते इति तदेवात्रपानकर्मस्वरूपम् ।

अत्र—'दृशां' इति बहुवचनं निरर्थकम्, कुरङ्गेक्षणायाः एकस्या एव उपादानात् । न च—

अलसवलितैः प्रेमार्द्रार्द्रैः मुहुर्मुकुलीकृतैः
क्षणमभिमुखैः लज्जालोलैः निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय, सुकृती कोऽयं मुग्धे! त्वयाऽद्य विलोक्यते? ॥ [1]

इत्यादिवत् व्यापारभेदात् बहुत्वम् । व्यापाराणां अनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते ॥ अत्रैव 'कुरुते' इति आत्मनेपदमपि अनर्थकम् । प्रधानक्रियाफलस्य कर्त्रसंबन्धे कर्त्रभिप्रायक्रियाफलाभावात् ॥

---

## सङ्केतः

अत्र तु एक एव इवशब्दः । किञ्च—भल्ल्युत्प्रेक्षायां तासां असत्यत्वेन पानकर्मक्रियाऽप्यसङ्गता । अन्यच्च—दृशः कामस्य भल्ल्य इव इति न, किन्तु—भल्ल्य एव इति रूपकव्याख्या श्रेष्ठा ॥

## मधुमती

**अत्र दृशामिति** । यद्यपि अत्र एकवचनेनापि पादपूरणसम्भवात् न पादपूरणमात्रार्थत्वं बहुवचनस्य, नाप्यव्ययत्वमिति न निरर्थकत्वम् । तथापि पादपूरणमात्रार्थमित्यनेन तदतिरिक्तप्रयोजनराहित्यं विवक्षितम् । तदिहाप्यस्ति । तथा अव्ययत्वेन स्वतन्त्रप्रयोगाविषयत्वं विवक्षितम्, तच्चेहाप्यस्तीति न निरर्थकत्वोक्तिविरोधः । अत एव पददोषप्रकरणे पदमेवोदाहृतम् । अत्र तु तदेकदेशो विभक्तिरुदाहृतेति ध्येयम् ॥

**अत्रैवेति** । **कर्तृसम्बन्धः** कर्तृनिष्ठत्वम्, तदभावे इत्यर्थः ।

---

1. (अमरुशतके).

चापाचार्यः त्रिपुरविजयी कार्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधिः, भूरियं हन्तकारः ।
अस्त्येवैतत्; किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धः तव परशुना लज्जते चन्द्रहासः [1] ॥२०३॥

---

## सङ्केतः

**अळसेति** । अत्र वृत्ते **ईक्षणैः** इति पदमस्ति । तस्य च व्यापार भेदात् बहुत्वं युज्यते । **प्रधानेति** । कामिनी हि दशां निषेकफलं न लभते, विरहावस्थायाः तथैवाद्यापि सद्भावात् । **षण्ड इति** । क्लीब इत्यर्थः । [2]

## मधुमती

'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यत्र—यत्र कर्ता स्वक्रियया तत्फलं अभिप्रैति अभिसंबध्नाति—इति व्याख्यानात् । अत एव 'यजन्ति याजकाः' 'पचन्ति पाचकाः', 'पठन्ति पाठकाः' इत्यादौ नात्मनेपदम् । क्रियाफलस्य यजमानाद्यात्मनिष्ठत्वात् । एतच्च पाणिनीयमतानुसारेण । कालापमतानुसारेण तु—कर्तृनिष्ठेऽपि क्रियाफले आत्मनेपदं साध्वेव, 'वृक्षं परिवारयन्ते कण्टकाः' इत्यादिप्रयोगस्य तत्र दर्शनात् [3] । यद्यपि—'नाथते कुचयुगम्' इति वदता अत्रापि तथैव असाधुत्वमेव वक्तुमर्हम्, न तु निरर्थकत्वम् । तथापि—कर्तृनिष्ठे क्रियाफले द्योत्ये करणरूपार्थवाचकस्यैव करोतेरात्मनेपद-विधानात् आत्मनेपदद्योत्यफलाभावेन प्रयोजनशून्यतया निरर्थकत्वमेव, न

---

1 रावणस्य परशुरामं प्रत्युक्तिरियम् । विजेयः-विजितः । शस्त्रव्यस्तः—शस्त्रेण स्वस्थानात् दूरमुत्क्षिप्तः । हन्तकारः—षोडशग्रासात्मिका अतिथिभिक्षा । किमु—किन्तु । मम खड्गः इत्यर्थः । (बालरामायणे २-३७) । 2 एतद्रीत्या मूले 'कथय सुकृती कोऽयं षण्डः' इति पाठः स्यात् । 3 अन्यथा तत्रात्मनेपदं न स्यात् । तत्र परिवारणरूपक्रियाफलस्य दुरधिगमनत्वादिलक्षणस्य वृक्षगामित्वेन परिवारणक्रियाकर्तृकण्टकगामित्वाभावात् । 'यजन्त्यविधिपूर्वकं' इति कविप्रयोगाच्चेतिभावः ।

अत्र 'विजेयः' इति कृत्यप्रत्ययः क्तप्रत्ययार्थे अवाचकः ॥

अतिपेलवं अतिपरिमित-
वर्णं लघुतरं उदाहरति शठः ।
परमार्थतः स हृदयं
वहति पुनः कालकूटघटितमिव [1] ॥ २०४ ॥

अत्र—'पेलव' शब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिः ऊर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः [2] ॥ २०५ ॥

अत्र—'पूय' शब्दः ।

---

## सङ्केतः

**य इति** । **सुखेति** प्रभृत्यर्थम् । **कीलनं** सम्बन्धः । **सौजन्येन मान्या जनिः** जन्म यस्य स तथा ॥

## मधुमती

त्वसाधुत्वम् । नाथतेस्तु 'आशिषि नाथः' इति आशिष्यर्थे वाच्ये एव आत्मनेपदविधानात्, यच्चारूपार्थान्तरे असाधुत्वमेवेति द्रष्टव्यम् ॥

**अत्र विजेय इतीति** । विजेय इति अर्हे कृत्यानुशासनात्, कालत्रयसाधारण्येन विजययोग्यतामात्रं प्रतीयते, न तु विजितः इति क्तप्रत्ययान्तेनेव विजयस्यातीतत्वम् । विवक्षितं तु तथा । अन्यथा सिद्धत्वाप्रतिमोत्कर्षवत्त्वाद्यप्रतीतेः ॥

**ऊर्जितमूर्जितानां** इति पततिक्रियाविशेषणम् ।

---

1 मित्रं प्रति आप्तस्य उपदेशोऽयम् । उदाहरति—वदति । स्ववाक्यसत्यत्व प्रत्यायनायेति शेषः । 2 महापुरुषप्रशंसेयम् ।

विनयप्रणयैककेतनं
सततं योऽभवदङ्ग! तादृशः ।
कथमद्य स तद्वदीक्ष्यतां
तदभिप्रेतपदं समागतः [1] ॥ २०६ ॥

अत्र—'प्रेत'शब्दः ।

कस्मिन् कर्मणि सामर्थ्यं अस्य नोत्तपतेतराम् ।
अयं साधुचरः तस्मात् अञ्जलिर्बध्यतामिह [2] ॥ २०७ ॥

अत्र—किं 'पूर्वं साधुः'? उत 'साधुषु चरति'? इति सन्देहः ॥

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोवाणैः तेजो यस्य विभाव्यते [3] ॥ २०८ ॥

अत्र—वचश्शब्देन गीश्शब्दो लक्ष्यते । अत्र खलु न

---

## सङ्केतः

विनयेति । प्रेतपदं इति पदांशः श्मशानार्थकः ॥

उत्तपते समुल्लसति । उत साधुष्विति । अयं प्रकृतोऽर्थः ।

## मधुमती

पूर्वं साधुरिति । 'भूतपूर्वे चरट्' इति चरट्प्रत्यये । साधुष्विति । 'चरेष्टः' इति टप्रत्यये । सन्देह इति । तात्पर्यानिश्चयः इति भावः ॥

अत्र वच इति । एव च वचोवाणैः इतिवत् गीश्शराः इत्यत्रापि

---

1 सखायं प्रति कस्यचित् पूर्ववृत्तमैत्रीकस्य पुरुषस्य वृत्तान्तकथनमिदम् । इदानीं नीचाभिलषितं नीचपदं प्राप्तोऽप्ययं वस्तुतो नीचपुरुषसदृशतया कथं दृश्यः स्यात् इति भावः । 2 साधुचरः—भूतपूर्वः साधुर्वा । भूतपूर्वे चरट् । 3 वचोवाणैः—गीर्वाणैः ।

केवलं पूर्वपदं, यावत् उत्तरपदमपि पर्यायपरिवर्तनं न क्षमते। जलध्यादौ तु उत्तरपदमेव, बडबानलादौ पूर्वपदमेव। यद्यपि—असमर्थस्यैव अप्रयुक्तादयः केचन भेदाः। तथापि अन्यैः आलङ्कारिकैः विभागेन प्रदर्शिताः इति भेदप्रदर्शनेनोदाहर्तव्याः इति च विभज्योक्ताः॥

---

## सङ्केतः

**उत्तरपदमिति।** बाणस्थाने अन्यः कोऽपि शरादिशब्दः न निवेश्य इत्यर्थः। **जलध्यादाविति।** परिवर्तनं न क्षमते इति योगः। जलभृत् इत्युक्ते हि मेघस्य प्रतीतिः नाब्धेः। यदुक्तम्—

'शब्दप्रवृत्तिहेतौ सत्यप्यसमर्थमेव रूढिवशात्।
यौगिकमर्थविशेषे पदं यथा वारिधौ जलभृत्॥" इति॥

**यद्यपीति।** अनादृतत्वात्, निहतार्थत्वात्, अवाचकत्वात्, सन्दिग्धत्वात्, केवलशास्त्रप्रयुक्तत्वात्, कल्पितार्थत्वाच्च विवक्षितमर्थं वक्तुमसमर्थं च यत्, तत् **असमर्थमिति।** ततः **अप्रयुक्तादयः** दोषाः अत्र अन्तर्भवन्ति। एवमन्येऽपि यथासम्भवं अन्तर्भाव्याः॥

## मधुमती

नेयार्थत्वमेव। **जलध्यादौ त्विति।** तेन समुद्रे अभिधेये जलाधारपदस्य नेयार्थता। **बडवेति।** एवं च—'तुरङ्गकान्तामुखहव्यवाहनम्' इत्यादि दुष्टमेव॥

**यद्यपीति।** **अप्रयुक्तादयः** इत्यादिपदात् अवाचकनेयार्थादीनां परिग्रहः। **तथापीति।** उपधेयसङ्करेऽप्युपाधीनामसाङ्कर्यात् पृथग्दोषत्वमित्यर्थः॥

प्रतिकूलवर्णं उपहतलुप्त-
विसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं
पतत्प्रकर्षं समाप्तपुनरात्तम् ॥५३॥
अर्धान्तरैकवाचकं
अभवन्मतयोगं अनभिहितवाच्यम् ।
अपदस्थपदसमासं
सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥५४॥
भग्नप्रक्रमं अक्रमं
अमतपरार्थं च वाक्यमेव तथा ॥

---

## मधुमती

ननु—प्रकृतिप्रत्यययोरुभयोरपि पदैकदेशत्वात् कथं न सर्वदोषभावः? कथं वा न तत् उदाहरणम्? उच्यते—'सुप्तिङन्तं पदम्' इति पदविधायकसूत्रे सुबन्ततिङन्तयोः तद्गुणसंविज्ञानबहुव्रीहिसिद्धतया अन्यपदार्थप्रधानत्वेन, प्रत्ययोपसन्धाने प्रकृतिरेव पदम्। अत एव पददोषप्रकरणे तथैवोदाहृतम्। प्राधान्याच्च प्रकृतेः पदत्वं विवक्षित्वा तदतिरिक्तः पदाघटकः तदेकदेशत्वे नाभिमतः प्रकृत्येकदेशश्च। अत एव तदपि तथैवोदाहृतम्। सामासिकपदघटकपदानां तु तद्दशायामप्रकृतित्वेऽपि, दशान्तरे प्रकृतित्वेन, यस्तु कदाऽपि न प्रकृतिः तस्यैव तदतिरिक्तत्वेन च उक्तत्वात्, तं सामसिकपदैकदेशमादाय नातिप्रसङ्गः। यच्च चतुर्थोल्लासे प्रकृतेरपि पदैकदेशत्वमुक्तम्, तत् उपसन्धानावस्थस्य पदत्वमभिप्रेत्य। न हि विवक्षाभेदेन एकस्यैव पदत्वतदेकदेशत्वयोरभिधाने विरोधः कश्चित्। अत एव चशब्देन तदुभयमप्यभिप्रेतम्॥

रसानुगुणत्वं वर्णानां वक्ष्यते,[1] तद्विपरीतं प्रतिकूलवर्णम्[2]। यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णं आकण्ठं कलकण्ठि! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर[3] ॥ २०९ ॥

रौद्रे यथा—

देशः सोऽयं अरातिशोणितजलैः यस्मिन् ह्रदाः पूरिताः,
क्षत्रादेव तथाविधः परिभवः तातस्य केशग्रहः[4]।

---

## सङ्केतः

**प्रतिकूलेति**। वर्णग्रहणस्य उपलक्षणत्वात् समासरचने अपि ग्राह्ये ॥

**देशस्सोऽयमिति**। यत्र देशे परशुरामपिता जमदग्निः हैहयेन केशेषु गृहीतः स इत्यर्थः। क्षत्रम् प्रस्तावात् सहस्रार्जुनः। रामः

## मधुमती

सम्प्रति असाधारणान् वाक्यदोषानाह—**प्रतिकूलेति**। **तथेति**। दुष्टमित्यर्थः ॥

**तद्विपरीतम्** तत्तद्गुणाननुगुणवचनम्। तेन 'दीर्घसमासत्वं चोचितम्' इत्यागामिग्रन्थेन न विरोधः। अन्यथा वर्णप्रस्तावेन समं औचित्याभिधानं असङ्गतं स्यात् ॥ इदं त्ववधातव्यम्—यत्, ओजसि प्रतिकूलवर्णत्वमेव। माधुर्ये तु प्रतिकूलवर्णत्वं श्रुतिकटुत्वं चेति द्वयम्। अत एव ओजसि श्रुतिकटुत्वं नोदाहृतम्। माधुर्ये तु प्रतिकूलवर्णत्वमुदाहृतमिति ॥

**देश इति**। नन्वेवं 'कृतमनुमतम्' इत्यादावपि प्रागुदाहृते कथं

---

1 अष्टमे उल्लासे। 2 'तद्विपरीतत्वं प्रतिकूलवर्णत्वम्'—क. 3 नायिकासमागमोत्सुकः कश्चिदेवं वदति। अयि कोकिले! अप्रतिहतौत्सुक्येन कण्ठपर्यन्तं पूर्णं मां क्षणमपि वा नायिकाकण्ठालिङ्गनशालिनं कुरु, मदीयां कण्ठपीडामपहरेत्यर्थः। 4 'केशग्रहात्'—क.

तान्येवाहितशस्त्र[1]घस्मरगुरूण्यस्त्राणि भास्वन्ति मे,
यद्रामेण कृतं तदेव[2] कुरुते द्रोणात्मजः क्रोधनः[3] ॥२१०॥

---

## सङ्केतः

परशुरामः । पाण्डवैः केशाकृष्टे द्रोणे अश्वत्थामोक्तिरियम् । अहितानां[4] शस्त्राणां घस्मराणि च तानि गुरूणि च तानि तथा ॥

"मन्त्राधिष्ठितमस्त्रं स्यात् शस्त्रं सासान्यमायुधम् ॥"

## मधुमती

रौद्रव्यञ्जकत्वम् ? प्रतिकूलवर्णताख्यदोषेण रसाभिव्यक्तिप्रतिबन्धात् इति चेत्—न । तद्दोषाप्रतिसन्धानदशायां तदभिव्यक्तिसम्भवाभिप्रायेण तस्योदाहृतत्वात् ॥ वस्तुतस्तु—वाच्याननुगुणवचनत्व—वक्त्रननुगुणवचनत्व—प्रबन्धाननुगुणवचनत्वानि (विवक्षितरसाननुगुणवर्णत्व—तादृशसमासत्व—तादृशरचनात्वानि) प्रत्येकमेव दोषाः । अन्यथा—तदुभयज्ञानेऽपि चमत्कारानुत्पत्त्या अनयोः पृथग्दोषत्वं स्यात् ॥ न चैवं विभागव्याघातः । तादृशस्वरूपयोग्यत्वेन त्रयाणामेकीकृत्य एवं विभजनात् ॥

---

1 'हेति'—ख. 2 'तदद्य'—ख. 3 'कोपनः'—क. 'क्रोधतः'—ख. कुरुक्षेत्रे द्रोणवधक्रुद्धस्य अश्वत्थाम्नः कर्णं प्रत्युक्तिरियम् । यत्र हि भार्गवः कार्तवीर्यार्जुनकृतपितृवधामर्षितः तज्जातीयान् सर्वान् निहत्य कुरुक्षेत्रे तद्रुधिरैः पञ्च ह्रदान् पूरयामास स एवायं देशः, क्षत्रियादेव धृष्टद्युम्नात् मत्तातस्य द्रोणस्यापि केशान् गृहीत्वा शिरः छिन्नम्, शत्रुशस्त्राभिभावकानि मदीयान्यस्त्राण्यपि तान्येव, अत एव परशुरामेण यत् कृतं पितृवैरनिर्यातनं तदेव क्रोधशीलः अहमपि करोमीति भावः । (वेणीसंहारे ३-३३) । 4 'अहितानाम्'—ग.

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं च उचितम्। यथा—

प्रागप्रासनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलः त्वत्कण्ठपीठातिथिः
येनानेन जगत्सु खण्डपरशुः देवो हरः ख्याप्यते[1]॥२११॥

यत्र तु न क्रोधः, तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः॥

उपहतः—उत्वं[2] प्राप्तः, लुप्तो वा विसर्गः यत्र तत्। यथा—

धीरो[3] विनीतो निपुणः वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः[4]॥२१२॥

---

### सङ्केतः

प्रागिति। निशुम्भः भङ्गः। अपविद्धः उल्लालितः। तथैव—येनानेनेत्यादि तथा—क्रोधाभावोचितमृदुवर्णविन्यासदीर्घसमासवर्जनाभ्यां प्रतिकूलवर्णादिन्यासः। गुणविन्यास[5] एवेत्यन्ये॥

धीर इति। एवं हि सन्दर्भसौष्ठवं न स्यात्। विसर्गस्य उत्व-

### मधुमती

उपहत इति। यावता उपघातेन—नोपपद्यते इति न, वैरस्यं चानुभूयते—इत्यर्थः॥ उपहताः इति बहुत्वमत्र भाव्यम्। एकस्य

---

1 धनुर्भङ्गक्रुद्धस्य परशुरामस्योक्तिरियम्। इतः पूर्वं अप्राप्तपरिभवशिवधनुर्द्वैधीकरणाविर्भूतक्रोधसमुत्साहितभीषणभार्गवभुजस्तम्भक्षिप्तः उज्ज्वालो वेगवत्तरः परशुः क्षणादेव त्वत्कण्ठच्छेत्ता भवतु, येनानेन परशुना हरो देवः शत्रुखण्डकपरशुरिति ख्यापितो भवतीत्यर्थः। (महावीरचरिते २-३३)। 2 'ओत्वं'—क. 3 'वीरः'—ख. 4 'प्रभान्विता'—ख. 5 'व्यत्यास'—घ.

विसन्धि—सन्धेः वैरूप्यम्—विश्लेषः, अश्लील-
त्वम्, कष्टत्वं च। तत्र आद्यं यथा—

राजन्! विभान्ति भवतः चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः।
धीदोर्बले अतितते उचितानुवृत्ती[1]
आतन्वती विजयसम्पदमेत्य[2] भातः[3] ॥ २१३॥

---

## सङ्केतः

प्राप्तिलोपविभणनात्[4], पररूपाद्कल्पादिना[5] उपहतत्वे सति बन्धसौष्ठवभावात् न दुष्टत्वम् ॥

सन्धेरिति। सन्धिः स्वरयोः समवायः। स च संहिताकार्येण क्षीरनीरयोरिव एकीभावः, कपाटवत् तयोः व्यञ्जनानां च नैकट्यमात्ररूपो वा। राजन्निति। तानि तते इति स्थानद्वयेऽपि स्वरयोः नैकट्यमात्ररूपः सन्धिः ॥

## मधुमती

विसर्गस्य तथात्वे अवैरस्यात् ॥ विसर्गबाहुल्यमप्यत्र योज्यम्। अत्रैव—

'स्मरः खरः खलः कान्तः कायः कृशतरः सखि!'

इत्यत्रापि वैरस्यानुभवात् ॥

विसन्धीति। तथाच सन्धिविरहः एव सन्धिवैरूप्यम्। तच्च सन्धेः विश्लेषे, अश्लीलार्थप्रतीतिहेतुत्वे, श्रुतिकष्टत्वे च भवतीति प्रत्येकमेव

---

1 'तार्थवृत्ती'–क. 2 'दमेषु'–ख. 3 राजन्! यानि पातालेऽपि इन्दुवत्प्रकाशमानानि तानि भवतः चरित्राणि। तेषु च तव धीबलबाहुबले अतिविस्तृते उचितार्थानुसारिणी विजयसम्पदं चातन्वती प्रकाशेते इत्यर्थः। 4 'लुप्तिभणनात्'–ग. 5 'पररूपकल्प्यादिना'–ग.

यथा वा—

तत उदितः उदार[1]हारहारि-
द्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्त[2]कान्तकान्तिः
बत ! मुक्ता[3]मणिवत् चकास्त्यनर्घः[4] ॥२१४॥

संहितां न करोमीति स्वेच्छया[5] सकृदपि दोषः ।

---

सङ्केतः

स्वेच्छयेति । 'विवक्षितश्च सन्धिर्भवति' इत्युक्त्याश्रयणे तु[6]

मधुमती

दोषत्वेऽपि समुचितसम्बन्धित्वेनोपाधिना विभजनात् न विभागव्याघातः । अत्र—

'सन्धिरेकपदे नित्यः नित्यो धातूपसर्गयोः ।
नित्यः समासे द्रष्टव्यः अन्यत्र तु विभाषया ॥'

इति श्रवणात् ऐच्छिकतया, 'पदयोः सन्धिः संहिता एकपदवत् पादेषु अर्धान्तवर्जम्' इति काव्यसमयस्वरसात् नित्यं च संहिताप्राप्तौ तदकरणाद्दोषः ॥

सर्वमतसाधारण्येन उदाहरणान्तरमाह—तत इति । अत्र ततोदितोदारहारहारि इति, निजवंशोदात्तकान्तकान्तिः इति च वक्तव्ये असंहित-

---

1 'उद्गत एव'–क. 2 'उदार'–क. 3 'नवमुक्ता'–ख. 4 'स्त्यनर्घ्यः'–क. पतिंवरां प्रति सख्या उक्तिरियम् । ततः—प्रसिद्धात् वंशात् । यस्मिन् निजवंशे । मुक्तामणीनां च वेणुजन्यत्वं प्रसिद्धम् । यथोक्तम्—'गजेन्द्र–जीमूत–वराह–शङ्ख–मत्स्य–अहि–शुक्त्युद्भव–वेणुजानि । मुक्ताफलानि प्रथितानि लोके ।' इति ॥ 5 'स्वेच्छा'–क. 6 'श्रयेण'–ग.

प्रगृह्यादिहेतुकत्वे तु असकृत्[1] ॥

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु[2] ॥ २१५ ॥

---

## सङ्केतः

तांन इन्दोः' इत्यत्र सन्ध्यभावः अदुष्ट एव । **प्रगृह्येति** । 'अयादीनां यवलोपः'[3] 'द्विवचनमनौ'[4] इत्यादिसूत्रैः यत्र प्रकृतिः स्यात् तत् प्रगृह्यं पदम् । आदिशब्दात् विसर्गलोपे यत्र न सन्धिः तदपि गृह्यते । **असकृदिति** प्रकृतिस्थत्वविधानम्[5] । **धीदोर्बले** इत्यादाविव यदा पुनःपुनः क्रियते तदा दोषः । सकृत्तु न दोषः ॥

**वेगादिति** । अत्र—**डुड्डी** इति, **चलन्** इत्यत्र नस्य 'डढणे'[6]तिसूत्रेण णत्वे **लण्डा** इति, **रुचिङ्कुरु** इत्यत्र **चिङ्कुः** इति च शब्दाः वराङ्ग-मेढ्र-योनिमणिवाचकाः । अत्र च व्यञ्जनैकव्यमात्ररूपः सन्धिः । **उत्तपते** भाति ॥

## मधुमती

तयोपादानात् दोषः । न चात्र साधुत्वमेव । **प्रगृह्यहेतुका**नुशासनकासकृद्विश्लेषस्य वाक्यदोषत्वकल्पनात् । सकृत्त्वे त्वदोषः । वस्तुतस्तु—उपहतलुप्तविसर्गस्येव विसन्धेरपि बन्धवैरूप्याधायकत्वेन दोषत्वम् । अत एव—'अनित्यसमासेऽपि अनित्यैव संहिता' इति यन्मतं, तत्राप्ययं दोष एवेति ध्येयम् ॥ अत्रेव तत्रापि वैरस्यानुभवात् इति ॥

---

1 'हेतुत्वे न त्वसकृत्'–ख. 2 डामरचेष्टितः–भयङ्करचेष्टः । पक्षी प्रकाशते । रुचिं–प्रीतिम् ॥ अत्र च रण्डा' इतिपाठमादाय 'रण्डा' इति अश्लीलत्वमाहुः । 3 'श्रयेण'–ग. 4 (हे. श.) । 5 'प्रकृतिस्त्वव्यवधानम्'–ग. 6 (हे. श.) ।

अत्र—सन्धौ अश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते[1] चार्व्यवस्थितिः[2] ।
नात्रर्जु युज्यते[3] गन्तुं शिरो नमय तन्मनाक्[4] ॥२१६॥

हतं—लक्षणानुगमेऽपि[5] अश्रव्यम्, अप्राप्तगुरुभावान्तलघु, रसाननुगुणं च वृत्तं यत्र तत् हतवृत्तम् ।

---

## सङ्केतः

स्वरयोः एकीभावे सन्धिर्यथा—उर्वीति । अत्र मरोरन्ते तरूणां उर्वी रम्यावस्थितिश्च पङ्क्तिरस्ति, ततः ऋजु[6] प्राञ्जलं आगच्छ इत्यर्थः ॥

हतं वृत्तं यत्र इति योगः । लक्षणं छन्दसामत्रेष्टम् ॥

## मधुमती

अत्र 'लण्डा-चिङ्कु' शब्दयोः सन्धौ अश्लीलता ॥

उर्व्यसाविति । अत्रापि साक्षादेव कष्टता ॥

लक्षणानुगमेऽपीति । अत्र 'अपि'ना लक्षणाननुगमोऽपीति सूच्यते । तेन छन्दोभङ्गसङ्ग्रहः । अन्यथा निश्चितदोषत्वस्य तस्य असङ्ग्रहे न्यूनतापत्तेः । तस्य च स्फुटत्वेन, कविभिः तादृशदोषोपेक्षाऽसम्भवाच्च नोदाहरणं दर्शितम् । यथा—

'यस्मिन् पञ्चपञ्चजनाः आकाशश्च प्रतिष्ठितः ।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥'

इत्यादि ॥

---

1 'सर्वतौं'—क. 2 'चार्व्यवस्थिता—ख. 3 'नात्रर्जुः क्षमते'—क. 4 अध्वगं प्रति कश्चिदाह—यत्र तरुपङ्क्तिरियं चार्वी वर्तते सेयं मरुपार्यन्तिकी भूमिः अत्र च वने सरलं गन्तुं न शक्यते, अतः किञ्चित् शिरो नमयेत्यर्थः । 5 'नुसरणेऽपि'—क. 6 'ऋजुः'—घ.

क्रमेणोदाहरणानि—

अमृतं अमृतं, कः सन्देहः ? मधून्यपि नान्यथा,
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनः मध्यस्थः सन् रसान्तरविज्जनः
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात्[1] ॥

अत्र—'यदिहान्यत्स्वादु' इति अश्रव्यम् ।

---

## सङ्केतः

अमृतमिति । हरिणीच्छन्दसि 'वदतु यदिहा' इत्यत्र षष्ठाक्षरविरतौ लक्षणानुसरणेऽपि अश्राव्यत्वम् । 'न्यत्स्वादु' इत्यत्र तु दूषणान्तरमिति भावः ॥

## मधुमती

अश्रव्यता चेयं क्वचित् वैरस्याधायकत्वेन, क्वचित्तु गणविशेषयोगादश्रव्यताफलकत्वेन ॥ तत्राद्यमुदाहरति—अमृतमिति । इह हरिणीवृत्ते—प्रथमद्वितीययोः षष्ठे, तृतीयचतुर्थयोः सप्तमे च यतिः कर्तव्या । प्रकृते चतुर्थे 'हा' इत्यनन्तरं षष्ठस्थाने एव यतिकरणात् वैरस्याधायकत्वेन अश्रव्यत्वम् ॥

---

1 स्वप्रियाधरस्य माधुर्यातिशयमभिधित्सुः कश्चित् कामुकः केवलं स्वादुतया प्रसिद्धान् तांस्तानर्थान् एवं अनुजानाति ।

यथा वा—

जं[1] परिहरिउं तीरइ
मणअं पि ण सुन्दरत्तणगुणेण ।
अह णवरँ जस्स दोसो
पडिवक्खेहिं पि पडिवण्णो ॥ २१८ ॥

[यत् परिहर्तुं तीर्यते मनागपि न सुन्दरत्वगुणेन ।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः[2] ॥]

अत्र—द्वितीयतृतीयगणौ सकारभकारौ ।

---

## सङ्केतः

जं परीति । एवं नाम सुन्दरः स्मरः, यत् क्षणमपि त्यक्तुं न शक्यते इति ईदृक् दोषः, यस्य विपक्षैः मुनिभिरपि प्रतिपन्नः गुण इवेत्यर्थः[3] । आनन्दवर्धनीयपञ्चबाणलीलाकथागाथेयम् । सकारेति । 'पथ्यार्थायां सभौ[4] निरन्तरौ न कार्यौ' इत्येके । एतेन—छन्दोलक्षणच्युतात्माप्ययं दोषः हतवृत्ते अन्तर्भूतः । अत एव यथा वा इति

## मधुमती

गणविशेषयोगादश्रव्यत्वमुदाहरति—जो परिहरिउं इति । तीर्यते पार्यते । यस्तु प्रतिपक्षैः इत्यन्वयः । यतश्चायं गुणविशेषाश्रयः अत एवैतद्विरोध्यश्रव्यत्वदोषाश्रयः इत्यर्थः । अत्र द्वितीयतृतीयगणयोः सकारभकारत्वेन, अव्यवधानेन पठितावेतौ छन्दःशास्त्रे दुःश्रवत्वेन प्रतिपादिताविति अश्रव्यत्वम् ॥

---

1 'जो' (यः)-क. 2 यद्वस्तु स्वीयसौन्दर्यगुणेन त्यक्तुं नैव पार्यते, अपरिहार्यसौन्दर्यवस्तुस्वरूपं चैवंविधं यस्य दोषं अङ्गीकृत्यैव शत्रवोऽपि परिभवादीन् सहमानाः सन्निधावेव तिष्ठन्ति तादृशमिदमित्यर्थः । 3 'एवेत्यर्थः'-ग. 4 'सतौ'-घ.

विकसितसहकारतारहारि-
परिमलगुञ्जितपुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीः
हरति मुनेरपि मानसं वसन्तः[1] ॥ २१९ ॥

अत्र हारिशब्दः । 'हारिप्रमुदितसौरभ' इति पाठः युक्तः ॥ यथावा—

अन्यास्ताः गुणरत्नरोहणभुवः धन्या मृदन्यैव[2] सा
सम्भाराः खलु[3] तेऽन्य एव विधिना यैरेष सृष्टो युवा ।

---

## सङ्केतः

प्रकारान्तरोक्तिः । यतिभ्रष्टमपि अत्रैवान्तर्भाव्यम् । वृत्तस्य यत्यात्मकत्वात् । अन्ये तु—'सकारभकारौ न क्वापि छन्दसि निषिद्धौ, किन्तु—अस्मिन् अनिश्चिते छन्दसि परं अश्रव्यौ'[4] इत्याहुः ॥

कन्याभृत् कुमारिकाभृत्,[5] यया यादृश्या वा अन्यः कोऽपि पूर्वं न सृष्टः इति यावत् । सम्भाराः करणानि मृदन्तःक्षेप्याणि । सृष्टौ हि

---

1 पुष्पितरसालकुसुमात्यर्थपरिमलाकृष्टभ्रमरसमूहझेङ्कारपरिपूरितः नवपल्लवरूपमनोहरचामरालङ्कृतोऽयं वसन्तकालः मुनेरपि मानसं हरतीत्यर्थः । 2 'कन्यामृदन्यैव सा'—क. 3 'किल'—क. 4 'अनिश्चितौ छन्दसि अश्व्यौ'—ग. 5 काव्यानुशासने कन्यामृदिति पाठः दृश्यते, स एवात्रापि गृहीतोऽनेनेति ज्ञायते ।

श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसां अस्त्राणि वस्त्राणि च[1] ॥२२०॥

अत्र—'वस्त्राण्यपि' इति पाठे लघुरपि गुरुतां भजते ॥

---

## सङ्केतः

**भू-भृत्-सम्भाराः** हेतवः स्युः। **लघुरपीति**। ण्यकारस्य महाप्राणस्य सन्निधौ पाश्चात्यो लघुरपि यथा गुरुः स्यात्, तथा महाप्राणस्य सन्निधौ अग्रिमोऽपि लघुः क्वचित् गुरुतां यातीति अस्याभिप्रायः[2] ॥

## मधुमती

**अत्र वस्त्राण्यपीतीति**। यद्यपि एवमपि अन्त्यलघोः अप्राप्तगुरुभावत्वमेव। तथापि यथाश्रुतपाठे बन्धशैथिल्यम्, ईदृशपाठे तु 'ण्य' शब्दस्य संयुक्ततया अधिकप्रयत्नोच्चार्यत्वेन बन्धस्य गाढत्वसम्भवात् एवमुक्तम्। **गुरुतां भजते**। गुरुकार्यं करोतीत्यर्थः ॥ इदं त्ववधेयम्—पद्यार्धवर्जपादान्तलघुत्वे अप्राप्तगुरुत्ववान् भवति। तदा तृतीयचतुर्थपादाद्यक्षरं संयुक्तं प्रयोज्यम्। द्वितीयचतुर्थपादान्ते लघुवर्णोपनिपाते तु तत्पूर्वमक्षरं संयुक्तं प्रयोज्यम्। गाढबन्धस्य उभयत्राप्यविशेषादिति ॥

---

1 कस्यचिद्राज्ञो वर्णनमिदम्। 2 'यातीत्यप्याशयः'–ग.

हा नृप! हा बुध! हा कविबन्धो!
विप्रसहस्रसमाश्रय! देव!
मुग्धविदग्धसभान्तररत्न!
क्वासि गतः? क्व वयं च तवैते[1]? ॥ २२१ ॥

हास्यरसव्यञ्जकं एतत् वृत्तम् ।

---

## सङ्केतः

सभान्तरेति । मुग्धविदग्धानां मुग्धविदग्धं वा सभान्तरं सभाविशेषः, न तु सभामध्यम्, अचमत्कारित्वात् । हास्येति । दोधकादिकं छन्दः हास्यरसव्यञ्जकत्वात् करुणादौ नोचितमिति भावः ॥

## मधुमती

हास्यव्यञ्जकमिति । यद्रसाभिव्यक्ता यादृशी चित्तवृत्तिर्भवति, तादृशी चित्तवृत्तिः यच्छन्दश्श्रुतिं विना नीयते, तदेव छन्दः तद्रसव्यञ्जकम् । अन्यथा मिथो विरोधे चमत्कार एव न स्यात् । स च चित्तवृत्तिविशेषः अनुभवसाक्षिकः । एवं च—मन्दाक्रान्तादिः करुणे, पुष्पिताग्रादिः शृङ्गारे, शार्दूलविक्रीडितादिः वीरे, दोधकादिः हास्ये इत्यादि औचित्यात् स्वयमेव अनुसर्तव्यम् । अत एव भरतोऽपि सप्तदशेऽध्याये—तत्तद्रसे तत्तच्छन्दो नियम्य,

'शेषाणामनुयोगेन छन्दः कार्यं प्रयोक्तृभिः ।'

इत्याह । अनुयोगः—पारुष्यादिवाच्ययोग्यतासामञ्जस्यम् । अत एव शृङ्गारप्रकाशे महाराजोऽप्याह—

'येषु श्रुतेषु चित्तस्य वैरस्यं स्यात्, न हृद्यता ।
तानि वर्ज्यानि वृत्तानि प्रसिद्धिप्रच्युतानि च ॥'

इति । तदिह दोधकवृत्तं हास्योचितं करुणे निबद्धमिति दोषः ॥ अनभिधायकत्वेन अस्य अश्रव्यता । दोषता चामीषां प्रत्येकमेव । अश्रव्यं तु विभाजकोपाधिरिति ध्येयम् ॥

---

1 राज्ञि मृते सति तदीयानां विलापोक्तिरियम् ।

न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
 वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितं अनुचितारम्भनिभृतं
 गुरुः खेदं खिन्ने मयि भजति, नाद्यापि कुरुषु[1] ॥२२२॥

अत्र—अस्माभिरिति, खिन्ने इत्यस्मात् पूर्वं इत्थं इति च ॥

---

## सङ्केतः

अस्माभिरितीति । तथा च अस्माभिरिति, इत्थमिति च कृते न न्यूनत्वमिति भावः । अत्र च न्यूनैः पदैर्विना काव्यार्थ एव न घटते । अनभिहितवाच्ये तु—विरुद्धार्थस्य, इष्टार्थसङ्गतिविघातस्य वा प्रतीतिरिति, अनयोर्भेदः ॥

## मधुमती

अत्र अस्माभिरिति पदेन विना कर्त्रलाभात्, अस्य भीमादिकर्तृता न प्रतीयेत । न च तस्य वल्कलपदादुपस्थितिः । विशेष्यानुपस्थापकत्वात् । व्याधैः इत्यनेन अन्वयप्रसङ्गाच्च । इत्थमिति च पदं विना हेत्वलाभेन, तदाकाङ्क्षया प्रतीतिस्थगनात् । न च द्वयमप्यत्राध्याहार्यमिति वाच्यम् । तथापि प्रतीतिविलम्बनात् । न चैवं व्याधैरित्यनेन अभवन्मतत्वमेव दोषः इति वाच्यम् । उपजीव्यत्वेन न्यूनपदस्यैवात्र दोषत्वात् ॥

---

1 (वेणीसंहारे १-११) ।

अधिकं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं
प्रतिसङ्क्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्ध[1]समन्वितोक्तियुक्तः[2]
प्रतिमल्लास्तमयोदयः स कोऽपि[3] ॥ २२३ ॥

---

## सङ्केतः

अधिकमिति । तथा—

'दलत्कन्दलभाक् भूमिः सनवाम्बुदमम्बरम् ।
वाप्यः[4] फुल्लाम्बुजयुजः जाता[5] दृष्टिविषं मम ॥'

इत्यत्र भजिः, सहशब्दः, युजिश्च अधिकः । एवं बहुव्रीहिणैवावगतौ मत्वर्थीयाधिक्यं यथा—

'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने'[6]

इत्यादि । तथा—[7]

'सौवर्णपट्टरुचिराः तदीयकरिणः शिताः ।
तटित्वतीमन्वकुर्वन्[8] प्रावृषेण्यघनावलीम् ॥'

इत्यत्र तद्धिताधिक्यम्, षष्ठीसमासेनैव तदर्थावगतेः; इत्यादि स्वयमूह्यम् ॥

## मधुमती

अत्र आकृतीति । स्फटिकनिर्मलत्वे प्रतिपाद्ये तदेकार्थोपस्थापक-

---

1 'अनिरुद्ध'–क. 2 'युक्तिः'–ख. 3 विदुषो वर्णनमिदम् । स्फटिकवन्निर्मलान्तःकरणः, अत एव स्वहृदयप्रतिबिम्बितदुरूहशास्त्रतत्त्वः, परस्पराविरुद्धलोकालोकसमन्वितवाग्योगवान् प्रतिवादिपराभवसमर्थः कोऽप्ययं पण्डितप्रकाण्डः विराजते इत्यर्थः । 4 'वाष्पः'–ग. 5 'याता'–घ. 6 (अनर्घराघवे १-१) । 7 'यथा च'–ग. 8 'मनुचक्रुः'–ग.

अत्र— आकृतिशब्दः । यथा वा—

इदमनुचितं अक्रमश्च पुंसां
यदिह जरास्वपि मान्मथाः विकाराः ।[1]
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा[2] ॥ २२४ ॥

---

## सङ्केतः

यदपीति । 'योषितां कुचपातेऽपि यत् न मृत्युरताभावौ, तदपि अनुचितं अक्रमश्च' इत्येतावतैव स्वार्थे सिद्धे,[3] किं कृतग्रहणेनेति भावः ॥

## मधुमती

तया आकृतिशब्दः अधिकः प्रयुक्तः इति अधिकत्वमित्यर्थः ॥ लक्षणविरुद्ध-प्रतीतिकृन्निहतार्थाश्लीलेषु तु वक्तव्यावक्तव्योभयस्फुरणम् । तत्र अवक्तव्यस्य शीघ्रं, वक्तव्यस्य तु विलम्बेनेत्यन्यदेतत् ॥ यदि तु स्फटिकाकृतिनिर्मलत्वमेव प्रतिपादयितुमिष्टम्, तदा अपुष्टार्थत्वं अर्थदोषः, न त्वधिकपदत्वम् इति द्रष्टव्यम् ॥

इदमिति । शैशवे विद्याभ्यासः, यौवने विषयसेवनम्, जरायां धर्माचरणम्—इति हि क्रम इति भावः । अत्र कृतमितीति । कृतं निष्प्रयोजनम् । तथा च अधिकपदत्वमित्यर्थः । निरर्थकस्य चादेस्तु अर्थानुपस्थापकत्वात् नाधिकपदत्वम् । न च क्रियापदत्वेन कृतमित्यस्य उपयोगः । वाक्यपरिसमाप्तेः आख्यातिक-क्रियापदसाध्यत्वात् । अस्य च

---

1 'मान्मथो विकारः'–क. 2 अनुचितं—लोकविरुद्धम् । अक्रमः शास्त्र-विरुद्धः । न कृतम् । छात्रेति शेषः । 3 'स्वार्थसिद्धेः'–घ.

अत्र—कृतं इति । कृतं प्रत्युत प्र[1]क्रमभङ्गं आवहति । तथा च—'यदपि च न कुरङ्गलोचनानां' इति पाठे निराकाङ्क्षैव प्रतिपत्तिः ॥

कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु! कथय, कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम्[2] ॥२२५॥

अत्र 'लीला' इति[3] ।

---

## सङ्केतः

प्रत्युतेति । पूर्वार्धे कृतपदाभावात् प्रक्रमभङ्ग इत्यर्थः ।

कथितेति । एकस्यैव पदस्य द्विः प्रयोगः कथितत्वम् ॥

## मधुमती

कार्तिकक्रियापदरूपत्वात् ॥ प्रत्युतेति । पुरुषसम्बन्धिमन्मथविकारस्य जराकालीनत्वं अनुचितमिति यथा प्रतिपाद्यते, तथा स्त्रीसम्बन्धिनोः जीवितरतयोरपि स्तनपतनावधिकत्वाभावः अनुचितः इति यदि प्रतिपाद्येत तदैव क्रमनिर्वाहः । कृतमिति करणे तु विधातृलिपिगतं अनौचित्यं प्रतीयते । तथा च प्रक्रमभङ्ग एवेति भावः ॥

अत्र लीलेति । निष्प्रयोजनपुनर्वचनस्यैव कथितपदत्वात्, अत्र च लीलापदोपादाने प्रयोजनाभावादिति भावः ॥

---

1 'प्र' इति नास्ति–ख. 2 कपोले करतलमाधाय चिन्तयन्तीं नायिकां प्रति सखी आह । करतलसंपर्केण तिरोभवत्पाण्डिमेयं कपोलस्थली कस्य मन्मथाकृतेर्यूनः कामलीलासु यौवराज्याभिषेकं सूचयति? कस्मिन् यूनि तवाभिलाषः? कथयेत्यर्थः । 3 'अत्र लीला लीला इति'–क.

पतत्प्रकर्षं यथा—

क: क: कुत्र न घुर्घुरायितघुरीघोरो घुरेत् सूकरः?
क: क: कं[1] कमलाकरं विकमलं कर्तुं करी नोद्यतः?।
के के कानि वनान्यरण्यमहिषाः नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः[2] पञ्चाननो वर्तते[3] ॥२२६॥

---

## सङ्केतः

क: क इति। अत्र क्रमात्क्रमात् अनुप्रासो घनयितव्यः[4]। सः पतन्निबद्धः। घुरी भाण्डवाद्यविशेषः। घुर्घुरायिता चासौ घुरी च, तद्वत् घोरः॥

## मधुमती

पतदिति। यत्र बन्धच्छायायाः पादे पादे प्रहीणता दृश्यते, तत्र प्रकर्षः पादे पादे पततीति पतत्प्रकर्षः॥ एवं च कः क इत्यत्र अतिमात्रेणारभ्य मध्यममृदुभ्यां समापनेन प्रारब्धबन्धानिर्वाहात् अयं दोषः। तेनात्र वैरस्यानुभवात्। न च भग्नप्रक्रमसङ्करः, तत्र विरुद्धोपादानम्, अत्र तु उपात्तस्य अनिर्वाहः इति भेदात्॥

---

1 'कं कं कः'–क. 2 'विहृतिः'–ख. 3 यतोऽयं सिंहः सिंहीस्नेहपूर्वकविलासनिमित्तं प्रासैकस्थानावस्थितिः दृश्यते, अत एव निर्भयाः सर्वेऽपि सूकराः घुर्घुरायितनासिकाभिर्भयङ्कराः सर्वत्र भूमिं विदारयेयुः, सर्वेऽपि करिणः सर्वमपि पद्माकरं उन्मूलितपद्मं कुर्युः, एवं वनमहिषाः सर्वाणि वनान्यपि उन्मूलयेयुश्चेत्यर्थः। 4 'ध्वनयितव्यः'–ग.

समाप्तपुनरात्तं यथा—

क्रेङ्कारः[1] स्मरकार्मुकस्य, सुरतक्रीडापिकीनां रवः,
झङ्कारो रतिमञ्जरीमधुलिहां, लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वः नववयोलास्याय वेणुस्वनः[2] ॥२२७॥

---

सङ्केतः

तनोत्विति । अत्र—समासे वाक्ये, नववयः इत्यादिपुच्छप्रायं पुनरुपात्तम् । पूर्वोत्तरार्धयोः व्यत्यासे तु न दोषः ।

मधुमती

समाप्तेति । वाक्यसमासैर्हि प्रधानक्रियान्वयादेव अन्वयबोधकरत्वम् ।

"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥"

इति न्यायात् । एवं च—प्रधानक्रियान्वयावगमे जातेऽपि पुनः कारकविशेषणं क्रियाविशेषणं वा यत्रोपादीयते, तत्र समाप्तपुनरात्तं दोषः । अन्वयबोधानन्तरश्रूयमाणविशेषणपदकत्वं तु लक्षणं, अवान्तरे क्रियाकारकपदानन्तरश्रूयमाणविशेषणपदकत्वसाधारणमिति बोद्धव्यम् ॥ क्रेङ्कारः इति । अत्र प्रेम तनोतु इत्येतावतैव प्रधानक्रियान्वयबोधविश्रान्तेः नववयः इत्यादिविशेषणोपादानं न चमत्कारकारीति समाप्तपुनरात्तत्वम् ॥

---

1 'टङ्कारः'-क. 2 स्वगृहं प्रति प्रस्थितान् पथिकान् प्रति रसिकस्योक्तिरियम् । भवत्क्रियमाणकामिनीचोलिकानिष्कासनावसरे युवतीनां भुजावधूननस्खलत्—कङ्कणनादः युष्माकं प्रेम विस्तारयतु । नादश्चैवं पञ्चरूपः इति । 'वेणुध्वनिः'—क.

द्वितीयार्धगतैकवाचकशेष[1]प्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः।
तदिति जनकपुत्रीलोचनैः अश्रुपूर्णैः[2]
पथि पथिकवधूभिः शिक्षिता वीक्षिता च[3] ॥ २२८ ॥

अभवन् मतः—इष्टः योगः—सम्बन्धः यत्र तत्। यथा—

येषां ताः त्रिदशेभदानसरितः पीताः प्रतापोष्मभिः
लीलापानभुवश्च नन्दनतरु[4]च्छायासु यैः कल्पिताः।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैः त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम्[5] ॥

---

सङ्केतः

मसृणेति। अत्र—'यत् भूः सदर्भा, तत् मसृणचरणपातं गम्यताम्, यच्च घर्मः कठोरः, तत् मूर्ध्नि वस्त्राञ्चलं कुरु' इति जनकपुत्री शिक्षिता, अश्रुपूर्णैः लोचनैः वीक्षिता च इत्यन्वयः। अत्र पूर्वार्धे युक्तं[6] तच्छब्दरूपं शब्दशेषमेकं[7] उत्तरार्धे न्यस्तम्। एवं व्यत्ययोऽपि दृश्यते।

---

1 'शेषं'—क. 2 'अस्रपूर्णैः'—ख. 3 सुमन्त्रः दशरथं प्रति सीतावनगमनं निवेदयति। मसृणः—लघुः। सिचयान्तं=वस्त्राञ्चलम्। (बालरामायणे ६-३६)। 4 'नन्दनवन'—क. 'चन्दनवन'—ख. 5 हनुमता लङ्कायां दग्धायां वीरराक्षसानधिक्षिपतः कस्यचित् रावणं प्रत्युक्तिरियम्। यैः सुरगजाः निर्मदीकृताः, नन्दनतरुच्छायाः पानभूमयः कल्पिताः, येषां हुङ्कारः इन्द्रमपि भयविक्लबमकुर्वन्, तैरेव राक्षसैः स्वस्वप्रसिद्ध्यनुगुणं त्वत्प्रियकरं च न किमपि विहितमित्यर्थः। का कथाऽस्माकमिति भावः। 6 'र्धसक्तं'—घ. 7 'शेषं'—घ.

अत्र 'गुणानां च परार्थत्वात् असम्बन्धः समत्वात् स्यात्'[1] इत्युक्तनयेन यच्छब्दनिर्देश्यानां अर्थानां परस्परसमन्वयेन[2] 'यैः' इत्यत्र विशेष्यस्य अप्रतीतिः इति। 'क्षपाचारिभिः' इति पाठे तु युज्यते समन्वयः ॥

---

## सङ्केतः

यथा—

"किं करोमि? क गच्छामि? कस्य वाऽऽख्यामि? नेत्रयोः।
अनयोर्वल्लभालोके निवृत्तौ[3] न यदीश्वरः ॥" इति ॥

**अत्र गुणानामिति**। 'विशेषणानां यदर्थानां विशेष्यानुयायित्वेन समत्वे सति अन्योन्यं **न सम्बन्धः**' इति, बहुभिः यदर्थैः नैक एवार्थो निर्दिश्यते इति, यैः इत्यत्र **विशेष्यस्य अप्रतीतिः**। **क्षपाचारिणां** इति पदं **येषां** इत्यस्य विशेष्य[4]त्वेनोक्तमिति, कथं तत्र **विशेष्यत्वेन प्रतीतिः** स्यात्? **'क्षपाचारिभिः' इति पाठे तु**—त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा **'तैः क्षपाचारिभिः'** इति विशेष्येण प्रतिस्वं आञ्जस्येनैव योगं यान्तीत्यर्थः। अङ्गाङ्गिनोरेव यत्तदर्थयोः सम्बन्धः, न तु अङ्गानां यदर्थानां अन्योन्यं सम्बन्धः इति भावः ॥

---

1 (पूर्वमीमांसासूत्रम् ३-१-११)। 2 'समन्वये'–क. 3 'वल्लभा लोके निवृत्ता'–ग. 4 'विशेषण'–घ,

यथा वा—

त्वमेवंसौन्दर्या, स च रुचिरतायाः परिचयः,
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति[1] सुभगे संवदति वां,
अतः शेषं यत् स्यात् जितमिह तदानीं गुणितया[2]॥२३०॥

अत्र 'यत्' इत्यत्र 'तत्' इति, 'तदानीं' इत्यत्र 'यदा' इति वचनं नास्ति । 'चेत् स्यात्' इति तु

---

## सङ्केतः

यत् स्यादिति । अत्र—'अतः शेषं यत् तत् यदा स्यात् जितमिह तदानीं' इति कृते कविमतः[3] अन्वयः स्यात् । योगमात्रं तु

## मधुमती

अत्र यदितीति । ननु—अत्र यत्पदं न शेषमित्यस्य विशेषणम् । येन तत्पद–यदापदयोरभावात् अभवन्मतयोगता स्यात् । किन्तु अव्ययानां अनेकार्थतया यदीत्यर्थ एव यत्पदम् । अत एव—

'विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।'

इत्यत्र 'तच्छब्दः तदानीमित्यर्थकः' इत्युक्तम् इति चेत्—न । प्रकृते तथापि यच्छब्दस्य तदानींशब्दसमभिव्याहारविलम्बेन यद्यर्थोपस्थापकतया चमत्कारविघातात्, चमत्कारानुकूल्यस्य योगस्य मतस्य असिद्धेः अभवन्मतयोगत्वदर्शनात् । 'विभावा अनुभावा' इत्यत्र कारिकात्वेन तत्र नाभवन्मतयोगस्य दोषतेति ध्येयम् ॥

---

1 'तदिह'–क. 2 क्रुद्धां नायिकां प्रति सखी वदति । स च रुचिर इत्यर्थः । तदेवं युवयोः द्वन्द्वं भाग्येन सदृशमेव । उक्तादवशिष्टं मेलनमेकं यदि स्यात् तदा सौन्दर्यादि सफलं स्यात् इत्यर्थः । 3 'कविगतः'–ग.

युक्तः पाठः । यथा वा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः, शरैः अरिशिरः, तेनापि भूमण्डलम्,
तेन त्वं, भवता च कीर्तिरतुला,[1] कीर्त्या च लोकत्रयम्[2] ॥

अत्र—आकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि,[3]

---

## मधुमती

**अत्राकर्णनेति** । इदमत्रालोचनीयम्——आकर्णनक्रिया तावत् विधेये प्रधानम् । आसादनक्रियान्विते आकर्णनक्रियान्वयस्तावदभिमतः, अन्यतर-वैयर्थ्यात् । एवं च——प्रथमवाक्यदले 'येन येन यदासादितं तदाकर्णय' इति पर्यवसितेऽपि, उत्तरदलोत्थानं तत् कथमित्याकांक्षायाम्? केन केन किमासादितमित्याकांक्षायां वा?। आद्ये——प्रत्येकमन्वयः? समुदितेन वा?। तत्राद्ये आकर्णयेति वाक्यार्थस्येति ; अनन्वितपदार्थसमुदायस्य अत्र वाक्यार्थ-त्वेन अनियतत्वात् प्रथमान्तत्वं व्युत्पत्तिसिद्धम् । अध्याहृतेतिशब्देन तेषामभिहितत्वे प्रथमाया युक्तत्वात् । उपलक्षणं चैतत् । पक्षद्वयेऽप्या-सादनान्वितस्य आकर्णनान्वयो न स्यात् । यदा तदनन्वितस्य कोदण्डादेः अपरामर्शौचित्यात् । न च असादनान्वितकोदण्डादेः यच्छब्दार्थः तद्विशेषणं च, यतोभिमतान्वयबोधः स्यात् इत्याह——न चेति । आसादनान्वित-कोदण्डादतिरिच्यत इत्यर्थः । यदि वा आसादनान्वितमेव यच्छब्दविशेषणं वा स्यात्, तदा पुनरासादनान्वयो न स्यात्, निराकाङ्क्षत्वात् । तृतीये त्वाह—**न चेति** । **प्रश्नः** इत्यनन्तरं आकर्णनगोचर इति शेषः । तथाच—आकर्णनस्य पूर्वदल एव पर्यवसानात् निराकाङ्क्षम्, येन नोत्तरत्रान्वयः स्यात् इति नैकत्रापि दले आसादनान्वित आकर्णनान्वयः । तथाच **कोदण्डेन शराः** इत्यादिक्रमेण **लोकत्रयमासादितमित्याकर्णय** इत्यभिमतो योगः । तदकरणात् दोषः ॥

---

1 'रमसा'–क. 'रनधा'–ख. 2 (खण्डप्रशस्तिः)। 3 प्राहमित्यन्वयः।

वाक्यार्थस्य कर्मत्वे कोदण्डः शराः इत्यादि च प्राप्तम्। न च यच्छब्दार्थः,[1] तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादि प्रश्नः[2]। यथा वा—

चापाचार्यः त्रिपुरविजयी[3] कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिः भूरियं हन्तकारः।
अस्त्यैवेतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धः तव परशुना लज्जते चन्द्रहासः[4]॥२३२॥

इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्। 'कृतवता' इति परशौ सा[5] प्रतीयते। 'कृतवतः' इति पाठे तु मतयोगः[6] भवति॥

---

सङ्केतः

अग्रेऽप्यस्ति, यदा यच्छब्दः यदापदार्थः[7] व्याख्यायते, परं नैष मतो योगः। अत एवात्र न्यूनपदं न दोषः। तत्र पदाभावेन योगमात्रमपि वा न स्यात्। तथाहि—तत्र—'वल्कलधरैः' इति विशेषणं विशेष्यं विना कथं स्यात्? इत्यादि स्वयमूह्यम्। अथ—'व्याधैः' इत्यस्य विशेषणं, तर्हि नितरां अनुपपत्तिः। अन्ये तु—न्यूनपदमिदमाहुः, यतः—'काव्यान्तःपदेषु सत्स्वेव अभवन्मतयोगत्वमिष्टम्' इति॥

**वाक्यार्थेति**। यथा—'स्वर्गे देवास्सन्तीति सर्वोऽपि जानाति।' इति। **न चेति**। येन येनेति **यच्छब्दौ न कोदण्डाद्यर्थौ**, येन

---

1 कोदण्डादीत्यन्वयः। 2 प्रतिज्ञयैव कोदण्डादीनामुक्तत्वात्। 3 'विजयीत्यादौ'–क. 4 (बालरामायणे २-३७)। 5 सा—निन्दा। 6 भार्गवनिन्दायोगरूपः। 7 'यदार्थः'–ग.

यथा वा—

चत्वारो वयमृत्विजः, स भगवान् कर्मोपदेष्टा हरिः,
सङ्ग्रामाध्वरदीक्षितो नरपतिः, पत्नी गृहीतव्रता ।
कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलं,
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः[1] ॥

अत्र अध्वरशब्दः समासे गुणीभूतः इति, न तदर्थः सर्वैः[2] संयुज्यते ॥

यथा वा[3]—

जङ्घाकाण्डोरुनालः नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयः मञ्जुमञ्जीरभृङ्गः ।
भर्तुः नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवः दण्डपादो भवान्याः ॥

---

## सङ्केतः

एतद्द्वारेण कोदण्डपदात् एतद्विभक्तिः[4] स्यात् । तदर्थत्वे वा शरैः इति बहुत्वं वा कथं स्यात्? नापि येन येनेत्यादेः विशेषणं कोदण्डादि । प्रश्न इति । येन कोदण्डेनेत्यादौ तृतीया स्यात् इति भावः ॥

चत्वार इति । नरपतिः युधिष्ठिरः । अत्र अध्वरपदात् साक्षात् सप्तमी धर्तुं युक्ता । येन—अध्वरपदार्थः सर्वैः ऋत्विगादिभिः सम्बध्येत ॥

## मधुमती

अत्राध्वरेति । न च अविमृष्टविधेयांशता । उपाधेरसङ्करात् ॥

---

1 भीमार्जुननकुलसहदेवाः वयं चत्वारः अध्वर्युहोतृब्रह्मोद्गातृरूपाः ऋत्विजः । उपनिमन्त्रणं—आह्वानम् । रसति शब्दं करोति । (वेणीसंहारे १-२५) । 'यशोदुन्दुभिः'–क. 2 सर्वैः ऋत्विगादिभिः । 3 'तथा'–क. 4 'पदादावेव तद्विभक्तिः'–घ.

अत्र हि—दण्डपादगता निजतनुः[1] प्रतीयते ।
भवान्याः सम्बन्धिनी तु विवक्षिता ॥

अवश्यवक्तव्यं अनुक्तं यत्र । यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टैः
अत्यद्भुतैः अपहृतस्य[2] तथापि नास्था ।
कोऽप्येष[3] वीरशिशुकाकृतिः अप्रमेय-
माहात्म्यसार[4]समुदायमयः पदार्थः[5] ॥२३५॥

अत्र—'अपहृतोऽस्मि' इति अपहृतत्वस्य विधिः वाच्यः। 'तथापी'त्यस्य द्वितीयवाक्यगतत्वेनैव उपपत्तेः॥

---

## सङ्केतः

**अवश्येति** । **अनुक्तं** अनभिहितं **अवश्यवक्तव्यं** यत्र तदित्यर्थः[6]। **अप्राकृतस्येति** । रामदर्शने जामदग्न्योक्तिरियम् । अत्र—**अपहृतोऽस्मि** इत्युक्ते **तथापि नास्था** इति द्वितीयवाक्यत्वेन अर्थोपपत्तिः । अन्यथा तु **तथापि अपहृतस्य** मम चरितैः **नास्था** इतिरूपा स्यात् ॥

## मधुमती

**अत्र हीति** । प्रधानान्वयस्यैव अभ्यर्हितत्वादिति भावः । अत्र यद्यपि नाभवन्मतयोगित्वज्ञानं प्रतिबन्धकम्, तस्यैव फलत्वात् । तथापि विवक्षितान्वयविरोधिपदकत्वज्ञानमेव प्रतिबन्धकमिति वक्तव्यम् ॥

**अवश्येति** । अवश्यवक्तव्यानभिधायकपदाभिधानमित्यर्थः । न्यूनपदे तु अवश्यवक्तव्याभिधायकपदानभिधानमिति ततो भेदः । अविमृष्टविधेयांशे तु अवश्यवक्तव्यपदाभिधानात् ततो भेदः । **अत्र अपेति** । वस्तुतः

---

1 निजशब्दस्य प्रधानभूतदण्डपादस्वामित्वस्यैव व्युत्पत्तिसिद्धत्वात् । 2 'शयै-रदृष्टैरत्याहृतस्य मम नाम'–क. 'अत्यद्भुतैः मम हृतस्य'–ख. 3 'कोप्येक'–क. 4 'सौन्दर्यसार'–क. 5 अपहृतस्य—वशीकृतमनसः । अस्य ममेत्यग्रिमेणान्वयः । नास्था=दशरथपुत्रेणैव धनुर्भग्नमिति निश्चयो न । कोऽपीति । यत इति शेषः । (महावीर २-२९) । 6 'वक्तव्यमिति भावः'–ग.

यथा वा—

एषोऽहं अद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाऽधिगताभिरूप-[1]
लक्ष्मीफलां असुरराजसुतां विधाय[2]।। २३६ ।।

अत्र मनोरथानामपि दूरवर्ती इत्यप्यर्थः वाच्यः ।।

---

## सङ्केतः

एष इति । प्रतिमानिरुद्धे नाटके वृत्तमिदम्[3] । हरगौर्योः उषाख्या सुता केनापि वृत्तान्तेन बाणासुरपुत्रीति ख्याता । तां च स्मरसुतेन **अनिरुद्धाख्येन स्वप्ने** परिणाय्य कोऽपि स्वं प्रशंसन् इदमाह । **घटनेति । घटनया अधिगतं अभिरूप[4] लक्ष्म्याः फलं** यया इति वृत्तिः ।।

**अप्यर्थ** इति । अपिशब्दभावाभावयोः उत्कर्षापकर्षाभ्यां **दूरवर्तित्वं** स्यात् इत्यर्थः ।।

## मधुमती

अपहृतत्वे तथापीत्याकाङ्क्षानापत्तिः । न हि यद्यपीति पदं अश्रूयमाणं आप्ताभिप्रायवाचि तथापीत्युत्पादयति । न च यथाश्रुते तत् कल्पयितुं शक्यते । आकाङ्क्षाविरहात् । अपहृतोऽसीति विधेयतया तस्याभिधाने एव तथापीत्यस्यात्र कल्पनीयत्वात् इति ।।

**एषोऽहमिति । अद्रितनयाननपद्मजन्मा** पार्वतीवरप्रदानजन्मा । अनेन च वरः उपलक्ष्यते, स च मदनः, तस्येयमुक्तिरित्येके । अनिरुद्धस्येयमुक्तिः इत्यपरे । **अप्यर्थ** इति । तेन विना अभिमतबोधाभावादिति भावः ।

---

1 'तानुरूप'–क. 2 स्वप्नविनिर्मितोषानिरुद्धसङ्घटनस्य मन्मथस्योक्तिरियम् । मुखपद्मं–मुखपद्मजन्यवरप्रार्थनम् । प्राप्तः–पुनर्जातः । असुरराजः—बाणः । विधाय, आगतः इति शेषः । (उदाहरणे) । 3 इदं वाक्यं नास्ति–घ. 4 'आभिरूप्य'–ग.

यथा वा—

त्वयि निबद्धरतेः प्रियवादिनः

प्रणयभङ्गपराङ्मुखचेतसः [1] ।

कमपराधलवं मम पश्यसि ?

त्यजसि मानिनि ! दासजनं यतः [2] ॥ २३७ ॥

अत्र—अपराधस्य लवमपि इति वाच्यम् ॥

---

## सङ्केतः

अपराधस्येति । अपरभावे राशिमिति हि प्रतीयते ॥

## मधुमती

स च अनभिहितः इति अनुक्तवाच्यता । पूर्वत्र तदभिधानेऽपि उचितरूपेणानभिधानम् । इह तु सर्वात्मना अनभिधानमिति भेदः ॥

अत्र अपराधस्येति । उद्देश्यप्रतीत्यनुरोधादिति भावः । यथाश्रुते 'अपराधलवं न पश्यसि; किन्तु महान्तमेवापराधं पश्यसी'ति प्रतीत्यापातात् । अत्र अभवन्मतयोगसत्त्वेऽपि उपजीव्यत्वात् अनभिहितवाच्यस्य पृथग्दोषत्वम् ॥

---

1 प्रथमद्वितीयपादौ वैपरीत्येन पठितौ—क. 2 इन्दुमत्यामतीतायां, अजस्य प्रलापोऽयम् । विक्रमोर्वशीये (४-५५) इति केचित् ।

अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसंनिधौ
उपाहितां [1]वक्षसि पीवरस्तने ।
स्रजं न काचित् विजहौ जलाविलां,
वसन्ति हि प्रेम्णि गुणाः, न वस्तुषु [2] ॥ २३८ ॥

अत्र — काचित् न विजहौ इति वाच्यम् ।

---

## सङ्केतः

न काचिदिति । किन्तु सर्वाऽपीत्यर्थः । **काचित् न विजहौ** इत्युक्ते तु एकैव काचित् प्रतीयते ॥

## मधुमती

**अस्थानेति** । न च अर्थान्तरैकवाचकसङ्करः । तस्य स्थाननियमात्, अस्य तु तदभावात्, शेषिपदस्याप्युपादानाच्च । तादृशस्थाने सङ्करेऽपि उपाधिभेदात् । अनभिहितवाच्ये पदानभिधानात् ततो भेदः । नाप्यक्रम-सङ्करः । तत्राप्येवमेवोपाधिभेदस्य वक्तव्यत्वात् । **अत्र काचिदिति** । अन्यथा यथाश्रुते काचिदित्यनेन नञन्वयात् 'न काचित् जहौ, किन्तु सर्वा एव जहुः' इति प्रतीत्युत्पत्त्या अभिमतान्वयबाधप्रसङ्गात् ॥

---

1 'निवेशिताम्'–क. 2 जलक्रीडायां कस्याश्चित् नायिकायाः वर्णनम् विपक्षस्य—सपत्नीजनस्य । उपाहितां—विनिवेशिताम् । आविलां—म्लानाम् । 'न वस्तुनि'–क. (किरातार्जुनीये ८-३७) ।

यथा वा—

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया[1]
प्रोन्मृष्टः करपल्लवेन[2] कुटिलाताम्रच्छविः पातु वः[3] ॥२३९॥

अत्र 'नखलक्ष्मे'त्यतः पूर्वं 'कुटिलाताम्रे'ति वाच्यम् ।

---

## सङ्केतः

लग्न इति । जटालम्बेनेति शशिशकलविशेषणम् । पूर्वमिति । कुटिलाताम्रत्वे हि प्रागुक्ते[4] नखलक्ष्मशङ्का स्यात्, कौटिल्यादिधर्मैः

## मधुमती

लग्न इति । अत्र क्वचित् ह्रीणयेति, क्वचित् ह्रीतयेति च पाठः । उभयत्राप्येक एवार्थः । ह्रीधातोः निष्ठायां उभयोरपि साधुत्वात् । अत्र नखेति । अत्र नखलक्षणशङ्कायाः कारणं कुटिलाताम्रच्छवित्वम् । तद्धि साधारणो धर्मः । स च शङ्काहेतुत्वात् पूर्वं निर्देष्टुमर्हति । अत्र तु तदुत्तरमभिधानात् अपदस्थपदत्वमित्यर्थः । न चैवं समाप्तपुनरात्ते अतिप्रसङ्गः, तत्रापि क्रियापूर्वनिबन्धनस्य उचितत्वेन तदतिक्रमात् अपदस्थपदत्वानपायात् इति वाच्यम् । अचेतनरूपेण तस्यापि तत्त्वात् । उपाधेरसङ्कराच्च दूषणभेदः ॥

---

1 'व्रीडया'–ख. 2 'पङ्कजेन'–क. 3 पार्वती किल कदाचित् रात्रौ प्रणयकलहे सचन्द्रकलां हरजटामाकृष्य कपोलतले निधाय निद्रितवती, प्रातस्तु चन्द्रमुद्राङ्कितं कपोलं दृष्ट्वा नखक्षतमेतदिति शङ्कमानायाः सख्याः हास्येन लज्जितेयं तदङ्कं हस्तेन ममार्जेति कविः चित्रयति । 4 'प्रयुक्ते'–ग.

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष, धिगिति क्रोधादिवालोहितः ।
प्रोद्य[1]द्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी[2] ॥२४०॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः । कवेः उक्तौ तु कृतः ॥

---

## सङ्केतः

यतः, तस्याः हेतुः । अस्थानस्थपददोषे काव्यमध्ये[3] पदेषु सत्स्वेव अस्थानस्थायित्वेन विरुद्धार्थस्य इष्टार्थसङ्गतिविघातस्य वा प्रतीतिः प्राणाः[4] । तेन अर्थान्तरैकवाचकादिदोषाणां केषांचित् विवेकः स्यात् ॥

अद्यापीति । अत्र पूर्वार्धे क्रुद्धस्योक्तिः । अग्रे तु कवेः । प्रतिकूलवर्णदोषः पूर्वार्धे । अग्रे तु—न दोषः नापि गुणः इत्येके ॥

## मधुमती

अत्र क्रुद्धस्येति । अत्र यद्यपि कवेरुक्तौ कृतः इत्येव वक्तुमर्हति । अथापि अत्र पदस्य अस्थानपदत्वमपि वर्तत इति बोधनाय क्रुद्धस्योक्तौ न कृतः इत्यप्युक्तम् । न च—'दीर्घसमासत्वं चोचितम्' इति प्रतिकूलवर्णोपपादनस्थलीयलेखनपर्यालोचनया अस्यापि प्रतिकूलवर्णान्तर्भावः इति वाच्यम् । तत्र समासस्यैवाभावात् । अत्र तु समासस्य अस्थानपतितत्वात् ।

---

1 'उद्य'–क. 2 अद्यापि – मत्सान्निध्येऽपि । 3 'मध्य'–ख. 4 'प्राण'–घ.

सङ्कीर्णम्—यत्र वाक्यान्तरस्य पदानि[1] वाक्यान्तर-मनुप्रविशन्ति ॥

यथा—

किमिति न पश्यसि? कोपं
पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं
कण्ठे मनसः तमोरूपम्[2] ॥ २४१ ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसः तमोरूपं कोपं मुञ्च इति । एकवाक्यतायां[3] तु क्लिष्टमिति भेदः ॥

---

सङ्केतः

क्लिष्टमिदमित्याशङ्क्याह—एकेति ॥

मधुमती

वस्तुतस्तु—विवक्षितरसाननुगुणवर्णबहुलवाक्यत्वं । न तु केवलमननुगुण-वचनत्वम् । येन साङ्कर्यशङ्काऽपि स्यात् । 'दीर्घसमासत्वं चोचितम्' इति लेखनं तु प्रसङ्गायातम् ॥ श्रुतिकटुवाक्ये तु उपधेयादौ सङ्करेऽपि उपाधेः न साङ्कर्यम् ॥

सङ्कीर्णमिति । वाक्यान्तरघटकपदव्यवहितपदघटकत्वमित्यर्थः । अत्र पादेति । गृहाण मुञ्च इति प्रधानक्रियाद्वयश्रुतेः इह वाक्यभेदः इति भावः ॥

---

1 'न्तरपदानि'–क. 2 'मानिनीं प्रति सखी वदति । पादानतं अत्यन्त-गुणशालिनं प्राणकान्तमिमं कुतो न पश्यसि? इमं आलिङ्गय । मनसः अज्ञानमयं कोपं मुञ्चेत्यन्वयः । 3 'वाक्यतया'–क.

गर्भितम्—यत्र वाक्यस्य मध्ये वाक्यान्तरं अनुप्रविशति । यथा—

परापकारनिरतैः दुर्जनैः सह सङ्गतिः ।
वदामि भवतः तत्त्वं न विधेया कदाचन ॥ २४२ ॥

अत्र—तृतीयपादः वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह[1] ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैः या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चित् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगात् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः[2] ॥

---

### सङ्केतः

वाक्यान्तरमिति । पूर्वत्र दोषे[3] वाक्ये वाक्यान्तरपदप्रवेशः, अत्र तु वाक्यान्तरप्रवेशः । परेति । अत्र अर्धयोः व्यत्यासे न दोषः ॥

### मधुमती

गर्भितमिति । मध्यप्रविष्टानुपयुक्तवाक्यान्तरवत्त्वमित्यर्थः । सङ्कीर्णे वाक्यान्तरघटकपदानां वाक्यान्तरेऽनुप्रवेशरूपं साङ्कर्यम्, अत्र तु समस्तस्य वाक्यस्यैवानुप्रवेशः इति भेदः ॥

---

1 सुचिरमिह '–क. 2 'रागेण—रुधिरेण अनुरागेण च आवृताङ्ग्या यया असियष्ट्यैव अरीणां कण्ठे दृढं लग्नम्, मातङ्गानां—गजानां नीचानां चोपरि पतन्ती या शत्रुभिः अन्यपुरुषैश्च दृष्टा, तस्यां असियष्ट्यां सक्तोऽयं मां किञ्चिदपि न विगणयति।' किञ्च—'भृत्येभ्यः तेन दत्ताऽस्मि, ते ज्ञातमस्तु' इति लक्ष्म्याः शासनात् समुद्रं प्रति तत्सन्देशं वक्तुमिव अस्य राज्ञः कीर्तिः गता=समुद्रपर्यन्तगामिनी अभूत् ॥ 3 'दोषः'–ग.

अत्र—विदितं ते अस्तु इत्येतत् कृतम्। प्रत्युत लक्ष्मीः ततोऽपसरतीति विरुद्धमतिकृत् ॥

"मञ्जीरादिषु रणितप्रायं
पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते
मेघादिषु गर्जितप्रमुखम् ॥"[1]

---

## सङ्केतः

विरुद्धेति । 'हे जनक अब्धे ! तव एतत् ज्ञातमास्ताम्' इत्युक्ते, ततोऽन्यत्र सा यियासतीति[2] लभ्यते ॥

## मधुमती

मञ्जीरादिष्विति । तथा च कविसम्प्रदायविरुद्धपदघटितत्वं प्रसिद्धिहतत्वलक्षणम् ।

'यथाऽयं दारुणाचारः सर्वैरेव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥'

इत्याद्यप्रयुक्ते तु कविसम्प्रदायाविरुद्धस्यापि अप्रयोग एव दोषः । अत एव तत्र—'तथाऽऽम्नातमपि कविभिरनादृतम्' इत्युक्तम् । इह तु अप्रयुक्तत्वांशसाङ्कर्येऽपि कविसम्प्रदायविरोधस्य उपजीव्यत्वेन दोषत्वम् । अत एव—

"दृष्ट्वा प्रयुज्यमानानेवंप्रायांस्तथा प्रयुञ्जीत ।
अन्यत्रैतेऽनुचिताः शब्दार्थत्वे समानेऽपि ॥"[3]

इत्युक्तम् ।

---

1 (रुद्रटकाव्यालङ्कारे ६-२५) एवं क्वणितं रसनायाम्, शिञ्जितं घण्टायाम्, गुञ्जितं भ्रमरेषु, गर्जितं च सिंहादौ, पक्ष्यादिषु वाशितं च, हेषतिरश्वेषु, भणतिः पुरुषेषु, कणतिः पीडितेषु, वातिर्वायौ, बृंहतिः गजे इत्याद्यूह्यम् । 2 'साप्यपसरतीति'–घ. 3 (रुद्रटका ६-२६) ।

इति प्रसिद्धिमतिक्रान्तम् । यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक
 प्रचण्डघनगर्जितप्रतिरुतानुकारी[1] मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
 कुतोऽद्य समरोदधेः अयं अभूतपूर्वः पुरः[2] ॥२४४॥

अत्र— रवः मण्डूकादिषु प्रसिद्धः, न तु उक्त-विशेषे[3] सिंहनादे ॥

भग्नः प्रक्रमः प्रस्तावः यत्र—यथा—

---

## सङ्केतः

भग्न इति । एष हि यथाप्रक्रमं एकरसप्रसृतायाः[4] बोद्धृप्रतीतेः रोधेन[5] स्खलनखेददायी रसभङ्गाय जायते ।

## मधुमती

भग्न इति । प्रक्रमः प्रकरणं प्रस्तावः । तथा च प्रस्तावभ्रष्टपदकत्वं

---

1 'रवानुकारी'–क. 2 पुष्करावर्तकाः मेघाः । रोदसी—द्यावापृथिवी । स्थगितं - व्याप्तम् पुरः—पूर्वम् । 'परः'–क. 'हरेः'–ख. (वेणीसंहारे ३-४) रणकोलाहलमाकर्णयतः अश्वत्थाम्नो वचनमिदम् । 3 'विशेषणे'–क. 4 'प्रकृतायाः'–ग. 5 'रोधेनैव'–ग.

नाथे निशायाः नियतेर्नियोगात्
अस्तं गते हन्त! निशाऽपि याता।
कुलाङ्गनानां हि दशानुरूपं
नातः परं भद्रतरं समस्ति[1] ॥ २४५ ॥

अत्र—'गते' इति प्रक्रान्ते 'याता' इति प्रकृतेः। 'गता निशाऽपि' इति तु युक्तम् ॥

---

## सङ्केतः

प्रकृतिप्रत्ययादेः भङ्गं[2] क्रमेणाह—**नाथ इत्यादि**। **गतां निशापीतीति**। एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात्। यथा—'ताला जाअंत्ति'—

[तदा जायन्ते गुणाः, यदा ते सहृदयैः गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥] इति ॥

## मधुमती

लक्षणम्। **अत्र गते इति**। गमिधातुप्रस्तावे याधातोरुपादानेन प्रतीतिस्थगनात् दोषः ॥

---

1 दशानुरूपं—वैधव्यदशायोग्यम्। अतः परं—अनुगमनादन्यत्।
2 'भागम्'–घ.

ननु—'नैकं पदं द्विः प्रयोज्यं प्रायेण[1]' इति अन्यत्र, 'कथितपदं दुष्टम्' इति च इहैव उक्तम्। तत् कथं[2] एकस्य द्विः प्रयोगः? उच्यते—उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तः विषयः एकपदद्विःप्रयोगनिषेधस्य, तद्वति[3] विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथाहि—

उदेति सविता ताम्रः ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतां एकरूपता॥ २४६॥

---

## सङ्केतः

अन्यत्र वामनादौ। तद्वति उद्देश्यप्रतिनिर्देश्यवति। अयथोद्देशं प्रतिनिर्देशस्तु दोषस्यास्य विषयः॥

ताम्र एवेति। 'तादृगेव' इति पाठे वा न दोषः॥

## मधुमती

अत्र शङ्कते—नन्विति। तथा च कथितपदत्वापत्तिरित्यर्थः। उच्यत इति। निष्प्रयोजनवचने एव कथितपदता, अनुवादे तु सप्रयोजने पुनर्वचनरूपे न दोषः इति भावः। सर्वनाम्नो वेति। कथितार्थपरामर्शिनः तदद‍सादेः सर्वनाम्नो वा अनुपादान एव दोष इत्यर्थः॥

उदेतीति। अत्र उदयन्तं सवितारमुद्दिश्य ताम्रत्वं विधाय, पुनः सवितुः ताम्रत्वमुद्दिश्य अस्तंगमनं विधीयते इति उद्देश्यविधेयभावसत्त्वादिति भावः। प्रतीतिमिति। पदान्तरप्रतिपाद्यमानत्वप्रतिसन्धानेन अर्थान्तरत्वाशङ्कया प्रतीतिस्थगनमिति भावः॥

---

1 (वामनकाव्यालङ्कारे ५-१-१)। 2 'इहैवोक्तेः कथं'—क. 3 'तद्वति तु'—क.

अत्र रक्त एव अस्तमेति इति यदि क्रियेत, तदा[1] पदान्तरप्रतिपादितः स एवार्थः अर्थान्तरतयेव[2] प्रतिभासमानः प्रतीतिं स्थगयति। (अत्र—'तादृगेव' इति पाठे वा न दोषः। सर्वनाम्नः प्रयोगात्[3]।)

यथा वा—

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यां अतिवर्तितुं वा।
निरुत्सुकानां अभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः[4] ॥ २४७ ॥

अत्र–प्रत्ययस्य। 'सुखमीहितुं वा' इति युक्तः पाठः।

---

## सङ्केतः

प्रत्ययस्येति। भग्नप्रक्रमत्वं इति सर्वत्र योज्यम् ॥

युक्तः पाठः इति[5]। एवं च—'तुल्य[6]कक्षतया विकल्पार्थवृत्तेः वाशब्दस्य न विषयोऽयम्' इत्यपि परिहृतम् ॥

## मधुमती

अत्र प्रत्ययस्येति। तुमुनोपक्रमे प्रत्ययान्तरोपादानात् भग्नप्रक्रम इत्यर्थः ॥

अत्र सर्वनाम्न इति। इदमा उपक्रम्य तदा स्मरणात् 'किं हिमालयेन? आहो शूलिना विसृष्टाः? इति अनिश्चयात् प्रतीतिस्थगनम् ॥

---

1 'तत्'–ख. 2 'तयैव'–क. 3 सङ्केतेऽपीदं वाक्यं दृश्यते। अतः—अत्रेत्यादि प्रक्षिप्तं स्यात्। 4 अर्जुनं प्रति द्रौपद्याः उक्तिः। मनुष्यदुर्लभं उत्कर्षं प्राप्तुम्। निरुत्सुकानां–अनुद्विग्नानाम्। अभियोगः—निरन्तरप्रयत्नः। 'मुपैति लक्ष्मीः'–ख. (किराते ३-४०)। 5 'युक्तमिति'–ग. 6 'अतुल्य'–घ.

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः[1] ॥ २४८ ॥

अत्र—सर्वनाम्नः । 'अनेन विसृष्टाः' इति तु वाच्यम् ॥

महीभृतः पुत्रवतोऽपि दृष्टिः
तस्मिन् अपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा[2] ॥ २४९ ॥

अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति

---

## सङ्केतः

महीभृतः इति । अत्र आदौ पुत्रवतोऽपि इत्युक्तौ पश्चात् अपत्ये इति अयुक्तम् । चूते चूतपुष्पे ॥

## मधुमती

अत्र पर्यायस्येति । अर्थभेदेन शब्दभेदः इति मते असमानाकारानुभवेऽपि इमौ शब्दौ पर्यायौ । तथा च यत्र एकाकारयोः शब्दयोः न्यासः तत्र न दोषः । अत्र च असमानाकारयोः पुत्रापत्यपदयोः उपादानात् भग्नप्रक्रमत्वम् । अत्र प्राञ्चः—यथा अपत्यशब्दः आत्मजमभिधत्ते तथा पुत्रशब्दोऽपि । अन्यथा पुत्रीत्यत्र स्त्रीप्रत्ययः किंगतं स्वार्थमभिदध्यात्? । प्रकृत्यनुगतस्वार्थाभिधानं हि प्रत्ययानाम् । अतः शब्दानुगतं पुत्रपदार्थगतमेव स्वार्थं स्त्रीप्रत्ययोऽभिधत्त इति पुत्रापत्यपदयोः पर्यायता । एवं च उभयत्राप्यपत्यशब्दे पुत्रशब्दे वा प्रयोक्तव्ये यत् उभयशब्दमप्युपादत्ते, तत् प्रक्रमभङ्गः

---

1 ते—सप्तर्षयः । (कुमारसंभवे ६-९४) ।　2 अपत्ये—गौर्यां । भृङ्गमाला साहश्यात् दृष्टित्वेनाध्यवसिता । (कुमारसंभवे १-२७) ।

युक्तम्। अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये सस्नेहः[1]
अभूत् इति केचित् समर्थयन्ते ॥

## मधुमती

इति ॥ वस्तुतस्तु—विजातीयोत्कर्षापेक्षया सजातीयोत्कर्षस्य चमत्कार-कारित्वम्, प्रकृते च पुत्रापेक्षया अपत्यान्तरापेक्षया च परम उत्कर्षो विवक्षितः। एकरूपोपस्थितिं च विना साजात्यमेव न निर्वर्तते। सा चोपस्थितिः अपत्यमित्येव। एवं च तथानुपादानात् अत्र भग्नप्रक्रमत्वम् ॥ ननु—पुत्रशब्दोऽयं कृतैकशेषः, पुत्राश्च दुहितरश्च पुत्राः इति। ते यस्य सन्ति सः पुत्रवान्। अस्य च विकल्पैकशेषतया उभयसाधारणेन अपत्यत्वेनैव रूपेण लक्षणलक्षणयोपस्थितौ साजात्यमपि लब्धम्। न च तस्य अनेक-दुहितृसत्त्वे मानाभावः।

'मेनायां तु समुत्पन्नाः तिस्रः कन्याः मनोरमाः।'

इति कूर्मपुराणसंवादात्। अन्यथा कविरेव 'अनन्तपुष्पस्य' इति मधुविशेषणं कथमुपाददे। कथं वा सप्तमसर्गे—

एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव।
आसन्नपाणिग्रहणेति पित्रोः
उमा विशेषोच्छ्वसितं बभूव[2] ॥

इत्यत्र पङ्क्तिपदमुपात्तवान्? यदि तत्र वा पुत्रपदं न कृतैकशेषपरम्? इति। —मैवम्। विजातीयैकशेषसद्भावप्रतीतावपि प्रतीतिविलम्बस्यानिवार्यत्वात्। **अत्र सत्यपीति**। इह पुत्रापेक्षया उत्कर्षप्रतीतावपि पुत्र्यन्तरापेक्षया उत्कर्षा-प्रतीतेः इति अस्वरसः **केचित्** इत्यनेनोक्तः ॥

1 'त्ये स्नेहः'–क. 2 (कुमारसं ७-४)।

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेः
अगरीयान् न पदं नृपश्रियः[1] ॥ २५० ॥

अत्र उपसर्गस्य पर्यायस्य च । "तदभिभवः कुरुते निरायतिं, लघुतां भजते निरायतिः लघुतावान्[2] न पदं नृपश्रियः ।" इति[3] तु युक्तम् ॥

---

## सङ्केतः

उपसर्गस्येति । आदौ पदे विः उपसर्गः, पश्चात् आङ् इति प्रक्रमभङ्गः । पर्यायस्येति । आदौ लघुता इति, पश्चात् **अगरीयान्** इति[4] पर्यायभङ्गः ॥

## मधुमती

विपदः इति । आयतिः प्रभावः ।

'आयतिस्तु स्मृता दैर्घ्ये प्रभावागामिकालयोः ।'

इतिमेदिनीकोशः । **अत्रोपसर्गस्येति** । **अ**भिपूर्वमुपक्रम्य **आ**ङ्पूर्वकोपाकोपादानात् उपसर्गभङ्गः । लघुपदमुपादाय **अगरीयः**पदोपादानात् पर्यायभङ्गः । **तदभिभवः** विपदोऽभिभवः । तथा सति तदिति सर्वनाम्नाऽपि पूर्वार्थस्यैव नित्याभिधानात् न दोषः इति भावः ॥

---

1 आयतिः—भविष्यच्छुभं, रहयति—त्यजति । (किराते २-१४) । 2 'लघुताभाक्'–क. 3 तदभिभवः इत्यादिः केवलमर्थानुवादः । नातः छन्दोभङ्गशङ्का । 4 'इत्यतः'–ग.

काचित् कीर्णा रजोभिः दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीः,
अश्रीकाः काश्चदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुः वात्या इवान्याः प्रतिपदं, अपराः भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानां अशिवमिति[1] पुरोभावि नार्यः शशंसुः[2] ॥

अत्र—वचनस्य ।

'काश्चित् कीर्णाः रजोभिः
दिवमनुविदधुः मन्दवक्त्रेन्दुशोभाः निःश्रीकाः'
इति, 'कम्पमानाः' इत्यत्र 'कम्पमापुः' इति च
पठनीयम् ॥

गाहन्तां महिषाः निपानसलिलं शृङ्गैर्मुहुस्ताडितम्,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धैः क्रियतां वराहपतिभिः मुस्ताक्षतिः पल्वले,
विश्रान्तिं लभतां इदं च शिथिलज्याबन्धमस्मद्धनुः[3] ॥ २५२ ॥

## सङ्केतः

मृगकुलं मृगाणां कुटुम्बम्, न तु समूहः । कदम्बकेत्यत्र अर्थासङ्गतेः ।

## मधुमती

**अत्र वचनस्येति । काचिदिति** एकवचनमुपादाय ततः **काश्चिदिति** बहुवचनोपादानादित्यर्थः ।

---

1 'अशुभमिति'—क. 2 शिशुपालपक्षेषु महीपतिषु युद्धप्रस्थानोद्यतेषु तत्पत्नीनां चेष्टाः वर्णयति । काचित् रजस्वला श्रीरहिता सती पांसुकीर्णं कान्तिहीनचन्द्रं गगनं अनुचकार । काश्चित् व्याकुलचित्ताः तथैव निःश्रीकाः अग्निव्याप्ता दिश इव अन्तर्दाहं अलभन्त । अन्याः वातसमूहा इव पदे पदे भ्रमणं चक्रुः । अन्याः भूमिवत् सकम्पाः जाताः । एवं अग्रे उत्पत्स्यमानं अशुभं शत्रुराज्ञां युद्धनिर्याणसमये शत्रुनार्यः सूचयामासुरित्यर्थः । (माघे १५-६६) । 3 मृगयोपरतस्य दुष्यन्तस्य वचनमिदम् । (शाकुन्तले २-६) ।

अत्र—कारकस्य ।

'विस्रब्धाः रचयन्तु सूकरवराः मुस्ताक्षतिम् ।'

इति तु अदुष्टम् ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधौ
अवितथमदाध्माते रोपान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात् पाणिः पादोपसङ्ग्रहणाय च[1] ॥२५३॥

अत्र क्रमस्य । 'पादोपसङ्ग्रहणाय' इति हि पूर्वं वाच्यम् ॥ एवं अन्यदपि अनुसर्तव्यम् ॥

---

## सङ्केतः

पूर्वमिति अकलितेत्यादेः पूर्वोक्तत्वानुसारेण । कर्तृप्रक्रमभेदस्तु[2] कर्तृव्यत्यासो नाम गुण एव । तत्र प्रक्रमभङ्गदोषभ्रमस्तु भ्रम एव । तत्र 'यदि परं देवो न जानाति तम्' इत्यत्र देवशब्दः त्वमित्यर्थस्य व्यत्यासेनोक्तः । तथा च—'चापाचार्यः' इत्यत्र हि 'कृतमातृकण्ठच्छेदेन त्वया[3] बद्धस्पर्धोऽहं लज्जे' इति वाच्ये, चारुत्वाय युष्मदस्मदर्थयोः कर्तृत्वं परशु[4]-खड्गविषयत्वेनोक्तम् ॥

## मधुमती

अत्र कारकस्येति । अभिहितं कर्तारमुपादाय अनभिहितकर्त्रुपादानादित्यर्थः । तत्रापि सूकरवराः इत्यत्र 'कोलपतयः' इत्येव पठनीयम् । सूकरपदस्य ग्राम्यार्थत्वात् अश्लीलहेतुत्वाच्च ॥

---

1 धनुर्भङ्गकुपितं परशुरामं प्रति श्रीरामस्योक्तिः । अकलितं—अपरिमितम् । आध्मातः—उद्दीपितः । बाणाकर्षणरूपाय कर्मणे । 'अभिवाञ्छति'—क. (महावीरचरिते २-३०) । 2 इदं पदं नास्ति–ग. 3 'च्छेदनतया'–ग. 4 'परश्वथ'–घ.

अविद्यमानः क्रमो यत्र । यथा—

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।

---

## सङ्केतः

त्वंशब्देति । 'समुच्चयद्योती हि चकारः समुच्चीयमानादर्थात् अनन्तरमेव वाच्यः' इति क्रमः । एवं 'पुनश्शब्दोऽपि व्यतिरिच्यमानादर्थादनन्तरमेव [1] प्रयोज्यः ।' अन्यथा तु अक्रमत्वमेव वाच्यम् । यथा—

'उद्यता जयिनि कामिनीमुखे
तेन साहसमनुष्ठितं पुनः ।' इति ।

अत्र हि पुनश्शब्दः तेनेत्यनन्तरं वक्तुं योग्यः ॥ 'द्वयं गतं सम्प्रति शोचनीयताम्' इतिश्लोके केचित् न्यूनपददूषणमाहुः । तथाहि—यदि कपालिपदं विशेष्यम्, तदा[2] गर्हितत्वप्रतीतये अपरं कपालिपदं वाच्यम् । विशेषणं चेत् तदा तदाश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यं वाच्यम् । येन तस्य इष्टार्थसिद्धौ आर्थो हेतुभावः स्यात् ॥ तत्र तेनैवोपादाने यथा—'कपाली'ति । न चेदमुचितम् ॥[3] पर्यायेण[4] यथा—'शक्रस्य वज्रपाणेः कः प्रतिमल्लः' इति । अत्र शक्रस्येति पर्यायशब्दार्थस्य वज्रपाणित्वं प्रतिमल्लत्वाभावे आर्थो हेतुः । अन्यथा शक्रस्येति वृथा स्यात् ॥ सर्वनाम्ना यथा—

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीः ताः स्तुवे वामलोचनाः ॥' इति ।

अत्रापि 'ताः' इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं कामदाह-जीवनयोः मिथोविरुद्धयोरपि अभिन्नहेतुकत्वोपपत्तौ आर्थो हेतुः । अन्यथा वाम-

---

1 'र्थानन्तर्येणैव'–घ. 2 'तर्हि'–ग. 3 'नवोद्धमुचितः'–ग. 4 'पर्यायस्य'–ग.

कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी [1] ॥ २५४ ॥

अत्र त्वंशब्दानन्तरं चकारः युक्तः ।

---

### सङ्केतः

लोचनात्वस्य पुनरुपादनप्रसङ्गः ॥ न चाहेतुरावृत्तिः कपालिपदस्य अपरार्थ[2]-प्रतिपत्तये कल्पयितुं शक्यत इति, न्यूनपदत्वम् ?। न । यदि हि शब्दस्य अभिधैव वृत्तिः स्यात् तदा एवमपि स्यात् । किन्तु व्यञ्जनावृत्तिरप्यस्ति । ततः अपरार्थोऽपि[3] घटते । अत एव शम्भुवाचकसहस्रनामसंभवेऽपि[4] कपालीत्येव तद्वाचकतयोक्तम् । इत्थं च जुगुप्सनीयत्वं लभ्यते । **संप्रति** द्वयं चेत्यतीव चारु, यत् किल प्राक् एका, सैव अस्थानपातेन शोच्याऽभूत् । इदानीं तु त्वया तस्याः तथाविधदुरध्यवसायसाहाय्यमिवारब्धम्—इति उपहस्यते । काकतालीयन्यायेन कपाल्यपि यदि स्यात्, अस्तु, न केनापि प्रकर्षेणार्थ्यते इति प्रार्थनाऽप्ययुक्ता । कपाल्यर्थे तपस्यादिव्याजेन अचेतना[5]दिकमपि मण्डितमित्यर्थः । सा च, त्वं च इति द्वयोरपि लावण्यादिसाम्यप्रतीतये प्रयुक्तम् । **कलावतः कान्तिमती** इति च मतुप् प्रशंसाप्रतीतिकृत् ॥ एवं यथा वा—

'हित्वा श्रीः पुण्डरीकाक्षं यदेनं सुभगं श्रिता ।
इतीवायं विरूपाक्षः गौरीं वपुषि बद्धवान् ॥ इति ॥

### मधुमती

अत्र त्वमिति । न चात्र अपदस्थपदमेव (अस्थनस्थपदत्वमेव) दोषः । अस्थानस्थपदत्वज्ञानादिव स्थानाविघपदत्वज्ञानादपि स्वरसप्रतिबन्धानुभवात् ॥

---

1 (कुमारसम्भवे (५-७१) । 2 'परार्थे'–घ. 3 'अपदार्थोवि'–ग.
4 'सहस्रसत्वेऽपि'–ग. 5 'चे(जे)मना'–ग.

यथा वा—

शक्तिः निस्त्रिंशजेयं तव भुजयुगले, नाथ! दोषाकरश्रीः
वक्त्रे, पार्श्वे तथैषा [1] प्रतिवसति महाकुट्टनी [2] खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः,[3] किं मया वृद्धया ते ?
प्रोच्येवेत्थं प्रकोपात् शशिकर[4]सितया यस्य कीर्त्या प्रयातम्[5] ॥

अत्र—'इत्थं प्रोच्येव' इति न्याय्यम्[6] ।

तथा 'लग्नं रागावृताङ्ग्या' (२५६) इत्यादौ 'इति श्रीनियोगात्' इति वाच्यम् ॥

---

सङ्केतः

शक्तिरिति । निस्त्रिंशौ खड्गनिर्दयौ । दोषाकरः चन्द्रः दोषाणामाकरश्च । कुट्टनी महावेश्या महाकुट्टाकी च । सर्वगेति । किमपि गम्यागम्यं न विचारयतीत्यर्थः । वृद्धया इत्यनेन निर्दोषता उक्ता ।

श्रीनियोगादितीति । तदुक्तम्—

उक्तिस्वरूपावच्छेदफलो [7] यत्रेतिरिष्यते ।
न तत्र तस्मात् प्राक् किञ्चिदुक्तेरन्यत् पदं भवेत् ॥

---

1 'तवैषा'–क. 2 'कुट्टिनी'–क. 3 'प्रसरति च पुनः'–ख. 4 'सितकर'–क. 5 हे नाथ! तव भुजयुगे खड्गजनिता क्रूरजनिता चेयं शक्तिः, वक्त्रे चन्द्रश्रीः अनन्तदोषाणां स्थानभूता च श्रीः, पार्श्वे अत्यन्तखण्डयित्री शम्भली च (परस्त्रीपुरुषादिसङ्घटनकर्त्री च) खड्गयष्टिः च प्रतिवसति । तथा व्याप्ता सर्वपुरुषसम्भोगकारिणी चेयं आज्ञा ते पुरः विलसति । अतः परिपूर्णया जरत्या च मया ते किं प्रयोजनम् ? इति प्रोच्येव प्रकोपात् ज्योत्स्नाधवलया कीर्त्या पलायितमित्यर्थः । 6 इत्थंशब्देन प्राङ्गतस्यैव परामर्शनीयत्वात् । 7 'फलो'–ग.

अमतः प्रकृतविरुद्धः परार्थो यत्र। यथा—

रामन्मथशरेण ताडिता
　　दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता
　　जीवितेशवसतिं जगाम सा[1] ॥ २५७ ॥

अत्र—प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ॥

---

## सङ्केतः

उपाधिभावात्[2] स्वां शक्तिं स पूर्वत्रादधाति हि।
न च स्वरूपावच्छेदः पदस्यान्यस्य संमतः ॥
इतिनेतरेषामप्यत्रययानां गतिः समा।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम्।
तदर्थमेवावच्छिन्द्युः[3] आसमञ्जस्यमन्यथा ॥ इति ॥

केचित्तु अक्रमं अर्थान्तरै[4]कवाचकं च दोषं अस्थानस्थपदे अन्तर्भावयन्ति, अनभिहितवाच्यं तु न्यूनपदे ॥

रामेति निशाचरी असत्यपि। गन्धवत् इति निन्दाप्रशंसयोर्मतुप्। रुधिरचन्दनं कुङ्कुमेऽपि। जीवितेशौ मृत्यु-प्रियौ। अत्र प्रकृते करुणरसे ॥

## मधुमती

अमत इति। मिथोविरुद्धार्थव्यञ्जकवाक्यत्वमित्यर्थः। अत्रेति। मिथोविरुद्धयोः बीभत्सशृङ्गारयोः व्यञ्जनादिति भावः। अत एव नानावाक्य-

---

1 रामेण हतां ताटकां वर्णयति। हृदये—वक्षसि मनसि च। (रघुवंशे ११- )।
2 ‘भावः’—ब.　3 ‘छिद्युः’—ग.　4 ‘अर्थान्तरै’—ग.

अर्थदोषान्[1] आह—

अर्थोऽपुष्टः कष्टः
व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ५५ ॥
सन्दिग्धो निर्हेतुः
प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमा-
नियमविशेषाविशेषपरिवृत्ताः[2] ॥ ५६ ॥
साकाङ्क्षोऽपदयुक्तः[3]
सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तः
त्यक्तपुनस्स्वीकृताश्लीलः ॥ ५७ ॥

---

सङ्केतः

**अर्थ इति** । प्रसिद्धि-विद्याभ्यां विरुद्धः स तथा । **सह नियमानियमयोः विशेषाविशेषयोः परिवृत्तेन** परिवर्तनेन[4] वर्तन्ते तथा । **विध्यनुवादाभ्यां अयुक्तः** अनुपपन्नः ।

मधुमती

गतविरुद्धमतिकृदसङ्करः । तत्र अभिधयैव विरुद्धार्थप्रकाशात् । अत्र च यथा कामः अनयासेन वधूं विवशयति, तद्वत् रामोऽपि ताटकामिति साम्य-विवक्षायां तु न दोषः इति स्मर्तव्यम् ॥

प्रसङ्गसङ्गत्या आह—**अर्थ इति** । अत्र 'तथा' इत्यनुषज्यते ।

---

1 'अर्थदोषं'–क. 2 'परिवृत्तः'–क. 3 'मुक्तः'–ख. 4 'परिवृत्तेन'–ग.

दुष्ट इति सम्बध्यते । क्रमेणोदाहरणानि—

अतिविततगगनसरणि-
प्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभ-
कमलाकर[1]हासकृत् रविर्जयति[2] ॥ २५८ ॥

## सङ्केतः

दुष्ट इतीति । 'दुष्टं पदं' इत्यतः पूर्वस्मात् लिङ्गव्यत्ययेन सम्बध्यते ।

अतीति । अत्र **गगनप्रसरणमुक्तविश्रमः, कमलाकरहासकृत्** इत्येतावताऽपि स्वार्थसिद्धिः । शेषं तु अचमत्कार्येव, नाधिकम् । अधिकपददोषे हि प्रकृतापेक्षया सार्थकत्वे सति, अधिकानां पदानां अर्थः तात्पर्यतया

## मधुमती

तेन एवंभूतार्थाः दुष्टाः इत्यर्थः । इदं च सर्वमुदाह्रियमाणं तत्तदर्थे कवेः भ्रान्तिशान्त्यर्थम् ॥

अत्रेति । गगनस्य विभुत्वेन अतिविततत्वम्, कमलाकराणां मरुदुल्लासितसौरभत्वम्, रवेः कमलाकरविकासकत्वं च स्वभावसिद्धमेवेति नार्थस्य पोषकत्वमिति भावः। अस्य च अर्थदोषत्वमेव, अर्थान्वयव्यतिरेकानुविधायित्वात्, पदान्तरेण वाक्यान्तरेण वा तदर्थोपादानेऽपि दोषतादवस्थ्यादिति ध्येयम् ॥ द्विविधं हि प्राचां मते—शब्दपुनरुक्तं अर्थपुनरुक्तं चेति ।

1 'कमलावलि '–ख. 2 अविश्रान्तगगनमार्गसञ्चारशीलः मन्दमारुतप्रसारितपरिमळपद्माकरविकासकृच्चायं रविः जयति ।

अत्र—अतिविततत्वादयः अनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्ते इति अपुष्टाः, न तु असङ्गताः पुनरुक्ताः वा ॥

---

## सङ्केतः

स्यान्तर्भूतः पाश्चात्यैः पदैः प्रतिपाद्यते, अत्र तु नैवमिति भावः। यदा तु विशेषेण ततं इति, तदा अतिशब्दो निरर्थकः पुनरुक्तार्थो वा ज्ञेयः। न त्विति। पराशयेनेदमुक्तम्। रुद्रटो हि इदमेव काव्यं असङ्गताख्यदोषमूचे। तं प्रत्युच्यते—किमत्रासङ्गतम्? अर्थस्य विशेष्यविशेषणरूपस्य अत्र सम्भवात् न असङ्गतिः काऽपि। पुनरुक्ता वा इति तु स्वेष्टदोषाशयेनोक्तम्। न ह्यत्र किमपि पुनरुक्तमिति ॥

## मधुमती

तत्र एकाकारशब्दस्य द्विरुच्चारणे, पर्यायान्तरैरभिधाने वा प्रथमम्। अर्थलभ्यस्यैवाभिधाने द्वितीयम्। एते एव आलङ्कारिकाणां यथाक्रमं कथितपदभग्नप्रक्रमसंज्ञे शब्ददोषे। अर्थदोषे तु पुनरुक्तापुष्टसंज्ञे इति बोद्धव्यम् ॥ ननु—मरुदुल्लासितसौरभविशिष्टे हासवैशिष्ट्यप्रत्ययात् अत्र सौरभोल्लासस्य हासस्य च एककालता अवगम्यते, न च तथा वस्तुस्थितिः। हासानन्तरमेव सौरभोल्लाससंभवात् इत्यत आह—न त्विति। न हि 'विशिष्टवैशिष्ट्येनैव सर्वत्रान्वयः' इति सर्वत्र नियमः, 'एकत्र द्वय'मिति न्यायेनाप्यन्वयसम्भवात्। तथा च विरोधाभावः। नाप्यत्र – विकासं विना सौरभोल्लासासंभवात् मरुदुल्लासितसौरभेत्यनेनैव विकासप्रतीतेः पुनर्हासकथननिमित्तं पौनरुक्त्यम्। उभयत्रापि विकासस्य अर्थलभ्यत्वात्, एकस्यार्थस्य द्विशब्देनानभिधानादिति ॥

सदा मध्ये यासां इयममृतनिःस्यन्दसुरसा[1]
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एताः घनपरिचिताः[2] केन महतां
महाकाव्यव्योम्नि स्फुरितमधुराः[3] यान्तु रुचयः[4]॥२५९॥

अत्र—यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिचिताः कथं इतरकाव्यवत् प्रसन्नाः भवन्तु? यासां आदित्यप्रभाणां मध्ये त्रिपथगा वहति, ताः मेघ[5]परिचिताः कथं प्रसन्नाः भवन्ति? इति[6] सङ्क्षेपार्थः इति—कष्टम् ॥

---

## सङ्केतः

सदेति । निस्स्यन्दः विस्पन्दः,[7] सरस्वती गङ्गा । अत्र महाकाव्यव्योम्नीत्युक्ते । परिमलं गन्धचमत्कारौ । रुचयः प्रतिभाः कान्तयश्च । इतरकाव्यवत् अभिनयकाव्यवत् । अत्र उपमानोपमेयभावे कष्टत्वमर्थस्येत्यर्थः ॥

## मधुमती

इतीति । संचिन्त्यार्थः[8] दुरूहतया कष्ट इति शेषः ।

---

1 'निष्यन्दसरसा'–क. 'निष्यन्दसरसं'–ख. 2 'परिचयाः'–क. 3 'रुचिराः'–क. 4 स्वकृतस्य काव्यस्य गम्भीरचमत्कृतार्थशालितया स्फुटार्थत्वाभावेऽपि दोषाभावसमर्थनाय कस्यचित् कवेः इयं उक्तिः । वृत्तौ 'यासां कवीनां' इत्यादिना अस्य श्लोकस्य प्रकृतार्थः, 'यासां आदित्य'इत्यादिना अप्रकृतार्थश्च विवृतः । 5 'घन'–क. 6 'भवन्त्विति'–ख. भावाः पदार्थाः । इयं—मालत्येव । मालतीं प्रति माधवस्योक्तिः । 7 'विष्पन्दः'–ग. 8 'संचिन्त्यं तं (?)'–च.

जगति जयिनः ते ते भावाः नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः[1] ॥२६०॥

अत्र—इन्दुकलादयः यं प्रति परुपशप्रायाः[2] स एव चन्द्रिकात्वं उत्कर्षार्थं आरोपयतीति व्याहतत्वम् ॥

---

## सङ्केतः

स एवेति । य एव योपितामनुरक्तः सन् ज्योत्स्नादेः परुपशतां—असारतां ऊचे स एव चन्द्रिकेति रूपकेण तस्या एव उत्कर्षं भावितवान् । यथा वा—

'कदर्य ! मे देहि दानम्, निश्शत्रो ! जहि शात्रवान् ।'

इत्यादि ।

## मधुमती

अत्रेति । यं प्रति यस्य परुपशप्रायाः[3] असारप्रायाः इत्यर्थः । नन्वत्र इन्दुकलायाः अनुपादेयताप्रतीतावपि चन्द्रिकायाः तत्त्वं अप्रतीतमिति तदुपादानात् न व्याघातः इति चेत्—न । आदिशब्देन तस्या अप्युपादानात् । मालतीभिन्नवस्तुत्वेन तस्या अप्यनुपादेयताप्रतीतेः । यदि च 'नयनविषयमि'त्यनुक्त्वा—

"मम तु यदियं जाता लोके विलोचनचन्द्रिका"

इत्येतावत्पर्यन्तमेव तद्विशेषणत्वेनोपादीयते तदा न दोषः ।

---

1 रियम् । (मालतीमाधवे २-३६) । 2 'भूशेषप्रायाः'—क. 3 'भूशेषप्रायाः'—च,

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिः निर्मर्यादैः भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां
अयमहं असृङ्मेदोमांसैः करोमि दिशां बलिम्[1] ॥२६१॥

अत्र—अर्जुनार्जुनेति भवद्भिः इति च उक्ते सभीम-किरीटिनां इति किरीटिपदार्थः पुनरुक्तः ॥

यथा वा—

अस्त्रज्वालावलीढप्रतिबलजलधेः अन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण, व्रज कृप! समरं, मुञ्च हार्दिक्य! शङ्कां,
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः[2] ॥२६२॥

अत्र चतुर्थपाद[3]वाक्यार्थः पुनरुक्तः ॥

---

## सङ्केतः

उक्ते इति । वेणीसंहारे अश्वत्थाम्नेति शेषः ।

अस्त्रेति । अस्त्राण्येव ज्वालाः तद्युक्तः यः प्रतिसैन्याब्धिः तस्य अन्तः । मम इति अश्वत्थामोक्तिः । कृपहार्दिक्यौ भूपौ । समरं सदनं वा । पूर्वत्र भिन्नवाक्यत्वम्, अत्र तु एकवाक्यत्वमिति यथा वै त्युक्तम्[4] ॥

## मधुमती

किरीटीति । चूर्णिकायां अर्जुनपदोपादानात्, तदेकवाक्यतापन्न-प्रकृतपद्ये पुनःकिरीटिपदस्योपादानात् अत्र अर्थपुनरुक्तत्वम् ।

अत्र चतुर्थेति । अत्र वाक्यार्थः पुनरुक्तः, पूर्वत्र पदार्थः इति

---

1 (वेणीसंहारे ३-२४) । 2 अश्वत्थाम्नः इयमुक्तिः । अवलीढः—व्यासः । प्रतिबलं—शत्रुसैन्यम् । सेनानाथे—द्रोणाचार्ये । हार्दिक्य—कृतवर्मन् ! 3 'चतुर्थे पादे'—क. 4 'चेत्युक्तं'—ग.

भूपालरत्न! निर्दैन्यप्रदानप्रथितोत्सव!
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम्[1] ॥ २६३ ॥
अत्र मातङ्गस्य प्राक् निर्देशः युक्तः[2] ॥

## सङ्केतः

यथा वा—'अश्वीयपंक्तयः' 'जनतास्समीयुः' इति स्थानद्वयेऽप्यत्र क्रमेण अश्वीयेति समूहार्थीयान्तप्रकृतेः[3] पंक्तेश्च, जनताः इत्यत्र तद्धितार्थस्य बहुत्वस्यार्थस्य च पौनरुक्त्यम् ॥

विशेषणात् विशेषानवगतौ विशेष्योक्तिः पुनरुक्ता । यथा—'इन्दुमौलिः शिवो जीयात्' इत्यत्र शिवोक्तिः । विशेषावगतौ तु न पौनरुक्त्यम् । यथा—'शक्रस्य वज्रपाणेः पुमानपि हरामि श्रियम् ।' इत्यत्र शक्रशब्दस्य ॥ अथ—अत्र यथा पुमानपीत्यस्यात् विशेष्यं विना अर्थद्वयप्रतीतिः, तथा अत्राप्यस्तु । न । हरामीति निर्देशेन अस्मदर्थरूपं विशेष्यं अत्र अस्त्येवेति ॥

प्रधान[4]स्यार्थस्य पूर्वं निर्देशः क्रमः, तस्य दुष्टत्वे दुष्क्रमत्वम् । तद्यथा—भूपालेति । युक्तः न्याय्यः । यदा तु उदारसत्त्वो गुर्वादिः

## मधुमती

अनयोः भेद इति भावः ॥ यद्यपि क्रुद्धोक्तौ पौनरुक्त्यं न दोषः इति वक्ष्यति । तथापि अक्रुद्धोक्तमारोप्य इदमुदाहृतमिति ध्येयम् ॥

**अत्र मातङ्गस्येति** । मातङ्गं तुरङ्गं वा देहीति युक्तः क्रमः इति भावः । न चात्र भग्नप्रक्रमेणैव[5] गतार्थता । तत्र अर्थस्य उचितक्रमस्यैव विवक्षितत्वात् । अत्र तु अनुचितक्रमस्यैव तात्पर्यविषयत्वात् ॥

---

1 राजानं प्रति कस्यचित् अर्थिनः इयमुक्तिः । अर्थिनां दैन्यहीनता—तृप्तिः यथा भवन्ति तथा । 2 'न्याय्यः'—क. गुरुदानाशक्तौ लघुदानोक्त्यौचित्यात् । 3 'थीयाः प्रकृतेः'—ब. 4 'अप्रधान'—ग. 5 'क्रियाक्रमरूपभङ्गक्रमेणैव'—ज.

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं, किमपैति ते ?
तदयि ! साम्प्रतमाहर कूर्परं,[1]
त्वरितमूरुमुदञ्चय कुञ्चितम्[2] ॥ २६४ ॥

एषः अविदग्धः[3] ॥

---

## सङ्केतः

बलात्[4] आह्यमाणः क्रमं दोषयति, तदा न दोषः ॥ क्रमानुष्ठानाभावो वा दुष्क्रमत्वम् । यथा—

'क्षौरं विधाप्य[5] स्नानादि भोजनादि विधाय च ।
कश्चित् चचाल दैवज्ञं संप्रष्टुं तिथिवारकान्[6] ॥'

एवं अतिशयोक्तौ कार्यकारणयोः दुष्क्रमत्वेऽपि न दोषः । 'श्वेतश्यामद्युती पातां[7] कृष्णरुद्रौ ।' इत्यादिषु तु यथासंख्ये[8] पदरचनावैपरीत्यात् प्रक्रमभङ्गः ।

स्वपितीति । निद्रातीत्यर्थः । स्वपिमि कामये इति यावत्[9] । आहर गृहाण ।

## मधुमती

एष इति । एषोऽर्थ इत्यर्थः ॥

---

1 'तदयि संहर कूर्परमायतं—क. 2 नवोढां प्रति रिरंसोः द्व्यसुक्तिः । 3 पामरः इत्यर्थः । 4 'द्विबलात्'–घ. 5 'विधाय'–ग. 6 'प्रष्टुं भतिथिवासरान्'–घ. 7 'पातं'–ग. 8 'संख्यं'–घ. 9 'स्वपिमीति कामये'–घ,

मात्सर्यमुत्सार्य विचार्य कार्यं
आर्याः समर्यादमुदाहरन्तु ।
सेव्याः नितम्बाः किमु भूधराणां ?
उत[1] स्मरस्मेरविलासिनीनाम्[2] ? ॥ २६५ ॥

अत्र प्रकरणाद्यभावे सन्देहः, शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः ॥

गृहीतं येनासीः परिभवभयात् नोचितमपि,
प्रभावाद्यस्याभूत् न खलु तव कश्चिन्न विषयः ।
परित्यक्तं येन त्वमसि सुतशोकात् न तु भयात्,
विमोक्ष्ये शस्त्र ! त्वामहमपि, यतः[3] स्वस्ति भवते[4] ॥२६६॥

अत्र द्वितीय[5]शस्त्रमोचने हेतुर्नोपात्तः ।

---

सङ्केतः

**नोचितमपीति** । ब्राह्मणत्वात् । **सुतेति** । अवधेऽपि 'हतोऽश्वत्थामा कुञ्जरः ।' इति युधिष्ठिरोक्तं श्रुत्वा द्रोणाचार्यस्य शोकोऽभूत् । मुक्ते च शस्त्रे हतश्च सः । ततः तत्सुतः अश्वत्थामाऽपि शस्त्रं मुमुक्षुः इदमाह । यतः इति 'ततः' इत्यत्रार्थे । **हेतुरिति** । पितुः शस्त्रमोक्षे

मधुमती

**अत्र प्रकरणेति** । विशेषादर्शनकालीनोपस्थितिविषयार्थकत्वं सन्दिग्धत्वमिति पर्यवसानात्, विशेषादर्शनस्य च कादाचित्कत्वेन अनित्यदोषत्वमस्येति स्मर्तव्यम् ॥

**अत्र शस्त्रेति** । युद्ध्यमाने शूरस्य आकस्मिकशस्त्रत्यागः अनुचितः

---

1 'खलु'–क. 'किमु'–ख. 2 (भर्तृहरिशृं–३६) । 3 'ततः'–क.
4 द्रोणाचार्ये हते शोकाविष्टस्य अश्वत्थाम्नः त्यक्ष्यमाणं स्वशस्त्रं प्रत्युक्तिरियम् । (वेणीसंहारे ३-१९) । 5 'द्वितीय' इति नास्ति–ख.

इदं ते केनोक्तं? कथय, कमलातङ्कवदने!
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम्।
इदं तद्दुःसाधा[1]क्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहतम्[2] ॥२६७॥

अत्र कामस्य चक्रं लोके अप्रसिद्धम् ॥[3]

---

## सङ्केतः

सुतशोकः हेतुः। सुतस्य तु न कोऽपीत्यर्थः। हेतुतया परस्याकाङ्क्षायां निर्हेतुत्वम्, अहेतुतया तु साकाङ्क्षत्वमिति ॥

इदमिति। कमलस्य आतङ्कं आतङ्ककारि विच्छायतापादकं वदनं यस्याः सा तथा। एतस्मिन् स्वर्णवलयात्मनि पदार्थे ॥

## मधुमती

इति, तदुचितहेत्वनभिधानात् दोषः इति भावः॥ न च काव्यलिङ्गालङ्कारेण पित्रा सुतशोकात् त्यक्तत्वमेव पुत्रस्य अश्वत्थाम्नोऽपि शस्त्रत्यागे हेतुः प्रतीयते इति वाच्यम्। तथापि वीरस्य शस्त्रत्यागे तादृशो हेतुः अनुचित एवेति उचितहेत्वनुपादानेन तद्दोषतादवस्थ्यात् ॥

अत्र कामस्येति। लोके कामस्य पुष्पमयसायकानामेव अस्त्रत्वेन प्रसिद्धत्वादिति भावः ॥

---

1 'साध्यः'–क. 2 स्मृतिभुवा–कामेन। 3 'असिद्धम्'–क.

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः !
 सरणिं, अपरो मार्गः तावत् भवद्भिरिहेक्ष्यताम्[1] ।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
 चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः[2] ॥ २६८ ॥

अत्र पादाघातेन अशोकस्य पुष्पोद्गमः कविषु प्रसिद्धः, न पुनः अङ्कुरोद्गमः ॥

---

## सङ्केतः

उपेति । अत्र परित्यजतेत्यत्र 'त्यजन्त्वधुनाऽध्वगाः' इति पाठे भवद्भिः इत्यत्र प्रक्रमभङ्गो न स्यात् । प्रसिद्धः इति । नैवाङ्कुरोद्गमः इति प्रसिद्धिविरोधः ॥

## मधुमती

अत्र पादेति ।

"स्त्रीणां गीत्या प्रियालः, कुरवकरुचकौ वीक्षणात्,
 अङ्घ्रिसङ्गात् कङ्केलिः—" इति ;

"स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति, वकुलः सीधुगण्डूषसेकात्
 पादाघातादशोकः तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात् पटुमधुसहनात् चम्पको वक्त्रवातात्
 चूतो गीतात् नमेरुः विकसति च पुरो नर्तनात् कर्णिकारः ॥

इति च श्रवणात्, पादाघातेन अशोकस्य पुष्पोद्गमः वर्णनीयः । अत्र तु

---

1 'रवेक्ष्यतां'–क. 'रिहेक्ष्यतां'–ख. 2 अशोककलिकादर्शनमूर्छितस्य कथंचित् गृहमागच्छतः पथिकस्य, तेनैव पथा व्रजतः अन्यान् पथिकान् प्रति उक्तिरियम् ।

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रिय[1]गृहगमनात् मुक्ताशङ्का,[2] क नासि शुभप्रदः[3]? ॥
अत्र अमूर्ताऽपि कीर्तिः ज्योत्स्नावत् प्रकाशरूपा
कथिता इति लोकविरुद्धमपि कविप्रसिद्धेः न दुष्टम्[4] ॥

## सङ्केतः

महसीति । महश्शब्दः उत्सवार्थोऽपि । स्वैरमिति । उपपति-पार्श्वे । क नासि इत्यत्र 'क नास्ति' इति पाठो युक्तः ॥

## मधुमती

अङ्कुरोपादानात् कविप्रसिद्धिविरुद्धत्वमिति भावः ॥ लोकप्रसिद्धिविरुद्धमपि कविसंप्रदायविरुद्धं भवेत्, इह तु अर्थस्यैव कविसम्प्रदायविरुद्धत्वमिति भेदः ॥ लोकप्रसिद्धिविरुद्धमपि कविप्रसिद्धं चेत् न दुष्टमेव, कविप्रसिद्धेरेव काव्ये बलीयस्त्वात् ॥ यत्तु—चरणनलिनेति रूपकसमासेन चरणस्य अप्राधान्यं नलिनस्य च प्राधान्यं प्रतिपाद्यते । न च नलिनस्पर्शोऽपि तत्पुष्पोद्गमहेतुरिति सम्प्रदायः, इति, प्रसिद्धिविरुद्धत्वमिति—तन्न । उपमितसमासेन चरण-प्राधान्यस्यैव भानात् । न च अनिर्णयः । पुष्पोद्गमहेतुत्वस्यैव रूपक-बाधकत्वात् ॥

अत्र अमूर्तेति । एव च कविप्रसिद्धिविरोध एव दोषः । विद्यान्तर-विरोधस्यापि कविप्रसिद्धिविरोधे एव पर्यवसानात्, 'अप्रतिषिद्धं अनुमतं

1 'पति'–क. 2 'मुक्ताशङ्कं'–क. 3 राजानं प्रति कवेः इयमुक्तिः। सुदृशि—तरुण्याम्। येन–कौमुदीवदेव शुभ्रप्रकाशेन कीर्तिगानेन। 4 यथोक्तम्—'असतोऽपि निबन्धेन सतामप्यनिबन्धनात्। नियमस्य पुरस्कारात् सम्प्रदायः त्रिधा कवेः ॥' इति ॥

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥२७०॥

ग्रहोपरागादिकं[1] विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ॥

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते[2] ।
षाड्गुण्यानुसृतिः तस्य सत्यं सा निष्प्रयोजना[3] ॥२७१॥

एतत् अर्थशास्त्रेण ॥

---

## सङ्केतः

प्रसिद्धिविरुद्धमुक्त्वा धर्मशास्त्रादिविद्याविरुद्धमाह—सदेति । (यथोक्तम्—

'महानिशा तु विज्ञेया मध्ययामद्वयं निशि ।
तत्र स्नानं न कुर्वीत काम्यनैमित्तिकादृते ॥ '

इति । )

## मधुमती

भवति ' इति न्यायात् ॥ अत एव कविसमयप्रसिद्धिविरोधस्यैव दोषतन्त्रत्वमिति, केवलं लोकविरोधस्य अतन्त्रत्वमिति च ध्येयम् ॥

**ग्रहेति** । आदिपदात् सङ्क्रमविवाहात्ययवृद्ध्यादयो ग्राह्याः । **यथोक्तम्**—

" राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युः निशि काम्यव्रतेषु च ॥ " इति ॥

---

1 'रागं'–क. 2 'विलोक्यते'–क. 3 'स्यान्निष्प्रयोजना'–क.

विधाय दूरे केयूरं अनङ्गाङ्गण[1]मङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥ २७२ ॥

अत्र—केयूरपदे नखक्षतं न विहितमिति, एतत् कामशास्त्रेण ॥

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन् अभिमतां अधुना विवेक-
ख्यातिं समाधिधनमौलिमणिः विमुक्तः ॥२७३॥

अत्र—विवेकख्यातिः, ततः सम्प्रज्ञातसमाधिः,

---

सङ्केतः

केयूरमिति । कामशास्त्रे केयूरस्थाने नखक्षतं नोक्तमित्यर्थः ॥

अष्टाङ्गेति । यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः अष्टौ योगाङ्गानि । परिशीलनं अभ्यासः । कीलनं स्थिरीकरणम् । योगस्य परिशीलनेन कीलनमित्यर्थः । दुस्साधाः सिद्धीः सविधयन्तीति दुस्साधसिद्धिसविधाः अणिमादयः, ताः यस्य तम्[2] । विदूरे । दूरस्याभावः विदूरम्, तस्मिन् इति व्युत्पत्त्या निकटे कुर्वन् इत्यर्थः । एवं विवेकख्यातिं च लभमानः कोऽपि समाधिधनानां चूडामणिः मुक्तः इति भावः । संप्रज्ञातः सविकल्पः ॥

मधुमती

अत्र केयूरपद इति ।

" कपोलकण्ठवक्षोजकक्षश्रोणितलोरुषु ।
नखक्षतं प्रियः कुर्यात् स्त्रीणां रागाभिवृद्धये ॥ "

इति स्तनजघनादावेव नखदानस्य कामशास्त्रविहितत्वादिति भावः ।

---

1 'अनङ्गाङ्गन'–क. 'अनङ्गाङ्गद'–ख. 2 'दुस्साधसिद्धः सविधयति यत् ता एव वा अणिमादयः सविधाः यस्य तत्,'–ग.

पश्चादसम्प्रज्ञातः, ततः विमुक्तिः, न तु विवेकख्यातौ[1]। एतत् योगशास्त्रेण। एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ॥

प्राप्ताः श्रियः सकलकामदुघाः, ततः किम्?
दत्तं पदं शिरसि विद्विषतां, ततः किम्?।
सन्तर्पिताः[2] प्रणयिनो विभवैः, ततः किम्?[3]
कल्पं स्थितं तनुभृतां तनुभिः, ततः किम्?[4]॥२७४॥

---

## सङ्केतः

प्राप्ता इति। प्रस्तावैक्यसम्बद्धत्वे[5] सत्यपि निरपेक्षतया अवश्यवाच्यतया पर्यायान्तरभावाच्च[6] एककाव्यमध्ये भिन्नवाक्यगतत्वेन शब्दार्थयोः पौनरुक्त्ये असौ दोषः। विपर्यये तु कथितपद-पुनरुक्ताख्यौ शब्दार्थयोः दोषौ। ननु—कथितपदे शब्दपौनरुक्त्यात् अर्थपौनरुक्त्यं बलादप्यायातमिति अनयोरयमेव वक्तुं युज्यते। नैवम्। आपातमात्रेण प्रतीतिग्राह्ये शब्दस्य अर्थस्य वा पौनरुक्त्ये कथितपद-पुनरुक्ततादोषौ मतौ स्याताम् ॥

---

1 सम्प्रज्ञातः सबीजः समाधिः, तत्र जाते विवेकख्यात्युदयः। विवेकख्यातावपि रुद्धायां निर्बीजः समाधिः, ततो मुक्तिरिति योगशास्त्रस्थितिः। इह तु विवेकख्यातिरेव मुक्तिहेतुरुक्तेति मोक्षशास्त्रविरोध इति भावः। 2 'संमानिताः'—क. 3 अनयोः द्वितीयतृतीयचरणयोः व्यत्ययेन पाठोऽप्यस्ति। 4 (वैराग्यशतके ६७)। 5 'सम्बन्धत्वेन'—ग. 6 प्रस्तावेत्यादि नास्ति—घ.

अत्र 'ततः किम्' इति न नवीकृतम्। तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतम्?
यदि च गौरवमद्रिषु किं ततः?।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतां अविषादिता[1] ॥ २७५॥

---

## सङ्केतः

यदीति। अत्र किमद्भुतम्, किं ततः, सदैव, प्रकृतिरेव, इत्यादीनां ततः किमित्यर्थत्वं तात्पर्यतया, न पर्यायान्तरगतया ज्ञेयम्। अतः न पुनरुक्तदोषप्रसङ्गः। निर्वेदपरस्येयमुक्तिः। ततः प्रत्युत शान्तरसपरिपोष इति नायं दोषः इत्येके॥

## मधुमती

यदि दहतीति। एवं च समानोऽप्यर्थः भिन्नभिन्नाकारशब्देन अभिधीयमानः न दोषावहः इति भावः। नन्वेवं—अर्थदोषता अस्य न स्यात्, तदर्थान्वयव्यतिरेकाननुविधानात्। तस्यैवार्थस्य पदान्तरेणोपादाने दोषाभावात्। किन्तु कथितपदान्वयव्यतिरेकितया पददोषत्वम्। अतः कथितपदेनैव अस्य गतार्थता पुनरुक्ताख्यस्य, एकस्यैवार्थस्य द्विरभिधानात् इति। मैवम्। तुल्यप्रकारकेऽर्थे तात्पर्यविषये पदान्तरेणोपस्थितेऽपि दोष एवेति पदान्वयव्यतिरेकाननुविधानात् न पददोषता। तथा कथितपदे पुनरभिधानस्य निष्प्रयोजनता। प्रकृते श्रीलाभ-वैरिशिरःपादार्पणादेः अनुद्देश्यताप्रतीतिः, तया च वैराग्यातिशयप्रतीतिश्च प्रयोजनमिति प्रयोजन-सत्त्वात् ततो भेदात्। अत एव पुनरुक्तसाङ्कर्यशङ्काऽपि निरस्ता, तत्र

---

1 (देवीशतके)।

यत्रानुल्लिखितार्थमेव[1] निखिलं निर्माणमेतद्विधेः
उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीः उल्लङ्घ्य यत्सम्पदः
तस्याभासमणीकृताश्मसु मणेः अश्मत्वमेवोचितम् ॥२७६॥

## सङ्केतः

**यत्रेति** । यत्र जगदिदं **अनुल्लिखिताक्षं** अनभिव्यक्ताकारम् यस्याकारः जगताऽपि नोल्लिख्य निर्णीतः । यद्वा—अनुल्लिखितानि—अयमीदृक् इत्यनिर्णयपराणि अक्षाणि यस्येति तत् तथा । **उत्कर्षाय प्रतियोगिनः कल्पनं**—चिन्ता । **अभासेनैव मणीकृताः** अन्ये

## मधुमती

पुनर्वचनस्य निष्प्रयोजनत्वात् । अत एव शब्दानुगतत्वेन भिन्नविषयत्वाच्च विवक्षितवाक्यार्थद्वयप्रतिपादकमुदाहृतमिति । एवं च—'प्राप्ताः श्रियः' इत्यत्र 'ततः किं' इतिशब्देन तुल्येनैव प्रकारेण लक्ष्म्यादीनां अन्तवत्त्वरूपस्य अर्थस्योपस्थापनात् अनवीकृतत्वम् । 'यदि दहत्यनलः' इत्यादौ तु दाहकत्वगौरवलवणाविषादितारूपाणां धर्माणां स्वभावसिद्धत्वरूपस्यार्थस्य 'किमद्भुतम्' 'किं ततः' इत्यादिना भिन्नप्रकारेण प्रतिपादनात् न दोषः । एवं च तुल्यप्रकारकेऽर्थे तात्पर्यविषयीभूते पदान्तरोपादानेऽपि दोष एव । समानोऽप्यर्थः भिन्नभिन्नप्रकारेण प्रतिपाद्यमानस्तु न दोषायेति ॥

**यत्रेति** । **तस्य मणेः आभासमणीकृताश्मसु अश्मत्वमेवोचितं** इत्यन्वयः ॥

---

1 'ताख्यमेव'–क. 'ताक्षमेव'–ख. 'ताक्षरं'–ग.

अत्र—'छायामात्रमणीकृताश्मसु मणेः तस्या-
श्मतैवोचिता' इति सनियमत्वं वाच्यम् ॥

वक्त्राम्भोजं सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुः, दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं,[1]
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते![2] तेम्बुपानाभिलापः ?[3]॥

अत्र 'शोण एव' इति नियमो न वाच्यः ॥

---

सङ्केतः

अश्मानः येन स चासौ सुमणिश्च स तथा । अत्र एवशब्दाभावे सनियमत्वं परिवृत्तम् । छायामात्रेत्युक्तौ तु मात्रशब्दात् नियमो[4] लभ्यते ॥

न वाच्य इति । अवधारणे हि कृते, नद[5] एवाधरः न रक्त इति प्रतीतिः । तस्मात् अनियमः वाच्यः[6] ॥

## मधुमती

अत्र नियमाभिधानं विना तेषामश्मनां मणित्वप्रतीत्या अश्मत्वविधानं विरुध्येत । यद्यपि मणिरप्यश्मैव, तथापि अश्मपदेन अर्थान्तरसङ्क्रमितवाच्येन निष्प्रयोजनाश्मत्वप्रतीत्या अनुपादेयत्वप्रतीतिः क्रियते । नियतोपादाने तु कान्त्या मणिसादृश्यप्रतीतावपि अभिलषितप्रदायित्वाद्यभावप्रतीत्या अश्मत्व-विधानस्य उचितत्वमेव । अत्र छायेति । एतच्च एकवाक्यस्य नियमार्थत्व-विवक्षायां द्रष्टव्यम् । अभेदार्थत्वे तु न दोषः ॥

---

1 'मुञ्चन्तिदेव'–क. 2 'स्निग्धतरति कथं'–क. 3 (भोजप्रबन्धे २३०)। 4 'नियमेऽपि'–ग. 5 'हद'–ग. 6 इदं वाक्यं नास्ति ।

श्यामां श्यामलिमानमानयत भोः ! सान्द्रैः मषीकूर्चकैः,
मन्त्रं तन्त्रमथ[1]प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके,
येन द्रष्टुमहं क्षमे दश दिशः तद्वक्त्रमुद्राङ्किताः [2] ॥२७८॥

अत्र 'ज्यौत्स्नीं'[3] इति श्यामाविशेषः वाच्यः ॥

कल्लोलवेल्लितदृषत्परुषप्रहारैः
रत्नान्यमूनि मकरालय ![4] माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ? ॥ २७९ ॥

---

## सङ्केतः

श्यामामिति । तस्याः वक्त्रमुद्राङ्किताः काष्ठाः पाश्चात्योद्दीपनविभावैः आलोकयोग्याः कृताः । श्यामेत्युक्ते सामान्या निशा लभ्यते, न तु राका ॥

सामान्यमिति । न कौस्तुभेनेति विशेषः ॥

## मधुमती

अत्र ज्यौत्स्नीमीति । श्यामायाः निशासामान्यवाचितया कृष्णपक्षनिशायाश्चापि लाभात् । तत्र च श्यामत्वाभिधानस्य अप्रयुक्तत्वात् अदग्धदहनन्यायप्राप्तेरभावात् विध्यनुरोधवैयर्थ्यापत्तेः । यद्यप्येवं चन्द्रिकान्विता निशा लभ्यते, न तु धवलत्वम्, ज्योत्स्नापदस्य तत्रावाचकत्वात् । तथापि ज्योत्स्नीमित्यस्य धवलां निशामित्यत्र तात्पर्यमिति भावः ॥

---

1 'मपि'–क. 2 (विद्धशालभञ्जिका ३-१)। 3 'ज्योत्स्नीम्'–क. 4 'मकराकर'–क. 'मकराश्रय'–ख.

अत्र—'एकेन किं न विहितो भवतः स नाम'

इति सामान्यं वाच्यम् ॥

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत

द्रुह्यन् दाशरथिः विरुद्धचरितः युक्तः तया कन्यया ।

उत्कर्षं च परस्य मानयशसोः विस्रंसनं चात्मनः

स्त्रीरत्नं च जगत्पतिः दशमुखो देवः कथं मृष्यते ?[1] ॥२८०॥

अत्र स्त्रीरत्नं उपेक्षितुमित्याकांक्षति[2] । न हि परस्येत्यनेन सम्बन्धः योग्यः[3] ॥

---

## सङ्केतः

न हीति । परस्य रामस्य स्त्रीरत्नं इति योगो न । तथा प्रतीत्यभावात् । एषा रावणमातामहमाल्यवदुक्तिः ॥

## मधुमती

अत्र एकेनेति । यथाश्रुते कौस्तुभमात्रस्य अनवमाननीयत्वप्रतीतावपि तदितरेषां तथात्वे हेतुः नोक्तः स्यात् । सामान्येन तदभिधाने एकेन तथाकरणात् अन्येनाप्येतज्जातीयेन तादृक्कार्यकरणप्रतीत्या अनादरणीयत्वाभावे हेतुः तज्जातीयत्वमेवेत्युक्तं स्यादिति ॥

अत्र स्त्रीरत्नमिति । ननु परस्य स्त्रीरत्नं कथं मृष्यते इति अन्वयबोधः स्यात् इत्यत आह—न हीति । व्यवहितत्वादित्यापाततः । वस्तुतस्तु—परस्येत्यस्य उत्कर्षेण सह जानितान्वयबोधत्वेन निराकांक्षितत्वात् उपेक्षितमिति ध्येयम् । तथा च स्त्रीरत्नकर्मकापेक्षया तात्पर्यात् तदनुपस्थितौ

---

1 (महावीरचरिते २-९) । 2 'मितिकांक्षति'—क. 3 'योग्यः, व्यवहितत्वात्'—क.

आज्ञा शक्रशिखामणिप्रणयिनी, शास्त्राणि चक्षुर्नवं,
भक्तिः भूतपतौ पिनाकिनि, पदं लङ्केति दिव्या पुरी ।
उत्पत्तिः द्रुहिणान्वये च, तदहो ! नेदृग्वरो लभ्यते,
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ?[1] ॥२८१॥

अत्र—'स्याच्चेदेष न रावणः' इत्यन्तमेव[2] समाप्यम् ॥

## सङ्केतः

**समाप्यमिति** । अयं भावः—रावणः इत्येतत् जगदाक्रन्दकारित्वाद्यर्थान्तरं[3] वदत् जनकस्य धर्मवीरं प्रति अनुभावतामेति । ऐश्वर्यं पाण्डित्यं परमेशभक्तिः देशविशेषः अभिजनः इत्येतत् सर्वं लोक[4]बाधनेन अधर्मपरस्य निष्फलमिति, तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणश्चेष्टितं निर्वहणीयम् । यत्तु अन्यदुपात्तम् क्व न पुनः 'इति तद्यदि ससन्देहत्वेन[5] योज्यते, अथाक्षेपत्वेन, अथापि[6] नेदृग्वरो लभ्यते इत्यत्र अर्थान्तरत्वेन,[7] तथापि प्रकृतस्य धर्मवीरस्य न कथंचित् निर्वाहः । अतः अस्थानमुक्तो दोषः ॥

## मधुमती

साकाङ्क्षत्वमिति तात्पर्यार्थप्रतियोग्यनुपस्थितिः दोषः । अत एव अनभिहितवाच्य-न्यूनपदयोः उपजीव्यतया पृथग्दोषत्वम् ॥

**अत्र स्याच्चेदिति** । तथा च विवक्षितार्थाधिक्यं दोषः अधिकपदसाङ्कर्येऽपि उपाधेरसाङ्कर्यात् ॥

---

1 (बालरामायणे १-३६)। 2 'इत्यन्त एव'–क. 3 'दर्थान्तरं'–ग. 4 'लोकवाक्य'–ग. 5 'सन्देहेन'–व. 6 'अद्यापि'–व. 7 'अर्थान्तरन्यासत्वेन'–ग.

श्रुतेन बुद्धिः व्यसनेन मूर्खता,
मदेन नारी, सलिलेन निम्नगा ।
निशा शशाङ्केन, धृतिः समाधिना
नयेन चालङ्क्रियते नरेन्द्रता ॥ २८२ ॥

अत्र—श्रुतादिभिः उत्कृष्टैः सह चरितैः[1] व्यसनमूर्खतयोः निकृष्टयोः भिन्नत्वम् । 'विनयेन धीरता' इति पाठस्तु युक्तः[2] ॥

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैः या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगात् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

इत्यत्र 'विदितं तेऽस्तु' इत्यनेन श्रीः तस्मादपसरतीति विरुद्धं प्रकाश्यते ॥

---

### सङ्केतः

भिन्नत्वमिति । दोष इति योगः ॥

### मधुमती

अत्र श्रुतेति । एवं च सतां समभिव्याहारे असतः, असतां च समभिव्याहारे सतो वा उपादानं न कार्यम्, उक्तदोषादिति भावः ॥

अत्र विदितमिति । उपलम्भमात्रस्य विवक्षितत्वात्, ततोऽपसरणोक्तिः विरुद्धेति भावः । विरुद्धमतिकृति तद्वाक्यादेव विरुद्धार्थप्रतीतिः, वाक्यान्तरप्रवेशात् तत्प्रतीतौ तु प्रकाशितविरुद्धमिति अनयोः भेदः ॥

---

1 'चरैः'–क. 2 इदं वाक्यं नास्ति–ख.

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशां
अकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोश्शालिनां
अपैतु[1] रिपुकाननातिगुरुरद्य भारो भुवः[2] ॥२८४॥

अत्र—'शयितः प्रयत्नेन बोध्यसे' इति विधेयम् ।
'सुखेन शयितः चिरादुषसि बोध्यसे मागधैः ॥'

इति तु युक्तम्[3] ॥

---

## सङ्केतः

**प्रयत्नेति** । दुर्योधनं प्रति अश्वत्थामा आह । कृतद्रोणाचार्यपदेन मया सर्वेषु हतेषु अरिषु त्वं निश्चिन्तः शयितः सन् स्तुतिभिरेव यदि परं **बोध्यसे** इति । अत्र **शेषे** इति न विधेयम् । किन्तु बोध्यसे इति । तथा—यथा **शयितः** इति अनुवादे वाच्ये, **शेषे** इति विधिः उक्तः ; तथा **प्रयत्नेन परिबोध्यसे** इति विधौ वाच्ये **परिबोधितः** इत्युक्तमिति अनुवादायुक्तत्वमपि ॥

## मधुमती

**अत्र शयितः इति** । शयितमुद्दिश्य प्रबोधः विधेयः, न तु शयानमुद्दिश्य प्रबोधः, प्रयत्नानर्थक्यात् । 'न्यक्कारो ह्ययमेव'त्यादौ अविमृष्टविधेयांशे विध्यनुवादयोः विपर्ययेणोपादानमात्रम् । न तु अयुक्तविधित्वम् । अत्र तु अनुवाद्यस्यैव विधानात् नाविमृष्टविधेयांशत्वम् ॥

---

1 'अपैति'–क. 2 (वेणीसंहारे ३-३४) । 3 इदं वाक्यं नास्ति–क.

यथा वा—

वाताहारतया जगद् विषधरैः आश्वास्य निःशेषितं
ते ग्रस्ताः पुनः अभ्रतोयकणिकातीव्रव्रतैः बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैः नीताः क्षयं लुब्धकैः
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते[1] ॥२८५॥

अत्र--वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ॥

---

## सङ्केतः

ईहते इति । दाम्भिकेष्विति शेषः । व्युत्क्रमेणेति । न हि वाताहारत्वात् अधिकः दम्भः अम्भःकणव्रतम्, नापि ततोऽधिकं दाम्भिकत्वं[2] मृगाजिनवसनमिति व्युत्क्रमोक्तिस्तु प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृत-गुणानुशोचनमयनिर्वेदस्य अङ्गं स्यादेवेति विध्ययुक्तत्वम् ॥

## मधुमती

अत्र वाताहारेति । जगत आश्वास्य निःशेषयितुं विषधराः वाताहारव्रतपरायणाः जाताः, विषधरान् आश्वास्य ग्रासितुं बर्हिणः अब्भक्षण-व्रतपरायणा वृत्ताः, बर्हिणो भक्षयितुं लुब्धकाः चमूरुचर्मवसनाः जाताः इत्यादिक्रमेण वक्तव्ये व्युत्क्रमेणाभिधानात् अयुक्तविधित्वमिति बोध्यम् ॥

---

1 (भल्लटशतके ८७) । 2 'दम्भनत्वं'–ग.

अरे ! रामाहस्ताभरण ! भसलश्रेणिहरण !

स्मरक्रीडाव्रीडाशमन ! विरहिप्राणिदमन !

सरोहंसोत्तंस ! प्रचलदल ! नीलोत्पल ! सखे !

सखेदोऽहं, मोहं श्लथय, कथय, क्वेन्दुवदना[1] ? ॥२८६॥

अत्र हि 'विरहिप्राणिदमन' इति नानुवाद्यम् ॥

लग्नं रागावृताङ्ग्या – – यस्य कीर्तिः ॥ २८७ ॥

अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि 'तेन' इत्यादिना पुनरुपात्तः ॥

---

## सङ्केतः

नानुवाद्यमिति । अत्र 'किमिति अस्मत्प्राणान् दमयसि' इति विधौ वाच्ये विरहिप्राणदमन इति अनुवादः अयुक्तः[2] ॥

## मधुमती

अत्र विरहीति । प्रियाकथनस्यैवात्र विधेयतया, तस्य च विरहिप्राणधारकत्वेन, 'विरहिप्राणदमन' इति अनुवादः न युक्तः । न हि यो यत्प्राणहर्ता स तत्प्राणालम्बनकर्म करोतीति भावः ॥

अत्र विदितमिति । उपालम्भनपरस्य प्रार्थनाभङ्गस्य 'विदितं तेऽस्त्वि'ति वाक्यान्तरोपादानेन त्यागे, पुनः 'तेनास्मि दत्ते'ति उपालम्भनपरवाक्यस्यैवोपादानात् स्वीकार इति त्यक्तपुनस्स्वीकृतत्वम् । समाप्तपुनरात्ते तु वाक्यान्तरानुपादाने त्यागाभावात् ततो भेदः । नचैवमपि गर्हितसङ्करः । उपधेयसङ्करेऽपि उपाधेरसङ्करात् ॥

---

1 नीलोत्पलं प्रति विरहिणः पुरूरवसः उक्तिरियम् । 2 'उक्तः'–ग.

उद्यतस्य परं हन्तुं[1] स्तब्धस्य विवरैषिणः ।
यथाऽस्य[2] जायते पातः न तथा पुनरुन्नतिः[3] ॥२८८॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ॥

यत्र एको दोषः प्रदर्शितः, तत्र दोषान्तराण्यपि सन्ति । तथापि तेषां तत्र अप्रकृतत्वात् प्रकाशनं न कृतम् ॥

## सङ्केतः

पुंव्यञ्जनस्येति । इह अन्वयव्यतिरेकाभ्यां अर्थ एव अश्लीलः,[4] पूर्वत्र तु[5] पदवाक्ये अश्लीले इति भावः ॥

## मधुमती

अत्र पुंव्यञ्जनस्यापीति । एवं च ईदृगर्थ एवाश्लीलः पदवाक्याश्लील इत्यर्थः साधीयानेव । पदवाक्ये परमत्राश्लीले । अत एव अन्यथाकरणे अत्र न दोषः ॥ प्रकाशनं न कृतमिति । को ह्यनुन्मत्तः अन्यप्रस्तावे अन्यमभिदध्यात् । न चाप्रकाशनमात्रेण तदभावो विवक्षित इति भावः ॥ उपाध्यसाङ्कर्येण दूषणभेदस्य व्यवस्थापितत्वाच्च नान्यतरप्रतिक्षेपः शङ्कनीयः ॥

---

1 'हन्तुमेव प्रवृत्तस्य'–क. 2 'यथाऽऽशु'–क. 3 दुष्ट-लिङ्गयोः समानं धर्मं ब्रवीत्ययं श्लोकः । 4 खलेषु प्रयुज्यमानं शेपसि प्रतीतिं जनयतीति भावः । 5 'उक्तः'–ग.

कर्णावतंसादिपदे
कर्णादिध्वनिनिर्मितिः ।
संनिधानादिबोधार्थम् ॥

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते । तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये । यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थं अस्याः श्रवणकुण्डलम्[1] ॥ २८९ ॥
अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुः भृङ्गमुखराः शिरश्शेखरशालिनः[2] ॥ २९० ॥

अत्र कर्ण-श्रवण-शिरश्शब्दाः संनिधानप्रतीत्यर्थाः ॥

---

## सङ्केतः

पौनरुक्त्यापवादमाह[3]—कर्णावतंसेति ॥

शालिनः इति । नराः इति शेषः ॥ अत्र कर्णेति । विलासनिर्वाहार्थं प्रतिनियतस्वप्रदेश[4]संनिहितैः भूषणैः प्रयोजनमिति तदर्थं प्रयुक्ताः इत्यर्थः ॥

## मधुमती

ननु उक्तानां दोषत्वे गतं उदाहियमाणपद्यैः । तथा च अशेषकविकाव्यलोकविलोपप्रसङ्गः इति शङ्कां अपनेतुनाह— कर्णावतंसेति । अत एव—'रसदोषाभिधानानन्तरं उक्तक्रमेणैव दोषोद्धारः युज्यते, न तु तदनभिधाय' इत्यपि निरस्तम् । प्रकृतशङ्कानिवर्तकत्वेन उपयोगात् ॥ ध्वनिः शब्दः । तथा च कर्णादिशब्दनिर्मितिः—तदुपादानमिति यावत् ॥ अपुष्टार्थत्वमाह— अवतंसेति ॥

---

1 अवतंसः आभरणम् । 2 मुखराः—सञ्जातशब्दाः । 3 यत्र तु विशेषप्रतिपत्तये पुनरुपादानं न तत्र पौनरुक्त्यमित्याहेत्यर्थः । 4 'प्रतिदेश'—ग.

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे[1] ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव[2] ॥२९१॥

अत्र धनुश्शब्दः आरूढत्वावगतये ॥

अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य
विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन
लङ्केश्वरेणोषितमा प्रसादात्[3] ॥ २९२ ॥

इत्यत्र केवलः ज्याशब्दः ॥

---

## सङ्केतः

अत्र धनुरिति । अन्यथा 'ज्याकिणचिह्नेन दोष्णा' इत्युक्ते नित्यनिविडाकृष्टिकृतकिणत्वं दोष्णोः न प्रतीयेत,[4] दीर्घज्यावेष्टनेनापि किण-चिह्नोपपत्तेः ॥

अन्यत्रेति । अरूढत्वावगत्यभावे ॥

## मधुमती

ज्याबन्धेति । अत्र 'ज्याघातनिष्पिष्टभुजेन' इत्यतः ज्याबन्ध-निष्पन्दभुजेन इति युक्तः पाठः ॥

---

1 'संयुगान्तरे'–क.　　2 विस्फुरितं—कम्पितम् । 'दोषा विस्फूर्जितं तव'–क.　　3 इन्दुमतीं प्रति सुनन्दायाः उक्तिरियम् (रघुवंशे ६-४०)। 4 'प्रतीयते'–घ.

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम्[1] ॥ २९३ ॥

अत्र मुक्तानां अन्यरत्नामिश्रितत्वबोधनाय मुक्ता-शब्दः ॥

सौन्दर्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव कान्[2] नाकर्षति सा सखे ![3] ॥२९४॥

अत्र उत्कृष्टपुष्पविषये[4] पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्रजमेव अभिधत्ते ॥

---

### सङ्केतः

मुक्ताशब्द इति । उत्प्रेक्ष्यमाणस्य स्तनकर्तृकस्य हासस्य अतीव शुभ्रत्व[5]प्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थं उक्तः इति भावः ॥

पुष्पशब्दः इति । विदग्धजनमनोविलोभनक्षमकामिन्युपमानभावेन मालायाः उपादानात् अद्भुतोत्कृष्ट[6]पुष्पग्रथितत्वं अवगमयतीति भावः ॥ पुष्पस्रजमिति । सामान्यपुष्पस्रजमित्यर्थः ।

'त्यज करिकलभ ! त्वं प्रेमबन्धं करिण्याः'

इत्यत्र तु करिशब्दात् ताद्रूप्यावगतिः ॥

---

1 परिष्वङ्गजन्यैः विलासभावैः उपलक्षितमिति यावत् । 2 'कं'–क. 3 ते अनुभवमात्रवेद्याः । 4 'पुष्पधिये'–क. 5 'शुभ्रस्य'–ग. 6 'उपादानभावादुत्कृष्ट'–ग.

स्थितेष्वेतत् समर्थनम् ॥५८॥

न खलु कर्णावतंसादिवत् जघनकाञ्चीत्यादि क्रियते।
'जगाद मधुरां वाचं विशदाक्षरशालिनीम् ।'
इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ
'गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्

---

सङ्केतः

स्थितेषु प्रक्तेषु। काञ्चीत्यादित्यादिशब्दात् नितम्बकाञ्ची—उष्ट्रकरभेत्यादयः। सङ्केतव्यवहाराभ्यां हि शब्दार्थनिश्चयः क्रियते, न तु यथाकथंचित् ॥ क्रियाविशेषणत्वेऽपीति। मधुरमित्यादिरूपेणेति यावत् ॥ गतार्थस्यापीति। गदनस्य वाग्रपत्वात् वाचमिति विशेष्यं गतार्थमित्यर्थः ॥

मधुमती

नन्वेवं—गतमपुष्टार्थत्वेन, ईदृशप्रयोजनस्य सर्वत्र वक्तुं शक्यत्वात्—अत आह—स्थितेष्विति। चमत्कारजनकतया स्थितेष्वेव हि पदेषु एतत्समर्थनम्, न तु पदमात्रे। तादृशं च कर्णावतंसादिपदमेव, न तु जघनकाञ्च्यादिपदम्। कविभिरप्रयुक्तत्वात्। अत एव पूर्वपूर्वप्रयोगाद्यवेक्षणार्थे महाकविकाव्यवीक्षणं उक्तम् ॥

क्रियेति। 'मधुरं विशदाक्षरशालिनीं जगाद' इत्येवमुक्तावपीत्यर्थः। एवमपि प्रकृतार्थसिद्धेः अनर्थकत्वम्। वस्तुतस्तु महाकविप्रयोगस्य उभयत्रापि दर्शनात् क्रियाविशेषणबहुत्वार्थस्यापि विशिष्टतयोपादानं न विरुद्धम् ॥

प्रयोगः कार्यः।' इति न युक्तम्। युक्तत्वे वा—

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम्।[1]
पादाभ्यां दूरमध्वानं व्रजन्नेष[2] न खिद्यते[3] ॥२९५॥

इत्याद्युदाहार्यम् ॥

---

## सङ्केतः

**पादाभ्यामिति**। **व्रजन्** इत्युक्ते पादाभ्यामिति लब्धमेव, परं यदुच्यते तत् **चरणत्रे**तिविशेषणसिद्धये। विशेषणसिद्धिश्चात्र[4] विशेष्यं विना अन्यथा न स्यादिति वाच्यमेव विशेष्यम्। **इत्यादीति**। **युक्तत्वे वेति** यदा अभ्युपगमेन व्याख्यायते तदा—इत्याद्येवोदाहार्यम्, न पुनः जगादेत्यादि। यदा तु असूयया व्याख्यायते तदा इत्या[5]द्यप्युदाहार्यम्, न केवलं 'जगाद मधुरा'मिति, इति भावः॥

## मधुमती

नन्वेवं—'गतार्थस्य अनुपादेयस्यापि विशेष्यस्य विशेषणदानार्थं पुनरुपादानम्' इति सिद्धान्तप्रवादव्याकोपः—इत्यत आह–युक्तत्वेऽपीति। **चरणत्रं** उपानत्। न चात्रापि क्रियाविशेषणता। तत्परित्राणराहित्यस्य सकलगमनसाधारण्येन अव्यावर्तकत्वात्। उदाहार्यमिति। महाकविप्रयोगानुसारेणेति शेषः। तथाहि—करिकलभ–शैलाधित्यका–मयूरकेका–करिबृंहित–अश्वहेषादिष्वपि प्रौढत्व–दुरारोहत्व–मदकारित्व–गम्भीरत्व–मांसलत्वादिप्रतिपत्तये गतार्थानामपि करिप्रभृतिशब्दानां यथाक्रमं उपादानं समर्थनीयम्॥

---

1 'स्फुटम्'–क. 2 'व्रजन्नपि'–ख. 3 एवं 'संप्रस्थितो वाचमुवाच कौत्सः' इत्याद्यपि बोध्यम्। 4 'विशेषणासिद्धिश्चात्र'–घ. 5 'तदा तर्हीत्या'–घ.

## ख्यातेऽर्थे निर्हेतोरदुष्टता ।

यथा—

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः [1] ॥ २९६ ॥

अत्र—रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वम्, लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतुं नापेक्षते ॥

---

### मधुमती

अथ निर्हेतोः अदुष्टत्वमाह—**ख्यातेऽर्थ इति** ।

**चन्द्रं गतेति** । अत्र पद्मगुणः दिवा सप्रभत्वम् । चन्द्रगुणः रात्रौ सप्रभत्वम् । **द्विसंश्रयाम्** उभयगुणसंश्रयाम् । तथा च पद्मस्य रात्रौ सङ्कोचः, चन्द्रस्य दिवा निष्प्रभत्वम् । **उमामुखं** तु सर्वदा सप्रभमेवेत्यर्थः । ननु—लोला इति अपुष्टार्थत्वम् । श्रियो लोलात्वेनैव प्रसिद्धेः । न च—लक्ष्मीरियं चन्द्रगता पद्मगुणान्, पद्मगता चन्द्रगुणांश्च कामं भुनक्तु, को दोषः ? इत्यतः लोलेत्युपात्तम् । तथा च यतो लोला, अत एव एकोपगमे परत्यागात् न भुंक्ते इत्युपपद्यते—इति वाच्यम् । 'न भुंक्ते इति हेतुं नापेक्षते' इति वृत्तिविरोधात् । लोलात्वस्यैव तु हेतुत्वात् । मैवम् । प्रसिद्धिप्राप्तस्यैव लोलात्वस्य तद्धेतुप्रतिपादनात्मकप्रयोजनलाभाय पुनरुपादानात् । तद्धेतुश्च—चन्द्रगतत्वे पद्मगुणाभुक्तिः, पद्मगतत्वे चन्द्रगुणाभुक्तिश्च,

---

1 (कुमारसंभवे १-४३) ।

## अनुकरणे तु सर्वेषाम् ॥

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्[1] ॥ यथा—

मृगचक्षुषमद्राक्षीत्[2] इत्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥२९७॥

---

### सङ्केतः

**मृगेति ।** अद्राक्षीत् गवित्याह सुत्रामाणं इत्यादौ श्रुतिकटु—च्युतसंस्कृति—अप्रयुक्तदोषाः । इत्याहेति सर्वत्र योज्यम् ॥

### मधुमती

तत्तद्गुणाधारत्वात्तयोः । तथा च लक्ष्म्याः स्वाभाविकं न लोलत्वम्, अपि तु आश्रयगुणनिबन्धनमेव । तथा च दिवा चन्द्र एव रात्रौ दृष्टः इति, न तत्र श्रीस्तिष्ठतीति च लभ्यते । स्वाभाविकलोलत्वे तु उमामुखेऽपि सा न तिष्ठेत् । 'उमामुखं तु' इत्यादि च विरुध्येत ॥ तथा च कालभेदेन तौ सगुणनिर्गुणौ । उमामुखं तु सर्वदा सगुणमेवेति तयोः उत्कृष्यते । एवं च व्यतिरेकालङ्कारोऽत्र व्यङ्ग्यः । अत एव 'लोकप्रसिद्धत्वात् लोलात्वमपि हेतुं नापेक्षते' इत्यप्यपास्तम् । प्रसिद्ध्या हि अनुपादानेऽपि न दोषः इति गम्यते, न पुनः उपादाने दोष इति । प्रकृते च तल्लोलात्वहेतोः आश्रयदोषस्य अनभिधानेन तदपेक्षया वैलक्षण्यं न प्रतीयते । श्रियः लोलात्वस्य स्वाभाविकत्वेन आश्रयदोषनिबन्धनत्वाभावात् इति सचेतसा विभावनीयम् ॥

**अनुकरणे त्विति ।** अनुवादे त्विति यावत् । तत्र हृदयवैरस्याभावात् ॥

**मृगेति ।** अत्र प्रथमार्धे शृङ्गारव्यञ्जके श्रुतिकटुत्वम्, तृतीयपादे

---

1 'दोषाणां दुष्टत्वम्'—क. 2 'मद्राक्षम्'—क.

**वक्त्राद्यौचित्यवशात् दोषोऽपि**
**गुणः क्वचित्, क्वचिन्नोभौ ॥५९॥**

वक्तृ–प्रतिपाद्य–व्यङ्ग्य–वाच्य–प्रकरणादीनां महिम्ना दोषोऽपि क्वचित् गुणः, क्वचिद् न दोषः न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च[1] रसे व्यङ्ग्ये कष्टत्वं गुणः ॥

क्रमेण उदाहरणानि—

दीधीङ्वेवीङ्समः[2] कश्चित् गुणवृद्ध्योः अभाजनम् ।
क्ङित्[3]प्रत्ययनिभः कश्चित् यत्र सन्निहिते न ते[4] ॥२९८॥

---

### सङ्केतः

क्वचिन्नेति । क्वचित् न दोषः, न वा गुणः इत्यर्थः ।

क्ङिदिति[5] । कानुबन्धो ङानुबन्धश्च । ते गुणवृद्धी ॥

### मधुमती

असाधुत्वम्, चतुर्थे पादे अप्रयुक्तत्वम्। 'सुत्रामाऽपि च सूत्रामा' इति शब्दभेद-कोशे तथा आम्नातमपि सुत्रामपदं कविलोकादराविषयत्वात् अप्रयुक्तमित्यर्थः॥

दोषस्यापि क्वचित् रसोत्कर्षापकर्षकारित्वाभावात् अदोषत्वव्यवहार इव, क्वचित् प्रकृतरसोत्कर्षकत्वात् गुणत्वव्यवहारोऽपि भाक्तः दृश्यते इत्याह—**वक्त्रिति** । अस्य औचित्यानुविधानेन अनित्यदोषतां दर्शयति—**कष्टत्व-मिति** । अर्थकष्टत्वं शब्दकष्टत्वं चेत्यर्थः ॥

तत्र अर्थकष्टमाह—**दीधीवेवीडिति** । 'वृद्धिरादैच्' 'अदेङ् गुणः'

---

1 'प्रतिपाद्ये वा रौद्रे'–ख.　2 'देधीवेवीट्समः'–क.　3 'क्विप्'–क. 'कित्'–ख. 'क्षित्'–ग.　4 अस्मिन् ग्रामे वास्तव्यो जनः कीदृशः इत्यत्रोत्तर-मिदम् ।　5 'क्षिदिति'–घ.

यदा त्वामहमद्राक्षं पदविद्या[1]विशारदम् ।
उपाध्यायं तदाऽस्मार्षं[2] समस्प्राक्षं च सम्मदम् ॥ २९९ ॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैः आघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भार[3]घोरोल्लस-
द्व्यालोलस्तनभारभैरववपु[4]र्दर्पोद्धतं धावति[5] ॥३००॥

---

## सङ्केतः

अन्त्रेति । नलकैः क्रूरं क्वणतां कङ्कणप्रायाणां प्रेङ्खितानां चलितानां च भूरिभूषणानां रवैः इत्यर्थः । प्राग्भारः उत्तरकायः । प्राघारः सेको वा । अत्र रौद्रो रसः व्यङ्ग्यः ॥

## मधुमती

इति सूत्राभ्यां परिभाषितयोः गुणवृद्ध्योः 'दीधीवेवीटाम्' इत्यनेन निषेध. उक्तः, क्विपीति । 'क्विपः सर्वापहारिलोपः' इत्यनुशासनात् । सोऽयमर्थः अन्यस्य कष्टोऽपि वैयाकरणस्य अभियुक्तस्य वक्तुः न दोषः ॥

शब्दकष्टत्वमाह---यदेति । अत्र प्रतिपाद्यवैयाकरणौचित्यात् कष्टत्वं न दोषः । यदि द्वयमपि अर्थकष्टमेव तदा प्रतिपाद्यौचित्यभेदात् उदाहरण-भेदः इति भाव्यम् ॥

अन्त्रेति । अत्र विशेषणद्वारैव राक्षसीलक्षणविशेष्यलाभः ॥

---

1 'शब्दविद्या'–क. 2 'ततोऽस्मार्षं'–ख. 3 'प्राघार'–ख. 4 'भार-भंगुरवपु'–क. 5 (महावीरचरिते–१-२०) ।

वाच्यवशात् यथा—

मातङ्गाः! किमु वल्गितैः? किमफलैः आडम्बरैः जम्बुकाः?
सारङ्गाः! महिषाः! मदं व्रजथ[1] किं? शून्येषु शूराः न के?
कोपाटोपसमुद्भटो[2]त्कटसटाकोटेरिभारेः पुनः[3]
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम्[4]॥२०१॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ॥

प्रकरणवशाद्यथा—

रक्ताशोक! कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं?
'नो दृष्टे'ति मुधैव चालयसि किं वातावधूतं[5] शिरः।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छदः
तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः[6]? ॥२०२॥

अत्र शिरोविधूननेन कुपितस्य वचसि ॥

---

## सङ्केतः

वचसीति। कष्टत्वं गुण इति योगः।

## मधुमती

अत्र सिंहे इति। सिंहविषयकरतिभावस्य व्यङ्ग्यस्य माधुर्यगुणाश्रयतया ललितशब्दद्योतितत्वेऽपि सिंहरूपवाच्यौचित्यवशादेव अनुगुणत्वम् ॥

शिरोविधूननेनेति। तथा च न अपदस्थसमासत्वमित्यर्थः। यद्यप्यत्र कोपप्रतीत्या तत्प्रकृतिकरौद्ररसव्यञ्जनात् व्यङ्ग्यौचित्यमिहापि।

---

1 'व्रजत'—ख. 2 'समुद्भवो'—क. 3 'शनैः'—क. 4 गर्जितं—सफलगर्जितमित्यर्थः। 5 'वातासिभूतं'—क. 6 (विक्रमोर्वशीये ४-३१).

क्वचित् नीरसे न गुणः न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभि[1]रपघनैः घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक[2] उल्लाघयन् यः ।
घर्मांशोः तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेः
दत्तार्घाः सिद्धसङ्घैः विदधतु घृणयः शीघ्रमंहोविघातम्[3] ॥३०३॥

---

## सङ्केतः

शीर्णेति । अपघनैः अङ्गैः इत्यत्र उपलक्षणे तृतीया । घटयति नवान् करोति । उल्लाघयन् नीरुजीकुर्वन् । घृणानिघ्ना कृपासक्ता निर्विघ्ना वृत्तिः यस्य तस्य तथा ।

## मधुमती

तथापि प्रकरणादेव विप्रलम्भ इति प्रकरणोदाहरणमिति कश्चित् । वस्तुतस्तु व्यङ्ग्यौचित्योदाहरणमेवेदं युक्तम् ॥

क्वचिदिति । रसस्य गुणित्वात् दूष्यत्वाच्चेति, तस्याभावात् न गुणत्वं न दोषत्वं चेत्यर्थः । यद्यपि घर्मांशुविषयरतिभावस्य सत्त्वात् न नीरसत्वम् । तथापि तस्य अविवक्षितत्वात् इदमुक्तम् ॥

---

1 'घृणिभि'–क. 2 'स्येष'–ख. 3 (सूर्यशतके ६.) ।

अप्रयुक्तनिहतार्थौ श्लेषादौ अदुष्टौ। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः
यश्चोद्वृत्तभुजङ्गहारवलयो[1] गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरः[2] त्वां सर्वदोमाधवः[3] ॥२०४॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दौ[4] अप्रयुक्तनिहतार्थौ॥

## सङ्केतः

येनेति। अनः शकटम्। अभवेन असंसारेण बलिं दैत्यं जितवान् यः कायः सः पूर्वं=सुधाहृतौ स्त्री चक्रे। भुजङ्गहा कालियाहिघाती। रवलयः शब्दब्रह्मलयः। अगं शैलम्। गां च क्ष्माम्। शशिनं मन्थति यो राहुः तस्य शिरोहरः। अन्धकाः वृष्णयः। क्षयः निवासः। सर्वदः सर्वदाता॥ उमाधवपक्षे—बलिजितः हरेः कायः त्रिपुरेषु अस्त्रीचक्रे शरतां नीतः। शशियुक्तं शिरः, हर इति नाम च यस्य आहुः। अन्धकः दैत्यः॥

## मधुमती

अप्रयुक्तेति। अत्र अर्थद्वये कवेः तात्पर्यात् श्लेषत्वस्य निश्चितत्वात् उभयार्थप्रतीत्यनुरोधेन प्रतीतिस्थगनस्य प्राप्तत्वात् न दोषः। येनेति। अत्र अन्धकशब्दः दैत्यविशेषे क्षयशब्दः निधने च प्रसिद्ध इति, देशविशेषप्रभवे यादवे गृहे च प्रयुज्यमानः निहतार्थः। एवं शशिमत्शब्दोऽपि राहौ अप्रयुक्तः, शशिनं मथ्नातीति व्युत्पत्तेः। एवं उभयत्रापि श्लेषवशात् न दोषत्वम्॥

---

1 'योगङ्गां च दधेऽन्धकक्षयकरो'–ख. 2 'सोऽव्यादिष्टभुजङ्गहारवलयः'–क. 3 (चन्द्रककवेः)। 4 'क्षयकरशब्दौ'–क.

अश्लीलं च क्वचित् गुणः। यथा सुरतारम्भगोष्ठ्याम्—

'ताम्बूलदानविधिना विसृजेत् वयस्यां
द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु ॥'

इति कामशास्त्रस्थितौ—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ ३०५ ॥

---

## सङ्केतः

**करीति।**

तर्जन्यनामिके श्लिष्टे मध्यमा पृष्ठतस्तयोः।
करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः ॥

**सम्बाधः** सङ्कटः योनिश्च [1]। **ध्वजः** पताकावच्चिह्नम् [2] पुलिङ्गं च, **साधनं** सैन्यं योनिरपि ॥

## मधुमती

**सुरतेति।** साक्षादभिधाने अवैदग्ध्यापात इति द्व्यर्थेनाभिधानम्। तत्र च अश्लीलत्वं न दोषः। किन्तु प्रकृतानुगुणत्वमेव। **करीति।** **करिहस्तः** करिहस्ताकारः करसंस्थान विशेषः।

'तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः।
करिहस्त इति प्राहुः कामशास्त्रविशारदाः ॥'

इति तल्लक्षणात्। इदं च अर्थाश्लीलं, वाक्यार्थप्रतीतिदशायामेव अश्लीलत्वप्रतीतेः ॥

---

1 'सम्बाधौ सङ्कयोनी'–ग. 2 'पताका च चिह्नम्'–कग.

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिः अक्रमेः कस्य जायते ॥ ३०६ ॥

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः [1] ॥ ३०७ ॥

अत्र भाव्यमङ्गलसूचकम् ॥

---

### सङ्केतः

रक्तं सानुरागम्, रक्तेन रुधिरेण च प्रसाधिता अर्जिता [2] मण्डिता च भूः यैः । विग्रहः वैरं वपुश्च । स्वस्थाः स्वर्गस्थाः कुशलिनश्च ।

### मधुमती

उत्तानेति । अत्रापि वाक्यार्थ एव अश्लीलता । तत्प्रतीतावेवैतत्प्रतीतेः । एकशय्यानुगुण्यं तु आनुमानिकमेव । इयांस्तु विशेषः—सुरतारम्भगोष्ठ्यां शुभसंज्ञया नानार्थशब्दैः तदभिधानम्, शमकथासु तु शुभसंज्ञया एकार्थशब्दैः तदभिधानमिति ॥

निर्वाणेति । स्वस्थाः सुखिनः स्वर्गस्थाश्च । इहापि वाक्यार्थप्रतीतावेव अमङ्गलत्वप्रतीतेः आर्थं अश्लीलत्वम् । अत्र भावीति । तथा च अमङ्गलसूचनानुगुण्येनैव अदोषत्वं बोद्धव्यम् ॥

---

1 (वेणीसंहारे १-७) । 2 ‘ आर्जिता ”–ग.

सन्दिग्धमपि वाच्यमहिम्ना क्वचित् नियतार्थ-प्रतीतिकृत्त्वेन व्याज[1]स्तुतिपर्यवसायित्वे गुणः। यथा–

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव!।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्[2]॥ ३०८॥

प्रतिपाद्यप्रतिपादकयोः ज्ञत्वे[3] सति अप्रतीतं[4] गुणः। यथा—

---

## सङ्केतः

**पृथुकेति**। **पृथुकानां** बालानां **आर्ताः** ये **स्वराः** तेषां[5] **पात्रम्**। **पृथूनि**[6] **कार्तस्वरस्य** हेम्नः **पात्राणि** यत्र। **भुवि उषितः, भूषितः,** अलङ्कृतश्च **विलसत्कैः** गतसम्बन्धिभिः **रेणुभिः** पांसुभिः **विलसन्तीभिः करेणुभिश्च गहनं** व्याप्तं च। अत्र राजकविपक्षयोः नियतार्थप्रतीतौ व्याजेन राजगृहस्तुतिपर्यवसायित्वात् गुणत्वम्।

## मधुमती

**पृथुकेति**। अत्र **पृथुकार्तस्वरपात्रं** इत्यादिसखण्डश्लिष्टानां सन्दिग्धत्वेऽपि **सम्प्रतिसमं** इत्यनेनैव व्याजस्तुतिपर्यवसायितया गुणत्वं बोद्धव्यम्॥ **प्रतिपाद्येति**। प्रतीतिस्थगनं हि दोषः, तदभिज्ञस्य तु न प्रतीतिविलम्ब इति न दोषः। एवं च अत्र अभिज्ञप्रतिपाद्यप्रतिपादकालापपरतया, अभिज्ञ-कृतस्वयंविमर्शाभिलापपरतया वा अप्रतीतपदप्रयोगेऽपि न दोषः इति द्रष्टव्यम्॥

---

1 'प्रतिपत्तिं कृत्वैव व्याज'–क. 'प्रतिपत्तिकृद्व्याज'–ख. 2 राजानं प्रति कवेरुक्तिः। 3 'तज्ज्ञत्वे'–ख. 4 'अप्रतीतो'–क. 5 'आर्तस्वरा एतेषाम्'–ग. 6 'पृथोः'–ख.

आत्मारामाः विहितरतयः निर्विकल्पे समाधौ [1]
ज्ञानोद्रेकात् विघटिततमो[2]ग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् [3] ॥ ३०९ ॥

स्वयं वा परामर्शे यथा—
षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदः तद्विदां यः ।
अविचलितमनोभिः साधकैः मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः [4] ॥ ३१० ॥

---

## सङ्केतः

**निर्विकल्प इति।** भेदसंसर्गाभ्यां ज्ञानं विकल्पः । तस्मात् निष्क्रान्तः ॥

**षडधिकेति ।** इडा-पिङ्गला-सुषुम्ना-गान्धारी-हस्तिजिह्वा-पूषा-सुयशा-अलम्बुसा [5] -कुहू-शङ्खिनी-तालुजिह्वा-भजिह्वा-विजया-कामदा-अमृता-बाहुलाऽभिधानवाताश्रितषोडशनाडीचक्रस्य **मध्ये स्थितः आत्मा यस्य। हृदि** हृच्चक्रे । **रूपं** ज्योतिरादित्यादिरूपः आकारः । **सिद्धिः** भुक्तिमुक्तिरूपा । **शक्तयः** ज्ञानेच्छाक्रियाद्याः । तासां **नाथः** न्यग्भावोद्भावनप्रभुः ॥

## मधुमती

**आत्मारामा इति ।** अत्र वक्तृबोद्धव्ययोः भीमसहदेवयोरुभयोरपि सुज्ञत्वात् न दोषः ॥

**षडधिकेति ।** अत्र कपालकुण्डलायाः योगशास्त्राभियोगात् **स्वयं विमर्शे** न दोषः । एवं च प्रतिपादकस्य सुज्ञत्वेऽपि प्रतिपाद्यस्य अज्ञत्वे

---

1 'योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना' इत्युक्तदिशा ध्येयेन सह समसमापत्तिः समाधिः । 2 'ज्ञानोत्सेकाद्विघटितमनो'–क. 3 घटादिसिद्धेः पूर्वमेव सिद्धः अनिदंप्रथमतया प्रकाशमानश्च पुराणशब्देनोच्यते। (वेणीसंहारे १-२३)। 4 (मालतीमाधवे ५-१)। 5 'सुयशोलम्बुसा'–घ.

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

पुल्लुकरं कलमकूरणिहं[1] वहंति
जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किंच मुद्धविअइल्लपसूणपुंजा[2] ॥ ३११ ॥

[पुष्पोत्करं कलमभक्तनिभं[3] वहन्ति
ये सिन्धुवारविटपाः मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षाः
ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः ॥ ]

---

## मधुमती

दोष एवेति स्मर्तव्यम् । तथाहि—सर्वदोषाणां अनौचित्यं हि मूलम् । तच्च औचित्यवत् वक्तृवाच्यादिगतत्वेन अनेकविधम् । तदभावे च न दोषः । अन्यथा—आत्मनः सुज्ञत्वप्रतिपिपादयिषया कथं अप्रतीतपदप्रयोगः कृतः इति, असुज्ञस्य नैतदाकारो विमर्शो भवतीति च अनौचित्यप्रतिसन्धानात् । एवमेव यत्र कविनिबद्धो न वक्ता, किन्तु कविरेव, तथा अत्रापि द्रष्टव्यम् । यत्र प्रकृतग्रन्थे सहृदयस्य सुज्ञत्वं उपलक्षितमिति, तत्र तस्य सुज्ञत्वेऽपि उक्तानौचित्यतादवस्थ्यात्, अज्ञस्य सहृदयत्वाभावाच्चेति ॥

**यथेति** । कविवत् विदूषकस्य ग्राम्यस्येति शेषः । तथा च ग्राम्याणां केवललोकप्रसिद्धादेव चमत्कार इति ग्राम्यत्वमेव दोषः इति भावः ।

---

1 'कमलकूरसमं'–क. 2 (कर्पूरमञ्जरी १-१९) । 3 कमलकूरनिभं–ख.

अत्र कलमभक्तमहिषीदधिशब्दाः ग्राम्या अपि विदूषकोक्तौ ॥

न्यूनपदं क्वचित् गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेह[1]रसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
'मा मा मानद माऽतिमामल'मिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु? मृता नु किं? मनसि मे लीना? विलीना नु किम्?[2]॥
॥ ३१२ ॥

---

## सङ्केतः

मामेति । 'मा मे'त्यादिनिषेधपदेषु[3] 'कदर्थये'त्यादिः[4] कापि क्रिया नास्तीति न्यूनत्वम् ॥

## मधुमती

गाढेति । अत्र 'मा मा पीडय माऽतिपीडये'ति वक्तव्ये पीडयेत्यनुक्तत्वात् न्यूनत्वेऽपि गुण एव । रचनापर्यवसानेन विह्वलतया शृङ्गारतिशयप्रतीतेः । इदमुपलक्षणम्—'मा मा मानदे'तिअधिकपदत्वमपि गुण एव ॥

---

1 'सान्द्रानन्द'–ख. 2 (अमरुशतके ४०) । 3 कामविवशायाः लज्जावशोद्भूतसंभ्रमायाः कामिन्याः, औचित्यात् इत्यादिः । 4 आदिपदात् आलिङ्गस्वेत्यादिः ।

क्वचित् न गुणो न दोषः । यथा—

तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनः भावार्द्र[1]मस्याः मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोः यातेति[2] कोऽयं विधिः[3] ॥३१३॥

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यतः' इत्येतैः न्यूनैः पदैः विशेषबुद्धेः अकरणात् न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः ।

अधिकपदं क्वचित् गुणः । यथा—

यद्वञ्चनाहितमतिः बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ ३१४ ॥

अत्र 'विदन्ति' इति द्वितीयं अन्ययोगव्यवच्छेदपरम् ॥

---

## सङ्केतः

उत्तरेति । पूर्वां तिष्ठेत् इत्यादिकां प्रतिपत्तिं बाधित्वा, दीर्घं न सा कुप्यति इत्यादिः उत्तरा । नैतत्, यतः इति विनापि[4] प्रतिपत्तिः स्यादित्यर्थः ॥

अन्ययोगेति । सन्त एव जानन्तीति भावः ॥

## मधुमती

उत्तरेति । तत्पदैर्विनाऽपीति शेषः ।

अत्र विदन्तीति । द्वितीय'विदन्ति'पदस्य अनुवादरूपतया प्रयोजन-

---

1 'स्नेहार्द्रं'–क. 2 'जातेति'–क. 3 (विक्रमोर्वशीये ४-९) ।
4 'नैतद्युज्यत इति विना'–घ.

यथावा—

> वद वद जितः स शत्रुः
> न हतो जल्पंश्च[1] तव तवास्मीति ।
> चित्रं चित्रमरोदीत्
> हा हेति परं मृते पुत्रे[2] ॥ ३१५ ॥

इत्येवमादौ हर्षभयादि[3]युक्ते वक्तरि ॥

---

### सङ्केतः

हर्षेति । वद वदेतिहर्षः, तव तवेति भयम्, आदिशब्दात् हा हेति शोकः[4] ॥

### मधुमती

जिज्ञासायां अन्ययोगव्यवच्छेद एव पर्यवसानम् । तथा च साधव एव विदन्तीत्यर्थः । तच्चाधिकम् । तथापि साधूनां दाक्षिण्यातिशयव्यञ्जकतया गुण एव, न तु दोषः ॥

इत्येवमादाविति । रसावेशे तथाभिधानस्यैव उचितत्वादिति भावः । अयं च परिहारः प्रकृते । न तु 'स्फटिकाकृती'त्यादौ । तत्र उक्तपरिहार-प्रकाराभावात् ॥

---

1 'जल्पंस्तु'–क. 2 (रुद्रटकाव्यालङ्कारे ४-३०) । 3 'भयशोकादि'–क.
4 यदुक्तम्—'वक्ता हर्षभयादिभिराक्षिप्तमानः स्तुवन् निन्दन् । यत्पदं असकृत् ब्रूते तत्पुनरुक्तं न दोषाय ॥' इति ॥

कथितपदं क्वचित्[1] गुणः—लाटानुप्रासे, अर्थान्तरसङ्क्रमितवाच्ये, विहितस्य अनुवाद्यत्वे च । क्रमेण उदाहरणानि—

सितकरकररुचिरविभा
विभाकराकार! धरणिधर! कीर्तिः ।
पौरुषकमला कमला
साऽपि तवैवास्ति नान्यस्य ॥ ३१६ ॥

---

## सङ्केतः

**पौरुषेति** । पौरुषलक्ष्मीरेव तव लक्ष्मीः इति व्याख्याने लाटानुप्रासः । **पौरुषमेव कमलं यस्याः कमलायाः** इति व्याख्याने तु तात्पर्यमात्रभेदाभावात् यमकत्वमेव ॥

## मधुमती

**कथितपदमिति** । तदंशे तथाभिधानस्यैव उचितत्वात् । **लाटानुप्रासे** इति तत्प्रपञ्चोपलक्षणम् । अनुप्रासे इति तु द्रष्टव्यम् । अत एव रसालङ्कारादावप्यस्य अदोषत्वम् । अत्र **विहितस्य अनुवाद्यत्वे** तेनैव पदेन परामर्शो युक्तः, न तु सर्वनाम्ना । बहूनां प्रक्रमे विशिष्यानुपस्थितेः । योग्यताप्रतिसन्धाने च प्रतीतिस्थगनात् ॥

---

1 क्वचित् इति नास्ति–ख.

ताला जाअन्ति गुणा
जाला ते सहिअएहिं घेप्पन्ति ।
रइकिरणानुग्गहिआहिं
होन्ति कमलाइँ कमलाइँ[1] ॥ ३१७॥

[तदा जायन्ते गुणाः, यदा ते सहृदयैः गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥]

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि[2] जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः[3] ॥ ३१८ ॥

पतत्प्रकर्षमपि क्वचिद्गुणः । यथा—उदाहृते 'प्रागप्राप्त' इत्यादौ ॥

---

सङ्केतः

तालेति । ताला तदा, जाला यदा । अत्र अपरः कमलाशब्दः[4] विकसितत्वादिगुणार्थान्तरवाची ॥

प्रागप्राप्तेति । अत्र हि चतुर्थपादे जामदग्न्यस्य शम्भौ भक्तिरेवोक्ता, सा च पतत्प्रकर्षेणैव वक्तुं योग्या ॥

मधुमती

उदाहृत इति । हरस्य कोपविषयत्वात् प्रकर्षत्यागेऽपि न दोषः ॥

---

1 (विषमबाणलीला)। 2 'गुणप्रकर्षेण'–क. 3 (किरातार्जुनीये . . .)।
4 'कमलशब्दः'–ग.

समासपुनरात्तं क्वचिन्न गुणः न दोषः, यत्र न विशेषणमात्रदानार्थं[1] पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते। यथा—अत्रैव 'प्रागप्राप्त' इत्यादौ॥

अपदस्थसमासं क्वचित् गुणः। यथा—उदाहृते 'रक्ताशोक' इत्यादौ॥

---

## सङ्केतः

**यत्र न विशेषणेति।** अयं भावः—'भवत्वशिथिलः' इत्यादिना समासेऽपि परशुवर्णने, 'येनानेन' इति वाक्यान्तरेण पुनः तस्यैव वर्णनं आरब्धं न दुष्टम्। वाक्यान्तर[2]त्वेनोक्तत्वात्। विशेषणत्वेनोक्तौ तु दुष्टत्वमेव। यथा—'नववयोलास्याय वेणुस्वनः' इत्यादौ॥

**रक्तेति।** अत्र विग्रहवाक्ये दीर्घसमासता नोचिता, परं—'शिरःकम्पालोकाम् कुपित इव विरही' इति कुपितोक्तौ न दोषाय॥

## मधुमती

**समासेति।** तथाच यत्र समासेन विशेषणपदस्योपादानं तत्र दोषः, यत्र तु वाक्यान्तरं क्रियते तत्र समासोपादानाभावात् न दोषः इति भावः॥

**उदाहृते रक्तेति।** प्रकरणात् कुपितत्वप्राप्तौ विकटसमासस्य उचितत्वादिति भावः॥

---

1 'विशेषणदानार्थं'–ख. 2 'वाक्यान्तर्गत'–ग. 'वाक्यान्तर्गत'–घ.

गर्भितं तथैव । यथा—

हुमि अवहत्थिअरेहो
णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणेवि तुमम्मि पुणो
पत्तिहि भत्तिं ण पसुमरामि [1] ॥ ३१९ ॥

[भवाम्यपहस्तितरेखः [2]
निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः
प्रतीहि भक्तिं न प्रस्मरामि [3] ]

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय ॥

एवं अन्यदपि लक्ष्यात् प्रेक्ष्यम् [4] ॥

---

## सङ्केतः

तथैवेति । क्वचिद्गुण इत्यर्थः ।

हुमीति । विषमबाणलीलाकथागाथेयम् । स्मरं प्रति तत्सहचरसमागमे तारुण्यो[5]क्तिरेषा ॥ रेखा[6] मर्यादा ।

## मधुमती

तथैवेति । न दोष इत्यर्थः । अत्र प्रतीहीति । प्रतीहीतिक्रियापदमात्रोपादानेनैव वाक्यान्तरत्वाभावात् न गर्भितत्वम् । दोषोदाहरणे तु—'वदामि भवतस्तत्त्वम्' इतिवत् वाक्यान्तरप्रवेशात् तथात्वमेव । 'प्रतीही'त्यत्र तु वाक्यार्थस्य कर्मत्वात् प्रकृतवाक्यानुगुणत्वमेवेत्यर्थः ॥

---

1 (विषमबाणलीला) । 2 'रेषः'–क. 3 'न मुष्णामि'–क.
4 'लक्ष्यम्'–ख. 5 'कारुण्यो'–घ. 6 'रेषा'–ग.

व्यभिचारिरसस्थायि-
भावानां शब्दवाच्यता ।
कष्टकल्पतया व्यक्तिः
अनुभावविभावयोः ॥ ६० ॥
प्रतिकूलविभावादि-
ग्रहो: दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदौ
अङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥
आङ्गिनोऽननुसन्धानं
प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च
रसे दोषाः[1] स्युरीदृशाः ॥ ६२ ॥

---

सङ्केतः

**कष्टेति** । अनुभावोक्तौ विभावस्य कष्टेन व्यक्तिः । विभावोक्तौ च अनुभावस्य ।

मधुमती

अवसरसङ्गत्या रसदोषानाह—व्यभिचारीत्यादिना । **शब्दवाच्यतेति** ब्रुवता—स्थायिव्यभिचारिणोः शब्दादुपस्थितिः न कार्या, यत्र तु व्यभिचारिणोऽपि अनुभावात् झटिति न प्रतीतिः तत्र शब्देनापि तदुपस्थितिः—इति प्रतिपादितम् । '**कष्टकल्पनये**'ति ब्रुवता विभावानु-

---

1 'रसदोषाः'–ख.

(१) स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयितानने, सकरुणा मातङ्गचर्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्वत्याः नवसङ्गमप्रणयिनो दृष्टिः शिवायास्तु वः ॥ ३२० ॥

अत्र व्रीडादीनाम्[1] ॥

'व्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे,
सोत्कम्पा भुजगे, निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ, म्लाना कपालोदरे ॥'

इत्यादि तु[2] युक्तम् ॥

---

### सङ्केतः

अत्र व्रीडादीनामिति । स्वशब्देनोपादानं इति योगः ॥

### मधुमती

भावयोः काव्ये शब्दादेवोपस्थितिः झटिति प्रत्ययो यथा भवति, तथा कार्या, नाट्ये च विभावमात्रस्य शब्दात्, अनुभावस्य तु प्रत्यक्षात् उपस्थितिः इति सूचितम् ॥

---

1 'व्रीडादीनां वाच्यत्वम्'–क.   2 'तु' इति नास्ति–ख,

(२) रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् ।

क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं
किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे
कोऽप्यजायत रसो निरन्तरः ॥ ३२१ ॥

---

## सङ्केतः

रसस्य सामान्य[1]विशेषभावात् द्वैरूप्य[2]मित्याह—रसस्येति । स्वशब्दः 'रसः' इतिरूपः । वाच्यत्वमिति । वाच्यत्वं हि स्वशब्दनिवेदितत्वेन वा, विभावादिप्रतिपादनमुखेन वा स्यात् । पूर्वस्मिन् पक्षे—स्वशब्दनिवेदितत्वाभावे विभावादिप्रतीतौ रसादेः अप्रतीतिप्रसङ्गः । न च केवलशृङ्गारादिशब्दान्विते विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्वप्रतीतिः, यथा—'शृङ्गारहास्यकरुणाः' इत्यादौ । तस्मात् अन्वयव्यतिरेकाभ्यां अभिधेयसामर्थ्याक्षिप्तत्वमेव रसादेः, न तु अभिधेयत्वं कथञ्चित् इति स्वशब्दवाच्यता दोषः इत्यर्थः । एवं द्वितीय एव पक्षो न्याय्यः । एतेन—'रसवद्दर्शितस्पष्टे'त्यादिव्याख्यायां "तत्र स्वशब्दाः शृङ्गाराद्याः शृङ्गारादेर्वाचकाः" इति उद्भटोक्तं निरस्तम् ॥

तामिति । भुजमूलं कक्षौ, [3] तत्र जनैः या लोक्यते तां तथा ॥

---

1 'रससामान्य'–ग. 2 'वैरूप्य'–घ. 3 'कक्षा'–घ.

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुलभां अभिरामरूपाम्[1] ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥ ३२२ ॥

(३) स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः[2] श्रुतिगतैः उत्साहस्तस्य कोऽप्यभूत् ॥३२३॥

अत्र उत्साहस्य ॥

---

### सङ्केतः

अभिषिक्तः न्यस्तः । व्यक्तः पुलकादिनेति शेषः ॥

सम्प्रहार इति । प्रहरणैः शस्त्रैः ये घाताः तेषां **ठणत्कारैः** इत्यर्थः । यत्रापि स्वशब्दनिवेदितत्वं विभावादिभिः प्रतिपादितत्वमप्यस्ति, तत्रापि विभावादिमुखेनैव रसादिप्रतीतिः । स्वशब्देन सा केवलं अनूद्यते ॥

### मधुमती

शृङ्गारसीमनीति । न च 'शृङ्गारी गिरिजानने' इत्यादाविव अत्रापि शृङ्गारपदं अनुवादकम् । तत्र तस्य उद्देशरूपप्रयोजनसत्त्वात्, अत्र तु तदभावात् ॥

---

1 'मूर्तिं'–क. 2 'झणत्कारैः'–क.

(४) कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभूत् नयनावनौ सा ॥ ३२४ ॥

अत्र उद्दीपनालम्बनरूपाः शृङ्गारयोग्याः विभावाः अनुभावापर्य[1]वसायिनः स्थिताः इति कष्टकल्पना ॥

---

## सङ्केतः

लीलेति । लीलया शिरसि अंशुकस्य निवेशविशेषेण या क्लृप्तिः तया । उद्दीपनालम्बनरूपाः शशिकान्ति-दिक्कलीरूपाः । अनुभावापर्यवसायिनः इति । शृङ्गारी चेद्युवा, सम्भवन्ति तदा अनुभावाः,[2] शान्तश्चेत् न सम्भवन्ति, तं प्रति विभावानां अकिञ्चित्करत्वात् इति । शृङ्गारित्वसन्देहे सन्तोऽपि विभावाः लीलादिष्वनुभावेषु न पर्यवस्यन्ति । नापि 'वियदलिमलिनाम्बु' इत्यादिवत् अत्र विभावस्य असाधारणतया अन्यतमाक्षेपहेतुः किमपि पदमस्ति ॥

## मधुमती

अत्रोद्दीपनेति । 'व्यक्तस्तनं लीलाशिरोंऽशुकं निवेशयन्ती' इति वक्तव्ये प्रकृतक्रमेणाभिधानात् आलम्बनविभावविशेषणत्वेनैव प्रतीतेः कष्टकल्पना ॥

---

1 'अनुभवापर्य'—क. (=आस्वादापर्यवसायिनः) 'अनुभावपर्य—ख. (=क्लेशेन अनुभावप्रत्यायकाः) । 2 'तथाविधानुभावः'—ग.

(५) परिहरति रतिं मतिं लुनीते
स्खलति भृशं परिवर्तते च भूयः [1]।
इति बत! विषमा दशाऽस्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥ ३२५॥

अत्र रतिपरिहारादीनां अनुभावानां[2] करुणादावपि संभवात् कामिनीरूपः विभावः यत्नतः प्रतिपाद्यः ॥

(६) प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः[3] ॥३२६॥

---

## मधुमती

परिहरतीति। अत्र रतिहारादेरनुभावस्य करुणसाधारण्यात् कामिनीरूपः विभावः यत्नेन कल्प्यते, न त्वाक्षेप्तुं शक्यत इति विभावस्य कष्टकल्पना दोषः इति भावः॥

---

1 'स्खलतितरां परिवर्तते स भूयः'–ख. 2 'अनुभावादीनाम्'–ख.
3 प्रणयकलहकुपितां मानवतीं नायिकां प्रति नायकस्योक्तिरियम्।

**अत्र शृङ्गारे प्रतिकूलस्य शान्तस्य अनित्यताप्रकाशनरूपः विभावः तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ॥**

---

## सङ्केतः

**प्रतिकूलस्येति**। 'कालो मृगचलः प्रयातः प्रयात एव न पुनरेति।' इत्यादिवैराग्यकथाभिः प्रियाप्रसादनं निर्विण्णस्येव[1] कस्यापीति शृङ्गारप्रतिकूलत्वं शान्तस्य। **विभाव इति**। एवं च विभावप्रातिकूल्यं, **तत्प्रकाशितो निर्वेदो**ऽप्यत्र स्वदत इति शान्तशृङ्गारयोः व्यभिचारिप्रातिकूल्यं च। शान्तं प्रति निर्वेदस्य व्यभिचारित्वं परमतेन। स्वमतेन तु विचार्यमेव। एवं शृङ्गारबीभत्सयोः वीरभयानकयोः शान्तरौद्रयोरपि विभावादिप्रातिकूल्यं ज्ञेयम् ॥

## मधुमती

**अत्र शृङ्गार इति**। सामान्यतः कालानित्यताप्रदर्शनं स्वकीयं ज्ञानं अनुभवश्च। एवं कालविशेषानित्यताप्रदर्शनं तु प्रकृतरसपरिपोषकृत्, यथा— 'न पुनरेति गतं चतुरं वयः' इत्यादौ। तदिह सामान्यतः तदभिधानात् दोषः। **निर्वेदश्चेति**। यद्यपि विप्रलम्भे तस्यापि व्यभिचारित्वात् न विरोधः। तथापि विरुद्धस्य शान्तस्य यः स्थायी निर्वेदः, स व्यभिचारित्वेनात्रोपात्तः अनुभावसाहित्येन विरोधमावहतीति भावः ॥

---

1 'निर्विण्णस्यैव'–ग.

णिहुअरमणम्मि लोअणपहम्मि
　　पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ
　　वणगमणं एव्व महइ वहू ॥ ३२७ ॥

[निभृतरमणे लोचनपथे
　　पतिते गुरुजनमध्ये ।
सकलपरिहारहृदया
　　वनगमनमेवेच्छति वधूः [1] ॥ ]

अत्र सकलपरिहार-वनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेन उपभोगार्थं वनगमनं चेत् न दोषः ।

(७) दीप्तिः पुनः पुनः यथा—कुमारसम्भवे रतिप्रलापे [2] ॥

---

## सङ्केतः

णिहुयेति । निभृतरमणः उपपतिः । वनगमनं सङ्केतगृहम् ।

दीप्तिरिति । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः [3] पुनः पुनः परामर्शेन मालतीमालेव म्लायति । धाराप्राप्ते हि रसे तदाविष्टानां तत्परवशानां उक्तिः अल्पीयस्येव निर्यातीत्यर्थः ।

## मधुमती

यथा कुमारसंभवे इति । 'अथ शोकपरायणा सती' इत्यादिना

---

1 सकलानां गृहकार्याणां परिहारे त्यागे हृदयं यस्याः । 2 (चतुर्थे सर्गे) ।
3 'लब्धयोगः'—घ.

(८) अकाण्डे प्रथनं यथा—वेणीसंहारे[1] द्वितीयेऽङ्के अनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ।

(९) अकाण्डे च्छेदो यथा— वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोः धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ ॥

(१०) अङ्गस्य अप्रधानस्य अतिविस्तरेण वर्णनं यथा—हयग्रीववधे हयग्रीवस्य ॥

---

सङ्केतः

**अनेकवीरसंक्षये** भीष्मादिवीरलक्षाणां क्षये ।

**हयग्रीवेति** । विपक्षोत्कर्षेण, मूलनायकस्य विष्णोः अत्र न तावन्महोत्कर्षः इति न साध्विदमिति, इत्थं न वाच्यमिति भावः । तथा कादम्बर्यां 'रूपविलासे'त्यादिना महाविप्रलम्भबीजमुपक्षिप्य, तदनुपयोगिनां

मधुमती

अत्यन्तं पुष्टिं गतः अङ्गभूतः करुणरसः पुनरपि—

"अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा
समदुःखामिव कुर्वती स्थलीम् ॥"

इत्यादिना द्विगुणं प्रकाश्यमानः वैरस्यमावहतीति भावः ॥

---

1 'वीरसंवरणे'–क.

(११) अङ्गिनः अननुसन्धानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकायाः विस्मृतिः ॥

(१२) प्रकृतयः दिव्याः अदिव्याः दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधानाः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः उत्तममध्यमाधमाश्च [1] । तत्र

---

## सङ्केतः

अटवीशबरेशाश्रममुनिपुरीनृपादीनां वर्णनम् । हर्षाख्यायिकायां वा 'जयति ज्वलदि'त्यादिना हर्षोत्कर्षवद्विजयबीजमुपक्षिप्य अनुपयोगिबाणान्वयस्य वर्णनम् । तदित्थं महाकवयोऽपि अन्यत् बीजमुपक्षिप्य तदसङ्गतशृङ्गाराङ्गभूततत्तदृतूपवनविहारपुष्पावचयजलकेल्यादीनां प्रस्तुतरसतिरस्कारिणीं वर्णनां कुर्वन्तो दृश्यन्ते इति त एवात्र तत्त्वज्ञाः ॥

विस्मृतिरिति । अनुसन्धानं हि सहृदयतायाः सर्वस्वम् ॥

प्रकृतयः स्वभावाः । धीरोदात्तेति । धर्मयुद्धवीरप्रधानो धीरोदात्तः । धीरोद्धतादि[2]त्रयेऽपि क्रमेण रौद्र-शृङ्गार-शान्तरसप्राधान्येऽपि अवश्यंभावित्वात् उत्साहस्य वीररसप्राधान्यमपि इति ज्ञेयम् । ततश्च वीररौद्राभ्यां

## मधुमती

प्रकृतिविपर्ययं व्याख्यातुं प्रकृतिभूतां तावदाह—प्रकृतय इति । दिव्याः देवादयः, अदिव्याः मानुषादयः, दिव्यादिव्याः दिलीपादयः । वीरेति । वीरे धीरोदात्तः, रौद्रे धीरोद्धतः, शृङ्गारे धीरललितः, शान्ते धीरप्रशान्तश्च नायकः इति यथासंख्यमन्वयः । तेऽपि प्रत्येकं

---

1 'उत्तमाधममध्यमाश्च'–क.　2 'धीरोदात्तादि'–ग.

रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि। किन्तु—रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोस्सम्भोगवर्णनमिव अत्यन्तमनुचितम्।

क्रोधं प्रभो[1]! संहर संहरेति
यावत् गिरः खे मरुतां चरन्ति।
तावत् स वह्निः भवनेत्रजन्मा
भस्मावशेषं मदनं चकार[2] ॥ ३२८ ॥

---

## सङ्केतः

वीरशृङ्गाराभ्यां दानधर्मवीरशान्ताभ्यां प्रधानाः धीरोद्धतादयः[3] स्युः। दिव्यादिप्रकृतित्रिकस्य प्रत्येकं उत्तम-मध्यम-अधमत्वेन त्रिधात्वे सति नवधात्वम्। नवभेदानामपि प्रत्येकं धीरोदात्तादित्वेन चतुर्धात्वे षट्त्रिंशद्भेदत्वम्। **अदिव्योत्तमेति**। अदिव्या-मानुषी, सा चासौ उत्तमप्रकृतिश्चेति सा तथा। अभिनेयानभिनेययोः काव्ययोः यथोत्तमप्रकृतिराजादेः उत्तमस्त्रीभिः सह अग्राम्यं[4] सम्भोगविप्रलम्भवर्णनं तथैव दिव्येषु। सम्भोगश्च न सुरतात्मा एक एव, यावदन्योऽपि मिथो दर्शनादिकः ग्राह्यः। एवं हास्यादावपि औचित्यं वाच्यम्॥ दिव्येषु रतेः वर्ण्यत्वेन सामान्येनोक्त्वा, उत्तमदेवताविषयत्वेनापि सा स्यात् इत्याशङ्क्याह—**किन्त्विति**। **अनुचितमिति**।

## मधुमती

उत्तममध्यमाधमाः। **तत्रेति**। उभयत्रैवोचितत्वादिति भावः। **किन्त्विति**। केचित्तु—लोके परस्त्रीवर्णनं तत्सम्भोगवर्णनं च अनुचितमपि महाकवि-

---

1 'विभो'—क. 2 (कुमारसं. ३-७२)। 3 'धीरोदात्तादयः—ग.
4 'सह ग्राम्यं'—ग.

इत्युक्तवत्,[1] भ्रुकुट्यादिविकारवर्जितः क्रोधः[2] सद्यः

## सङ्केतः

आस्वादकानां हि यत्र चमत्काराविघातः तदेव रससर्वस्वम् । आस्वादायत्तत्वात् रसस्य । पित्रोः सम्भोग इव एतद्वर्णने लज्जादिरेव, न तु कश्चित् चमत्कार इत्यर्थः । यथा कुमारसम्भवे अष्टमे सर्गे ॥ क्रोध इति ।

## मधुमती

सम्प्रदायसिद्धत्वात् यथा न दोषः, तथा दिव्योत्तमसम्भोगवर्णनमपि न दोषः । कुमारसम्भवे तस्यापि कुमारजन्मोपयोगित्वेन वर्णनात् । किञ्च—सम्भोगवत् दोहदः, तेषु विप्रलम्भवर्णनं च अनुज्ञातमेव—इत्याहुः । तच्च न युक्तम् । पित्रोः विप्रलम्भवर्णनमिव तस्यानुचित्वात् । कविसम्प्रदायसिद्धत्वं तु सर्वत्र समं समाधानम् ॥ वस्तुतस्तु—दिव्यानां उत्तमदेवतानुगतरतिः न वर्णनीया अनौचित्यात् (अकाव्यात्) । उर्वश्यां पुरूरवसः, दुर्गायां महेशस्य च तद्वर्णनं न विरुद्धम्, औचित्यात् । पित्रोस्तद्वर्णनं तु अनुचितम्, कविसमयाभावात् इति ॥

भ्रुकुट्यादीति । भ्रुकुट्यादिविकारमात्रविवर्जितः इत्यर्थः । अन्यथा

> तपःपरामर्शविवृद्धमन्योः
> भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
> स्फुरन् उदर्चिः सहसा तृतीयात्
> अक्ष्णः कृशानुः किल निष्पपात ॥[3]

इति परमेश्वरस्यापि भ्रुकुटिवर्णनात् असङ्गतिः स्यात् । तथा च क्रोधस्य भ्रुकुटिः सद्यस्तत्फलं च वर्णनीये, न तु भ्रुकुटिमात्रम् इति तात्पर्यम् । अत

---

1 'क्वचित्'—ख.　2 कोपः ।　3 (कुमारसं. ३-७१) ।

**फलदः स्वर्गपाताल[1]गगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्ये-ष्वेव । अदिव्येषु तु[2] यावदवदानं प्रसिद्धं उचितं वा**

---

## सङ्केतः

भ्रुकुट्यादिविकारवांस्तु अदिव्येष्वेव । **अवदानं** सातिशयं कर्म ।

## मधुमती

एवं देवीमहात्म्ये—

> " दृष्ट्वा तु देवि ! कुपितं भ्रुकुटीकरालम्
> उद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः ।
> प्राणान् मुमोच महिषः तदतीव चित्रम्
> कैर्जीव्यते हि कुपितान्तकदर्शनेन " ॥

इत्युक्तम् । **स्वः पातालेति** । उक्तं च रुद्रटेन—

> " कुलशैलाम्बुनिधीनां न ब्रूयात् लङ्घनं मनुष्येण ।
> आत्मीययैव शक्त्या सप्तद्वीपावनिक्रमणम् ॥ "
> येऽपि तु लङ्घितवन्तो भरतप्रायाः कुलाचलाम्बुनिधीन् ।
> तेषां सुरादिमुख्यैः सङ्गादासन् विमानानि ॥ इत्यादि ।

**यावदिति** । यावदवदानं इति पाठः । हनुमतः अब्धिलङ्घनम्, अर्जुनस्य देवविमानारोहणं च न दोषाय । अनयोः परमेश्वरशक्त्युपबृंहितत्वात् देवावतारत्वेन दिव्यादिव्यप्रकृतित्वाच्च । एवं च यद्रूपनिबन्धनेन विनेयानां

---

1 'स्वःपाताल'–ख. 2 'च'–ख.

तावदेव उपनिबद्धव्यम्। अधिकं तु निबध्यमानं अतथ्यप्रतिभासेन 'नायकवत् वर्तितव्यम्, न प्रतिनायकवत्' इत्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु उभयथाऽपि। एवं उक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामपि अन्यथा वर्णनं विपर्ययः। तत्र-

## सङ्केतः

अधिकमिति। अयं भावः—स्वःपातालगमन-अब्धिलङ्घनादिकं अदिव्यस्य वर्ण्यमानं असम्भाव्यतया अलीकमिति चिन्तयन्तः विनेयाः उपदेश्यस्य[1] चतुर्वर्गोपायस्यापि अलीकतां कल्पयन्ति—सर्वमिदं शास्त्रोक्तं असम्बद्धमेवेति—इति। उभयथाऽपीति। रामपाण्डवादौ दिव्यादिव्यसम्बद्धमपि वाच्य-

## मधुमती

बुद्धिखण्डना न जायते तादृक् वर्णनीयम्। अत एवोक्तम्—अधिकं त्विति। अत एव दशरूपकावलोकेऽप्युक्तम्—

"यत्तत्रानुचितं किंचित् नायकस्य परस्य वा।
विरुद्धं तत् परित्याज्यं अन्यथा वा प्रकल्पयेत्॥"

इति। अत एव उदात्तराघवे नायकानुचितस्य वालिवधस्य त्यागः, वीरचरिते च अन्यथा प्रकल्पनम्। धीरेति। व्युत्क्रमणोपनिबन्धश्च न

1 'उपदेशस्य'—घ.

भवन् भगवन् इति उत्तमेन, नाधमेन, मुनिप्रभृतौ न राजादौ, भट्टारकेति न राजादौ, परमेश्वरेति न मुनिप्रभृतौ [1] प्रकृतिविपर्ययापत्तेः वाच्यम्। एवं च देशकालवयोजात्यादीनां वेषव्यवहारादिकं उचितमेव [2] उपनिबद्धव्यम् [3] ॥

---

## सङ्केतः

मित्यर्थः। **मुनिप्रभृतौ नेति**। वाच्यमिति योगः। **प्रकृतिविपर्ययापत्तेः** इति हेतुः। **देशेति**। विश्वं विश्वैकदेशाश्च देशः। एकं, द्वे, त्रीणि, सप्त, चतुर्दश, एकविंशतिर्वा विश्वानि स्युः। स्वर्ग-मर्त्य-पाताल-महर्जन-स्तपस्सत्यैः सप्तभिश्च वायुस्कन्धैः सप्तभिश्च पातालैः विशेषविवक्षायां अनेकत्वम्। सामान्यविवक्षायां तु ऐक्यम्। तत्र—भूमध्ये जम्बूद्वीपप्लक्षशाल्मलिकुश-क्रौञ्चशाकपुष्कराद्याः सप्तद्वीपाः। अष्टादशेत्येके। एकः त्रयः चत्वारः सप्त वा अब्धयो वाच्याः इति कविप्रसिद्ध्या सर्वं घटते। **कालः**— काष्ठा-कलामुहूर्तयामदिनरात्रिपक्षमासर्तुवर्षादिभेदभिन्नः। **वयः** शैशवादिकम्। **जातिः** स्त्रीपुंसादिका, ब्राह्मणत्वादिका वा। **आदिशब्दात्** विद्यावित्तकुला-

## मधुमती

कार्यः, प्रकृतिविपर्ययापत्तेः। **तत्रभवन्निति**। नाट्ये मुनिप्रभृतौ उत्तम-पात्रे 'तत्रभवान्' 'भगवान्' इति वाच्यम्, न तु राजादौ मुनिप्रभृता-वपि। नीचेनेव उत्तमेनापि राजादौ भट्टारकेति न वाच्यम्, किन्तु

---

1 'भट्टारकस्येति नोत्तमेन राजादौ'—क. 2 'जात्यादिसमुचितमेव'—क.
3 'बन्धव्यम्'—क.

(१३) अनङ्गस्य रसानुपकारकस्य वर्णनं यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य तस्य राज्ञा[1] प्रशंसनम् ॥

'ईदृशाः' इति ॥ नायिकापादप्रहारादिना नायककोपादिवर्णनम् ॥

---

## सङ्केतः

दयः। व्यवहारादीत्यादिशब्दात् आकारवचनादयः। व्यवहारादीति च

## मधुमती

देवेति वाच्यम्। नीचेन तु वैपरीत्येन ॥ यदुक्तम्—

'तत्रभवन् भगवन्निति नार्हत्यधमो गरीयसो वक्तुम्।
भट्टारकेति च पुनः नैवैतान् उत्तमप्रकृतिः।
तत्रभवन् भगवन्निति नैवार्हत्युत्तमोऽपि राजानम्।
वक्तुं नापि कथंचित् मुनिं च परमेश्वरेशेति ॥" इति ॥

कुत एतदित्यत आह—प्रकृतीति। नायिकेति। एवं नायिकाकोपेन नायकस्य अनुनयवैमुख्यम्—इत्यादि स्वयमनुसर्तव्यम्।

---

1 'वर्णितस्य राज्ञः'–क.

उक्तं हि ध्वनिकृता—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा'[1] ।। इति ।।

इदानीं क्वचित् अदोषा अप्येते इत्युच्यन्ते—

न दोषः स्वपदेनोक्तावपि
सञ्चारिणः क्वचित् ।

---

## सङ्केतः

प्रत्येकं योज्यम् । तेन देशवेषादेः औचित्येन निबन्धः कार्यः इत्यर्थः । एवं कालादावपि योज्यम् ।।

तस्येति । वसन्तस्येत्यर्थः ।।

एते दोषाः ।।

## मधुमती

**अनौचित्यादिति** । अनौचित्यं—औचित्याभावः । औचित्यं च—वक्तृवाच्यप्रबन्धौचित्यभेदात् त्रिधा । औचित्यान्तराणां अत्रैवान्तर्भावात् । यत्तु—'मुक्ताभिः सलिलरयः' ' 'शुक्तिपेशीमुक्ताभिः' इत्यादिना अन्यत्रापि मुक्तावर्णनम्, तत् कष्टानुभवात्, एकदैव सकलर्तुप्रादुर्भावाच्चेति ध्येयम् ।।

---

1 (ध्वन्यालोके ३-१४) ।

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैः बन्धुवधूजनस्य वचनैः नीताऽऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः[1] ॥३२९॥

अत्र औत्सुक्यशब्द इव तदनुभावः न तथा प्रतीति-कृत् । अत एव 'दूरादुत्सुकं' इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिव उत्सुकत्वानुभावस्य सहसाप्रसारणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावात् उत्सुकमिति कृतम् ॥

---

## सङ्केतः

न तथेति । यथा औत्सुक्यनामा सञ्चारी साक्षात् स्वपदेनोक्तः चमत्कारकारी, न तथा तदनुभावः चिन्तादिरूपः चमत्कारीति स्वशब्देन औत्सुक्यनामा सञ्चारी सम्प्रोक्तः ॥

व्रीडादीति । व्रीडाहर्षकोपासूयाप्रसादाः । तदनुभावाः—विवलन-स्फारणारुणत्वाञ्चितभ्रूलतात्वबाष्पाम्बुपूर्णत्वस्वरूपाः । तथा प्रतिपत्तीति । चमत्कारकारित्वाभावादित्यर्थः ।

## मधुमती

अत्रौत्सुक्येति । त्वरालक्षणं हि कार्यं नानाकारणकम्, तावन्मात्रोपादाने निमित्तान्तरजनितत्वप्रतिसन्धानेन प्रतीतिस्थगनसंभवात् । न च शब्देनैवाभिधातुमुचितम् । एवं च यस्य रसस्य यः स्थायी व्यभिचारी वा तत्र तस्योपादानं दोषः इति द्रष्टव्यम् ॥

---

1 (रत्नावली–१-२) ।

सञ्चार्यादेः विरुद्धस्य
बाध्यस्योक्तिः गुणावहा ॥ ६३ ॥

बाध्यत्वेनोक्तिः न परमदोषः, यावत् प्रकृतरस-परिपोषकृत् । यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्'

इत्यादौ । अत्र वितर्कादिषु उद्धतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ।

---

सङ्केतः

क्वाकार्यमिति । अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृति-चिन्तने च मिथो बाध्यबाधकतया भवन्ती चिन्तायामेव विश्राम्यन्ती परमास्वा-दस्थानमिति विभाव्यम् ।

मधुमती

संचार्यादेरिति । आदिपदात् विभावादिपरिग्रहः । सञ्चार्यादेः इति ब्रुवता स्थायिनः व्यवच्छिन्नाः । तेषां हि लवणाकरत्वाभिधानेन भावान्तराबाध्यत्वात्, बाध्यबाधकभावप्रतीतावपि व्यभिचारिणां शान्त्यादेरुदा-हृतत्वात्, तस्यैव चमत्कृतिभूमित्वाच्चेति द्रष्टव्यम् ।

पाण्डु क्षामं वदनं [1]

हृदयं सरसं तवालसं च वपुः ।

आवेदयति नितान्तं

क्षेत्रियरोगं सखि! हृदन्तः ॥ ३३० ॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धत्वम् ।

सत्यं मनोरमाः रामाः सत्यं रम्याः विभूतयः ।

किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ३३१ ॥

इत्यत्र आद्यं अर्धं बाध्यत्वेनैवोक्तम् । जीविताद्प्यधिकं अपाङ्गभङ्गस्य अस्थिरत्वमिति

---

## सङ्केतः

पाण्डुक्षाममिति । रसौ पारदस्नेहौ । क्षेत्रियरोगः क्षयरोगः जारश्च[2] । न विरुद्धत्वमिति । पाण्डुतादयो हि क्षयरोगजाः जारचिन्तोत्थाश्च मृत्यवे भवन्तीति करुणविप्रलम्भयोः समाः ॥

सत्यमिति । अत्र शृङ्गारविभावप्रतिपादकं पूर्वार्धं बाध्यत्वेनोक्तं, न तु शिष्यौन्मुख्यार्थं काव्यशोभार्थं वा । ध्वनिकारास्तु—शिष्यौन्मुख्यार्थत्व-काव्यशोभार्थत्वाभ्यां शान्तशृङ्गारयोः विरोधं परिहरन्ति ।

## मधुमती

विरुद्धपदव्यावर्तनार्थमाह—पाण्डुक्षाममिति । परक्षेत्रे परशरीरे चिकित्स्यः क्षेत्रियः असाध्यो रोगः इत्यर्थः । योगान्तशरीरसाध्यश्चायम् । अत्र रोगानुभावाः शृङ्गारे प्रतिपाद्यमाना अपि उभयसाधारणाः न विरुद्धा इति, उत्तरयति—किन्त्विति पदसन्दंशात् । तथा च न दोषः इति भावः ।

---

1 'वक्त्रं'–क. 2 'उद्गारश्च'–ग.

**प्रसिद्धभङ्गुरोपमानतया[1] उपात्तं सत् शान्तमेव पुष्णाति, न पुनः शृङ्गारस्य अत्र प्रतीतिः, तदङ्गाप्रतिपत्तेः ।**

---

## सङ्केतः

शृङ्गाराद्धि काव्यं चारु स्यात्, मृदुमतयश्च नृपाद्याः झटित्यभिमुखीभूताः शान्ते सुखं स्थाप्यन्ते इति । तदसत्—अनयोः नैरन्तर्यस्य भरतेन निषिद्धत्वात् इति—**प्रसिद्धेति** । प्रसिद्धेन तेन अधिकत्वाख्येन **गुणेन** या **उपमानता**[2] तया **उपात्तं** अस्थिरत्वं कर्तृ **शान्तमेव पुष्णाति** । यद्वा—**प्रसिद्धः** आधिक्याख्यो गुणो यस्य—प्रस्तावात् **अपाङ्गभङ्गस्य** स तथा । सः **उपमानं** यस्य यत्र वा तत् प्रसिद्धतद्गुणोपमानम्, तस्य भावः तत्ता, तया उपात्तं, प्रस्तावात् जीवितं, द्वितीयार्धं[3] वा कर्तृ । **तदङ्गेति** ।

## मधुमती

**प्रसिद्धेति** । उपमानं हि प्रकृष्टगुणम्, उपमेयं च निकृष्टगुणं भवति । एवं च उपमेयोज्जीवनादुपमानस्य अपाङ्गभङ्गस्य अस्थिरत्वातिशयः प्रतीयत इति शान्तानुगुणत्वमेवेत्यर्थः ॥ **न पुनरिति** । इदमत्राकूतम्—न तावत् अङ्गनाद्यालम्बनविभावाद्युपादानं इह शृङ्गारस्य व्यञ्जकम् । हेयत्वेन प्रतिभासात् । न च तथासति शुभसंज्ञोपादानानर्थक्यम्, अन्योपादेयत्वप्रतीत्या वैराग्यातिशयप्रकृतिफलकत्वात् । एवं च शृङ्गाराङ्गस्याप्यङ्गनादेः न शृङ्गारपर्यवसायित्वम्, इति ॥ ध्वनिकारमतं दूषयति—**न त्विति** । यदुक्तं ध्वनिकारैः—

> ' विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
> तद्विरुद्धरसस्पर्शः तदङ्गानां न दुष्यति ॥ इति ॥

मत्ताङ्गनापाङ्गभङ्गलक्षणस्य शृङ्गारानुभावस्य स्पर्शेन भोगेन उन्मुखीकृताः

---

1 'प्रसिद्धतद्गुणोपमानतया'–क. 2 'गुणोपमानतया'–ग. 3 'द्वितीयार्थं'–घ.

न तु विनेयो[1]न्मुखीकरणं अत्र परिहारः, शान्त-शृङ्गारयोः नैरन्तर्यस्याभावात् । नापि काव्यशोभा-करणम्, रसान्तरात् अनुप्रासमात्राद्वा[2] तथाभावात् ॥

आश्रयैक्ये विरुद्धो यः
स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितः
नैरन्तर्येण यो रसः ॥ ६४ ॥

वीरभयानकयोः एकाश्रयत्वेन विरोधः इति

---

सङ्केतः

शृङ्गाराङ्गानामित्यर्थः । **रसान्तरात्** अत्रोक्तशान्ताख्यरसात् । **अनुप्रास-मात्रात्**—'मत्ताङ्गनापाङ्गभङ्गे'त्यादिरूपात् । **तथाभावात्** गुम्फशोभायाः सद्भावात् इत्यर्थः ॥

मधुमती

सदाभ्यस्तमहिलाकटाक्षविभ्रमाः शृङ्गारोत्पादनेन विनेयाः—शिक्षणीयाः । उपदेशवाक्यात् विरज्यन्तीत्यर्थः । **रसान्तरादिति** । शान्तरसादित्यर्थः । **अनुप्रासमात्राद्वेति** । न पुनः शृङ्गारस्य प्रतीतिरिति भावः ।

**वीरेति** । यस्य यदालम्बनको वीरो रसः तस्य तस्मिन्नेवालम्बने

---

1 'विनयो'–ख. 2 'अनुप्रासाद्वा'–क.

प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्त-शृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्। यथा नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतम्, अहो वादित्रम्' इत्यद्भुतं अन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः न परं प्रबन्धे, यावत् एकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते। यथा—

भूरेणुदिग्धान्[1] नवपारिजात-
मालारजोवासित[2]बाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान्
सुराङ्गनाश्लिष्टभुजान्तरालाः॥ ३३२॥

---

## सङ्केतः

**प्रतिपक्षेति**। अन्यस्थानगतत्वेनेति[3] तात्पर्यम्। न तु प्रतिपक्षो भीरुरिति निश्चयः क्वापि। प्रतिपक्षस्य धीरोद्धतस्यापि रावणादेः प्रसिद्धत्वात्। **रसान्तरमिति**। अविरुद्धमिति शेषः॥

## मधुमती

भयानकविरोधात्, आलम्बनान्तरे न विरोधः। **प्रतिपक्षेति**। अर्थात् नायकगतत्वेन वीरो निवेशयितव्यः इति लभ्यते, औचित्यप्राप्तत्वात्। **शान्तेति**। नैरन्तर्यं—अव्यवधानेनोपनिबन्धः। उभयोः एककालासत्त्वात्। **शान्तस्येति**। सकामशान्तस्येत्यर्थः। निष्कामशान्तस्य रसान्तरायोग्यत्वात्।

---

1 'दाघान्'–क. 2 'रजोरञ्जित'–ख. 3 'अन्यस्थानेऽविरुद्धमिति'–ग.

संशोणितैः क्रव्यभुजां स्फुरद्भिः
पक्षैः खगानां उपवीज्यमानान् ।
संवीजिताः चन्दनवारिसेकैः
सुगन्धिभिः कल्पलतादुकूलैः ॥ ३३३ ॥
विमानपर्यङ्कतले निषण्णाः
कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभिः
वीराः स्वदेहान् पतितानपश्यन् ॥ ३३४ ॥
अत्र बीभत्सशृङ्गारयोः अन्तः वीररसः निवेशितः ॥

---

## सङ्केतः

निवेशित इति । एतेन विरोधो निवृत्तः । 'वीराः स्वदेहान्' इत्यादिना, तदीयोत्साहाद्य[1]वगत्या कर्तृकर्मणोः समस्तवाक्यार्थानु[2]यायितया प्रतीतिरिति शृङ्गारबीभत्सयोर्मध्ये पाठाभावेऽपि सुतरां वीरस्य व्यवधायकता प्रतीयते इति भावः । स्वदेहान् इत्यनेन एकत्वाभिमानात् आश्रयैक्यम् । अन्यथा विभिन्नविषयत्वे को विरोध इत्यर्थः । नन्वत्र—रतिजुगुप्से एव वीरं प्रति सञ्चारीभूते लक्ष्येते, न तु शृङ्गारबीभत्सौ रसौ । सत्यम् । तथापि प्रकृतोदाहरणता तावद्युज्यत एव । यतः तदङ्गयोः रतिजुगुप्सयोरपि वीररस-व्यवहितयोः न विरोधः ॥

## मधुमती

यावदिति । इदमुपलक्षणम्—एकत्रापि पद्ये द्रष्टव्यम् । यथा रघुवंशे—
"कश्चिद् द्विषत्खड्गहृतोत्तमाङ्गः सद्योविमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥"
इत्यत्र ॥

---

1 'त्सवाद्यवगत्या'–ग. 2 'वाक्यानु'–ग.

स्मर्यमाणो विरुद्धोऽपि
साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ
तौ न दुष्टौ परस्परम् ॥६५॥

यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः[1]॥ ३३५॥

एतत् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूः अभिदधौ । अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं पोषयति ॥

---

सङ्केतः

**अयमिति** । अत्र स्मर्यमाणः शृङ्गारः करुणस्य प्रकृतस्य विरुद्धोऽपि पोषकः । यतः—स्वभावसुभगं वस्तु शोच्यतां गतं प्रागवस्थाभाविभिः विलासैः स्मर्यमाणैः गाढं शोकं जनयति इति ॥

मधुमती

प्रकारान्तरेण रसविरोधं परिहरति—स्मर्यमाणः इति । तथा च स्मर्यमाणत्वं साम्यविवक्षा प्रधानोपसर्जनत्वं चेति तयोः विरोधपरिहारप्रकारः ।

---

1 (महाभारते स्त्री. २४-१९) ।

दन्तक्षतानि[1] करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैः मुनिभिरप्यवलोकितानि[2] ॥२३६॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि[3] तथा जिनस्य, यथा वा परः शृङ्गारी तदवलोकनात् सस्पृहः तद्वत् एतद्दृशो[4] मुनयः इति साम्यविवक्षा ॥

## सङ्केतः

दन्तेति । स्वडिम्भभक्षणप्रवृत्तसिंहिकायाः स्वाङ्गं ददतः बौद्धस्य[5] केनापि चाटुकं क्रियते । पुलकोद्भेदः परार्थसम्पादनसुखाभ्याम् । रक्तम् असृक् अनुरक्तं च । मुनयश्च उद्बोधितस्मरावेशाश्च इति विरोधः । जातस्पृहैः इति च—'वयमप्येवं कदाचित् कृपालवो भविष्यामः तदा सत्यतो मुनय एव'—इति मनोराज्ययुक्तैः ॥ पर इति । श्लोकोक्तकामि-व्यतिरिक्त इत्यर्थः । तदवलोकनात् कामिदन्तक्षतेक्षणात्[6] । एतद्दृशा । एतेषां जिनदन्तक्षतादीनां दर्शनेन ।

## मधुमती

तत्र आद्यमुदाहरति—अयमिति । द्वितीयमुदाहरति—दन्तक्षतानीति । साम्यविवक्षेति । तथा च शान्तशृङ्गारयोः न विरोधः इति भावः । तृतीयं

---

1 'दन्तैः क्षतानि'–क. 2 करजैः नखैः, प्रोद्भिन्नाः प्रकटाः । 3 'चमत्कारकारणानि'–ख. 4 'एतादृशः'–क. 5 'बुद्धस्य'–ग. 6 'यथोक्तं 'कामिदं तक्षतेक्षणात्' इति'–ग.

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बु[1]धौताननाः ।
भीताः[2] भर्तृकरावलम्बितकराः त्वच्छत्रु[3]नार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव[4] ॥३३७॥

---

## सङ्केतः

साम्यविवक्षेति । अयं भावः—यथा कोऽपि मनोरथशतासप्रेयसी" रतकाले जातपुलकः, तथा त्वं परार्थकरणाय[5] स्वाङ्गदाने इति विरुद्धेन शृङ्गारेण शान्तः पोष्यत एव । यत्र तु नैवं तत्र दोष एव यथा—'राममन्मथशरेण' इति । अत्र प्रकृतस्य करुणस्य विरुद्धः शृङ्गारो न पोषकः इति साम्येऽपि दुष्टत्वम् । द्वौ विरुद्धौ अङ्गित्वे दुष्टौ, न तु अङ्गतायाम् । सा च अङ्गता सहजा आरोपजा वा । तत्र येषां सहजा तेषां तावदुक्तौ अविरोध एव । यथा—विप्रलम्भे तदङ्गानां व्याध्यादीनाम्[6] । ते हि निरपेक्षभावतया सापेक्षभावविरोधिन्यपि करुणे सर्वथा अङ्गत्वेन दृष्टाः । यथा—भ्रमिमरतिं' इत्यादि । आरोपिताङ्गता यथा—

'लीलापद्मकशाघातैः कान्ताभिः कोऽपि हन्यते ।'

इत्यत्र हन्यत इति । रौद्रानुभावानां रूपकबलात् आरोपितानां चौरवत् इत्यनुक्तेः तदनिर्वाहादेवाङ्गत्वम् । इयं च अन्याङ्गता । यदा आधिकारिकत्वात्

## मधुमती

प्रधानोपसर्जनभावमुदाहरति—क्रामन्त्यः इति । अत्रेति । तथा च प्रधानीभूत राजविषयकरतिभावे द्वयोः आर्थः समाजः इति भावः ॥

---

1 'गलद्बाष्पाम्बु'–ख. 2 'भीत्या'–क. 3 'त्वद्वैरि'–क. 4 'राजानं प्रति कवेरियमुक्तिः । 5 'कारणाय'–ग. 6 'व्याध्यादीनां' इति नास्ति–घ.

अत्र चाटुके राजविषया रतिः प्रतीयते । तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोः न विरोधः ॥

यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रह[1]ग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः[2] ॥३३८॥

अत्र 'एहीति क्रीडन्ति, गच्छेति क्रीडन्ति' इति क्रीडनापेक्षयोः आगमनगमनयोः[3] न विरोधः ।

---

### सङ्केतः

प्रधाने एकस्मिन् काव्यार्थे रसौ भावौ वा मिथो विरुद्धौ अङ्गतां यातः तत्रापि न दोषः । यथा 'क्रामन्त्यः' इति ॥

न विरोध इति । रतेः अङ्गिन्याः करुणशृङ्गारौ अङ्गमिति न विरोध इति भावः[4] ॥

ननु पराङ्गत्वेऽपि कथं विरोधिनोरविरोधः इति चेत्—उच्यते । विधौ विरुद्धसमावेशः दुष्टः, नानुवादे इत्याह—यथा 'एही'त्यादि । न ह्यत्र विधिः, 'तदेव तदेव कुरु, मा कार्षीः' इतिवत् एकदा प्राधान्यरूपः, अपि तु अन्याङ्गतारूपः अनुवादः । अन्याङ्गता च क्रीडनापेक्षया । यदैव

### मधुमती

एहीति । अप्रधानान्वये विरुद्धयोरप्यविरोधः इति सामान्यतोऽन्यदृष्टान्तत्वम्, अतो न प्रकृतासङ्गतिः इति ध्येयम् ॥

---

1 'माशाशत'—क. 2 (महाभारते शां.)। 3 'क्रीडापेक्षयोः गमनागमनयोः'—क. 4 इदं वाक्यं नास्ति—ध.

क्षिप्तो हस्तावलग्नः प्रसभमभिहतो[1]ऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तः चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतः त्रिपुरयुवतिभिः साश्रु[2]नेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः[3] ॥
॥ ३३९ ॥

इत्यत्र त्रिपुरारिप्रभावातिशयस्य करुणः अङ्गम् ।
तस्य तु[4] शृङ्गारः । तथापि न करुणे विश्रान्तिरिति तस्य

---

## सङ्केतः

हि 'एही'त्यादि ब्रूयात् तदा विरोधः स्यात् ॥ इदं तत्त्वम्—सामग्री-विशेषगतत्वेन भावानां वा विरोधाविरोधौ, न स्वभावेन । भिन्नदेशयोः शीतोष्णयोरपि विरोधाभावात् । न च रसेषु विध्यनुवादौ न स्यातामिति वाच्यम् । तेषां वाक्यार्थत्वेनाभ्युपगमात् ॥ वाक्यार्थस्य च वाच्यस्य यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः । अनूद्यमानविभावाद्याक्षिप्त-त्वात् रसानां अनूद्यमानतेति यावत् ॥

**प्रभावातिशयस्येति** । रतिरूपभावस्य प्रेयोऽलङ्कारविषयस्य वाक्यार्थी-भूतस्य अङ्गिनः इत्यर्थः । **विश्रान्तिरिति तस्येति** । तस्य करुणस्य । तत्पोषकशृङ्गारस्यापि रतावेव विश्रान्तिरित्यर्थः ॥

## मधुमती

**इत्यत्रेति** । **त्रिपुररिपुप्रभावातिशयस्य करुणः, तस्य तु शृङ्गारः अङ्गम्** यद्यपि भवितुमर्हति, कामीवेति कामिनः उपमानत्वेनोपादानात् । **तथापि शृङ्गारस्य न करुणे विश्रान्तिः**, 'गुणानां च परार्थत्वात्' इति

---

1 'मभिहितो'–ख. 2 'सास्र'–क. 3 '(अमरुशतके २)। 4 'तु' इति नास्ति–ख.

अङ्गतैव। अथवा—प्राक् यथा कामुकः आचरति स्म, तथा शराग्निः इति शृङ्गारपोषितेन करुणेन मुख्य एवार्थः उपोद्बल्यते[1]। उक्तं हि—

## सङ्केतः

अथवेति। पूर्वस्मिन् पक्षे करुणं पुष्यन्नपि शृङ्गारः प्रभावातिशये अङ्गभावगमनात् अविरोधी प्रोक्तः। अधुना तु स शृङ्गारः करुणस्यैव अङ्गतां गतः न विरोधीति। तथाहि—करग्रहणासहनादिः नार्याः[2] शृङ्गारवृत्तान्तः स्मर्यमाणः सम्प्रति विध्वस्ततया[3] शोकविभावतां प्रकृष्टं यातीति वाक्यार्थीभूतः करुणः विरुद्धेनापि शृङ्गारेण पोष्यते। परतस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एव प्रभावातिशये उद्गतबलः क्रियते इत्यर्थः॥

## मधुमती

न्यायात्। तथा च करुणशृङ्गारयोः मिथो नान्वयः, किन्तु त्रिपुरहर-प्रभावातिशये व्यङ्ग्येन वीररसेनैव करुणशृङ्गारयोः द्वयोरन्वयः इत्यर्थः। पक्षान्तरमाह—**अथवेति**। **मुख्य एवार्थः** त्रिपुररिपुप्रभावातिशयरूपः **उपोद्बल्यते** ध्वन्यते इत्यर्थः। अस्मिन् मते शृङ्गारः करुणे, करुणश्च

1 उद्गतबलः क्रियते प्रकर्षमानीयते इति यावत्। 2 'सहनादिनेर्ष्या'–ग. 3 'विरुद्धतया'–घ.

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते [1] ॥"

इति ॥

प्राक् प्रतिपादिरूपस्य रसस्य रसान्तरेण न विरोधः, नापि अङ्गाङ्गिभावो भवतीति

---

## सङ्केतः

**गुण इति** । शृङ्गारेण कृतात्मसंस्कारः गुणः करुणो रसः प्रधानं प्रभावातिशयम् । तथा कृतसंस्कारः । प्रधानस्य भूयसे उपकाराय स्यादिति भावः । रसस्य करुणस्य । रसान्तरेण शृङ्गारेण ।

## मधुमती

त्रिपुररिपुप्रभावातिशये अङ्गम् । अत्र हेतुः—**गुणः इति** । यथा व्रीहयः अवघाताय, तथा शृङ्गारोपस्कृतः करुणः त्रिपुररिपुप्रभावातिशये । केचित्तु — सकलमेव ग्रन्थं एकपक्षतयैव व्याचक्षते । तथा च पूर्वोक्ते हेतुमाह— **अथवेति** । **अथवा** इति यस्मादित्यर्थे, यथा—

'अथवा श्रेयसि केन तृप्यते ।'

इत्यत्र । यद्यपि—

'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
वीराद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥'

इत्यादिस्वारस्यात् करुणशृङ्गारयोः न विरोधः । तथापि समप्राधान्येन तयोरपि विरोध एव । अङ्गाङ्गिभावेन बीभत्सेऽप्यविरोधात् इदमुक्तम् ॥

---

1 (ध्व. लोचने ३-२२) ।

**रसशब्देनात्र तत्स्थायिभावः उपलक्ष्यते ॥**

इति श्रीमम्मटभट्टविरचिते काव्यप्रकाशे दोषदर्शनो नाम
सप्तमः उल्लासः

---

## सङ्केतः

**रसशब्देनेति।** 'अङ्गिन्यङ्गत्वमाप्तौ' इत्यत्र अङ्गिनि रसे इत्युक्तम्। तत्र रसशब्देन स्थायी रत्यादिः वाच्यः, तथैव च अङ्गितया उदाहृतः। तथा अङ्गत्वमाप्तौ तौ रसौ न दुष्टौ इत्युक्तम्। ततः अप्राधान्यादेव शृङ्गारकरुणयोः स्थायिनौ रतिशोकाख्यौ ज्ञेयौ ॥

यत्रापि समप्राधान्येन अनेकस्य रसस्य भावस्य च[1] न्यासो यथा—

'एकत्तो रूअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
णेहेण रणरसेण अ भडस्स दोलाइयं हिअअं ॥
[एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥]

इत्यादौ रत्युत्साहयोः, 'मात्सर्यमुत्सार्य' इत्यादौ रतिशमयोश्च—

## मधुमती

ननु रसयोर्विरोधः इत्युक्तम्; रसप्रतीतौ विरोधाभावात्, तदप्रतीतौ विरोधप्रतियोग्यसिद्धौ विरोधासिद्धेः इत्यत आह—**रसशब्देनेति।** रस्यमानत्वगुणयोगात् इत्यर्थः ॥

इति श्रीरत्नपाणिसूनुरविभट्टाचार्यविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां सप्तम उल्लासः

---

1 'अनेकस्य भावस्य'–ग.

## सङ्केतः

—अत्राप्युच्यते-—न हि द्वयोः समप्रधानयोः मिथोऽनुपकारकयोः एकवाक्यत्वं युज्यते। तस्मात् एकत्र भटस्येत्युक्तिबलात् वीरे एव विश्रान्तिः। न हि रणतूर्यनादे भटाः समरालसाः स्युः। अन्यत्र तु चिरन्तनरतिवासनया हेयत्वेन उपादानात् शमैकपरत्वम्, 'आर्याः समर्यादं' इत्युक्तिबलात्। एवमन्यत्रापि ज्ञेयम् ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
सप्तमोल्लासः

अथ काव्यप्रकाशमूलकारिकासु गुणनिर्णयो नाम

## अष्टम उल्लासः

—o—

गुणस्वरूपम्—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युः अचलस्थितयो गुणाः ॥ १ ॥

अलङ्कारस्वरूपम्—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः [1] ॥ २ ॥

गुणविभागः—

माधुर्यौजःप्रसादाख्याः त्रयस्ते न पुनर्दश ।

माधुर्यलक्षणम्—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ३ ॥

माधुर्यव्याप्तिः—

करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम् ।

---

1 येरसस्य—मादयः ॥

सुपर्वपर्वतो भाति सर्वोर्वीधरधूर्वहः ।
इत्यादावुक्तिवैचित्र्यमात्रहेतुरलङ्कृतिः ॥
हारा वज्रप्रहारा मे कारा धारागृहाण्यपि ।
इत्यत्र शब्दद्वारेणालङ्कृतेरुपकारिता ॥
कृतान्त इव कन्दर्पो हन्त! मां बाधते सखि!
इत्यत्रालङ्कृतिर्वाच्यद्वारा स्यादुपकारिका ॥
प्रतिक्षणोद्यद्वक्षोजा मृगाक्षी वीक्षिता मया ।
इत्यत्र शब्दालङ्कारो रसस्यानुपकारकः ॥
दृष्टे मयाऽधरे किञ्चित् मृतेव दयिताऽजनि ।
इत्यत्रार्थालङ्कृतिः स्यात् रसस्यानुपकारिका ॥

ओजोलक्षणम्—

दीप्त्यात्मविस्तृतेर्हेतुः ओजो वीररसस्थिति ॥ ४ ॥

ओजोगुणव्याप्तिः—

बीभत्सरौद्ररसयोः तस्याधिक्यं क्रमेण च ।

प्रसादलक्षणम्—

शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥ ५ ॥
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

शब्दार्थयोर्द्वयोरपि सगुणत्वोपपत्तिः—

गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ६ ॥

गुणानां दशत्वनिषेधसमर्थनम्—

केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचित् न ततो दश [1] ॥ ७ ॥
तेन नार्थगुणाः वाच्याः ।

---

1 माधुर्यौजः—ततो दश ॥
तत्र श्लेषसमाधी द्वौ उदारत्वं प्रसन्नता ।
ओजस्यन्तर्भवन्त्येते हेतुत्वात् चित्रविस्तृतेः ॥
पृथक्पदत्वं माधुर्यं माधुर्येऽन्तर्गतं तु नः ॥
प्रसादेऽन्तर्भवन्त्येवं अर्थव्यक्त्यभिधो गुणः ॥
दोषः क्वचित् स्यात् समता मार्गाभेदात्मिका तथा ।
सौकुमार्यं तु कष्टत्वाभावतो नातिरिच्यते ।
ग्राम्यत्वदोषाभावाच्च कान्तिर्नैव विभिद्यते ॥
पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
तथा व्याससमासौ चेत्योजो यत् प्रौढिसंज्ञितम् ।
वैचित्र्यमात्रं तद् ज्ञेय गुणत्वं तस्य नेष्यते ।
तदभावेऽपि काव्यत्वव्यपदेशप्रवृत्तितः ॥

शब्दगुणव्यञ्जकाः—

प्रोक्ताः शब्दगुणाश्च ये [1] ।
वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ८ ॥

माधुर्यव्यञ्जकाः—

मूर्ध्नि वर्गान्त्यगाः स्पर्शाः अटवर्गा रणौ लघू ।
अवृत्तिः मध्यवृत्तिर्वा माधुर्ये घटना तथा [2] ॥ ९ ॥

---

तत्रापुष्टार्थताभावः साभिप्रायत्वमिष्यते ।
अर्थवैमल्यरूपो यः प्रसादाख्यो गुणो मतः ।
तस्याधिकपदत्वस्याभावेऽन्तर्भाव इष्यते ।
उक्तिवैचित्र्यरूपं यत् माधुर्यं परिकीर्तितम् ।
अनवीकारताभावे तस्यान्तर्भाव इष्यते ।
सौकुमार्यं अपारुष्यरूपं यत् समुदाहृतम् ।
अमङ्गलात्मिकाश्लीलाभावरूपं तदिष्यते ।
अग्राम्यत्वं यदौदार्यं ग्राम्यत्वाभाव एव तत् ॥
वस्तुस्वभावस्फुटतारूपार्थव्यक्तिरत्र या ।
सा स्वभावोक्त्यलङ्कारात् वक्ष्यमाणात् न भिद्यते ॥
यो दीप्तरसतारूपः कान्तिर्नाम गुणः स च ।
रसध्वनि-गुणीभूतव्यङ्ग्याभ्यां नातिरिच्यते ।
घटना क्रमकौटिल्यानुल्बणत्वोपपत्तिभाक् ।
श्लेष इत्युदिता चित्रमात्रं सा न पुनर्गुणः ।
समताऽवैषम्यरूपा दोषाभावो न सा गुणः ।
समाधिरर्थसृष्ट्यात्मा काव्यरूपं गुणो न सः ॥

1 (अस्यस्थाने—)
तस्मादेते न वक्तव्याः पृथगर्थगुणा अपि ।

2 वर्णाः समासः—तथा ॥
अनङ्गशृङ्गारगृहान् अपाङ्गान् मयि साऽकरोत् ।

ओजोव्यञ्जकाः—

योग आद्यतृतीयाभ्यां अन्त्ययो रेण तुल्ययोः ।
टादिः शषौ वृत्तिदैर्घ्यं गुम्भ उद्धत ओजसि [1] ॥ १० ॥

प्रसादव्यञ्जकाः—

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां स प्रसादो गुणो मतः [2] ॥ ११ ॥

उक्तार्थानां क्वचिदपवादकथनम्—

वक्तृवाच्यप्रबन्धानां औचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानां अन्यथात्वमपीष्यते [3] ॥ १२ ॥

इति काव्यप्रकाशमूलकारिकासु
अष्टम उल्लासः

---

1 योगः—ओजसि ॥
मिथ्यादत्तार्कबुद्धिस्तद्दोरूष्मा ढौकते नभः ।

2 श्रुति—मतः ॥
रसालसालमूले सा ललनालोकिता मया ॥
तेषां गुणव्यञ्जकता नियमान्नेष्यतेऽपि तु ।

3 वक्तृवाच्य—ष्यते ॥
प्रेतः कपालचषके प्रियया रुधिरासवम् ।
प्रिये पिबति पश्येति वक्त्रौचित्यादमी मताः ॥
हर्यक्षः करजक्षिप्तमत्तेभक्षतजोक्षितः ।
शशं गणयते किं वेत्यत्र वाच्यानुगा इमे ॥
आख्यायिकायां शृङ्गारेऽप्युद्धता रचनादयः ।
कथायां नाटकादौ च न रौद्रे प्यधिकोत्थिताः ॥

इति श्रीराजचूडामणिदीक्षितकृतकाव्यदर्पणकारिकासु
अष्टमोल्लासः

अथ काव्यप्रकाशे गुणनिर्णयो नाम

अष्टमः उल्लासः

—o—

एवं दोषानुक्त्वा गुणालङ्कारविवेक[1]माह—

**ये रसस्याङ्गिनो धर्माः**
**शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवः ते स्युः**
**अचलस्थितयो गुणाः ॥ ६६ ॥**

---

सङ्केतः

वाणी काव्यप्रकाशस्य गुणतत्त्वविवेकिनी ।
सङ्केतेनैव घटते यदि कस्यापि धीमतः [2] ॥

**ये रसस्येति** । रसः अङ्गी, वाच्यवाचकौ अङ्गम् । **अचलेति** । एतेन काव्ये गुणानां अवश्यंभावः ज्ञायते । तथाहि—अनलङ्काराऽपि वाक्

मधुमती

सङ्गतिं प्रदर्शयन्नाह—**एवमिति** । यद्यप्येवमपि गुणनिरूपणं उचितम् । न तु गुणालङ्कारयोः भेदसाधनम् । तथापि भेदं विना गुणालङ्काराभिधानं असङ्गतम्, अन्यतराभिधानेनैव चरितार्थत्वात् इति तद्विवेचनं आवश्यकमिति भावः ॥

---

1 'विभेद'–क. 2 अयं श्लोकः उल्लासान्ते दृश्यते–ग.

**आत्मन एव हि यथा शौर्यादयः, नाकारस्य ;**
**तथा रसस्यैव माधुर्यादयो गुणाः न वर्णानाम् ॥**

---

## सङ्केतः

सगुणा रोचते, यथा—'यः कौमारे'त्यादौ। निर्गुणा तु सालङ्काराऽपि न रोचते, यथा—

'स्तनकर्परपृष्ठस्थाः वर्जिनीच्छदमण्डकाः[1]।
वियोगाग्न्यूष्मणा पक्वाः कन्दुकिन्येव ते स्त्रिया ॥' इति ॥

**न वर्णानामिति।** उत्कर्षहेतव इति शेषः ॥

## मधुमती

**ये रसस्येति।** रसस्याङ्गिनः इति अभेदेनान्वयः। एवं च रसः आत्मस्थानीयः, शब्दार्थौ शरीरमिति बोद्धव्यम्। धर्माः साक्षात्संबद्धाः इत्यर्थ.। तत्र समुचितं दृष्टान्तमाह—**शौर्यादयः इति।** शौर्यं ज्ञानविशेषः। स च यथा चेतनस्य आत्मन एव, न तु अचेतनस्य शरीरस्येत्यर्थः। स्थायित्वादेरपि रसधर्मत्वमाशङ्क्याह—**उत्कर्षेति।** भेदकान्तरमाह—**अचलेति।** नियतस्थितयः इत्यर्थः। यथा माधुर्यं शृङ्गारादिनियतं, ओजो वा वीरादिनियतं, प्रसादो वा सर्वात्मनि नियतः, न हि तथा कुत्रापि अलङ्कारादिः नियतः। सर्वालङ्काराणां सर्वत्र इच्छया प्रयोगात्। तथा च अव्यभिचारिणः इत्यप्यर्थः। अलङ्काराणां रसेऽपि सत्त्वात्। यथोदाहरिष्यते। एवं च उत्कर्षहेतुत्वकरसाक्षाद्रससंबन्धित्वनियतत्वाभ्यां विशेषणात् लक्षणलाभेन नालङ्कारे अतिव्याप्तिः। समुदिते तु व्यर्थविशेषणत्वापत्तेः इति द्रष्टव्यम्।

---

1 'वार्धिनिच्छदमण्डका'–ध.

क्वचित्तु—शौर्यादिसमुचितस्य आकारमहत्त्वादेः दर्शनात् 'आकार एवास्य शूरः' इत्यादेर्व्यवहारात् अन्यत्र अशूरेऽपि विततात्कृतित्वमात्रेण 'शूरः' इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति अविश्रान्तप्रतीतयः यथा व्यवहरन्ति, तद्वत् मधुरादि[1]-व्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेः, अमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण

---

## सङ्केतः

ननु रसस्यैव चेत्[2] माधुर्यादि, तत्कथं 'मधुरौजस्विप्रसन्नाः वर्णाः' इति व्यवहारः[3] इत्यत आह—**क्वचित्त्विति**। **समुचितस्य** संयुक्तस्य। **आकार एवेति**[4]। यथा शौर्यं उपचारात् तद्व्यञ्जके काये व्यवह्रियते, तथा वर्णानां मधुरादिरसव्यञ्जकानां माधुर्यादीति भावः। **मधुरादीति**। शृङ्गारादिः मधुरो रसः, वीरादिस्तु अमधुरो ज्ञेयः। **सौकुमार्यादीति** माधुर्यादिविरहेऽपि गुम्फस्य मृदुत्वादिमात्रेण माधुर्यादि व्यवहरन्तीत्यर्थः।

## मधुमती

इदानीं दृष्टान्तमुखेन शब्दार्थयोः मधुरादिव्यवहारं समर्थयति—**क्वचित्त्विति**। **अविश्रान्तप्रतीतयः इति**। विशेषादर्शिनः इत्यर्थः। **तद्वदिति**। मधुररसव्यञ्जकत्वोपाधिक्येव वर्णानां मधुरत्वप्रतीतिः। परन्तु—तद्व्यञ्जकतावच्छेदकं सौकुमार्यम्। तेन क्वापि सौकुमार्यमात्रेण अमधुररस-व्यञ्जकानामपि मधुरव्यवहारः, मधुररसव्यञ्जकानामपि असौकुमार्यमात्रेण

---

1 'मधुरादिरस'-ख. 2 'यत्'-ग. 3 'इति प्रतीतिः'-ग.
4 'संयुक्तस्याकारे एव-ग.

माधुर्यादि, मधुरादिरसोपकरणानां तेषां असौकुमार्यादेः अमाधुर्यादि, रसपर्यन्तविश्रान्तिप्रतीतिवन्ध्याः व्यवहरन्ति। अत एव माधुर्यादयः रसधर्माः समुचितैः वर्णैः व्यज्यन्ते, न तु वर्णमात्राश्रयाः। यथा एतेषां व्यञ्जकत्वं, तथा उदाहरिष्यते ॥

उपकुर्वन्ति तं सन्तं
येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारा:
तेऽनुप्रासोपमादयः ॥ ६७॥

ये वाच्यवाचकलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनं उपकुर्वन्ति, ते कण्ठाद्यङ्गानां उत्कर्षाधान-

---

सङ्केतः

**तेषां** वर्णानाम्। **—वन्ध्याः** वामनाद्याः। **समुचितैः** योग्यत्वेनोक्तैः। **न त्विति**। रसाश्रया एव गुणाः इत्यर्थः। **एषां** वर्णानाम् ॥

मधुमती

अमधुरव्यवहारः इत्यर्थः। तथा च क्वापि तद्वति मधुरव्यवहारः इत्यर्थः। **रसेति**। माधुर्यादि न शब्दवृत्ति, किन्तु रसवृत्ति इत्यजानानाः इत्यर्थः ॥

**उपकुर्वन्तीति**। **जातुचित्**—कदाचित्। तथा च अङ्गोपकारकाङ्ग्युपकारजनकत्वम्, कादचित्काङ्ग्युपकारजनकत्वं वा तत्त्वमित्यर्थः ॥

द्वारेण शरीरिणोऽप्युपकारकाः हारादय इव अलङ्काराः।
यत्र तु नास्ति रसः, तत्र उक्तिवैचित्र्यमात्रपर्यवसायिनः[1]।
क्वचित्तु सन्तमपि नोपकुर्वन्ति ॥

---

## सङ्केतः

**शरीरिणोऽपि** आत्मनोऽपि। **उक्तीति**। शब्दार्थवैचित्र्य एव विश्रान्ताः इत्यर्थः। **क्वचित्तु** इति जातुचित् इत्यस्य व्याख्या ॥

## मधुमती

अत एवाह—**हारादिवदिति**। तथाहि—यथा हारादयः अङ्गमतिशाययन्ति, एवं इमे अपि रसमतिशाययन्तीत्यर्थः। एवं च साक्षादङ्ग्युपकारकत्वनियमः गुणे, परम्परया तदुपकारकत्वनियमः अलङ्कारे, दोषाभावे त्वनियमः। तस्य उभयथाऽप्युपकारकत्वात्। अत एव अस्य ताभ्यां भेदः इति स्मर्तव्यम् ॥ **यत्र त्विति**। स्फुट इति शेषः। रसस्य सार्वत्रिकत्वादिति द्रष्टव्यम्। एवं च सति स्फुटे रसत्वमेव, अन्यथा शब्दार्थावलङ्कुर्वते अनुप्रासादयः। अत एवामी व्यभिचारिणः। अत एव यत्र शब्दार्थोपकारकत्वं तत्र चित्रत्वम्। **क्वचिदिति**। यथा च असत्यपि रसे अलङ्काराणामुपकारकत्वं, सत्यपि चानुपकारकत्वं इति द्वयीगतिः, तत्र प्रथमे चित्रत्वम्, द्वितीये दोषः। तत्र चाद्ये उपकारकत्वं वाचकोपकारमुखेन, वाच्योपकारमुखेन वेति भेदः ॥

---

1 'उक्तिवैचित्र्यपर्यवसितः'—क.

यथाक्रमं उदाहरणानि—[1]

'अपसारय घनसारं,
कुरु हारं दूर एव, किं कमलैः?
अलमलमालि! मृणालैः'
इति वदति दिवानिशं बाला[2] ॥ ३४१ ॥

इत्यादौ वाचकमुखेन,

मनोरोगः[3] तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं[4] ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित[5] इतो
न मां त्रातुं तातः[6] प्रभवति न चाम्बा न भवती[7] ॥३४२॥

इत्यादौ वाच्यमुखेन च अलङ्कारौ रसं उपकुरुतः ।

---

सङ्केतः

अपसारयेति । अत्र उद्दीपनविभावाः वर्धिष्णुतया विद्वेष्यत्वेनोक्ताः । घनसारः कर्पूरः ॥

मनोरोगः कामजः । भवती सखीत्यर्थः । रसमिति । एकत्र कोमलानुप्रासः अन्यत्र तु मालोपमेति शब्दार्थालङ्कारौ विप्रलम्भरसं उत्कर्षयतः । रसाभावे तु उक्तिवैचित्र्यविश्रान्तौ दृष्टान्तः षष्ठोल्लासोक्तत्वात् पुनर्नोक्तः ॥

---

1 'यथा'–क. 2 (कुट्टिनीयते–१०२). 3 'मनोरागः'–क. 4 'निर्धूमः'–क. 5 'बलीयानिति'–क. 6 'तातस्त्रातुं'–ख. 7 (मालतीमाधवे २–१) 'भवति'–क.

चित्ते विहट्टदि[1] ण टुट्टदि[2] सा गुणेसु
सज्जासु लोट्टदि विसट्टदि[3] दिम्मुहेसु ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणे ण टुट्टदि चिरं तरुणी तरट्टी[4] ॥ ३४३ ॥

[चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥ ]

इत्यादौ वाचकमेव,

## सङ्केतः

चित्त इति । विहट्टदि निखाता भवति । ण टुट्टदि न न्यूनतामेति । विसट्टदि विकसति । तरट्टी प्रौढा ॥

## मधुमती

चित्त इति । त्रुट्यति कृशा भवति । वाचकमेवेति । यत्र अनुप्रासः प्रतिकूलवर्णाश्रितः तत्र शब्दवरो न रसमुपकुरुते । अत एव तत्र

1 '(वि) पहुट्टदि'-निखन्यते-क. 2 'खुट्टदि'-स्खलति-न पर्याप्ति प्राप्नोति-क. 3 'विहुट्टदि'-विकसति-ख. 4 (कर्पूरमञ्जर्यां २-४).

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीक्ष्य दयितासन्नं[1] पुरः सारसम् ।
चक्राह्वेन[2] वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलं अर्गलेव निहिता जीवस्य निर्गच्छतः[3] ॥३४४॥

इत्यादौ वाच्यमेव च, न तु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमा इति प्रकृताननुगुणोपमा ॥

---

## सङ्केतः

**मित्र इति** । स्थानद्वयेऽप्यत्र क्रमात् परुषानुप्रासोपमाख्यावलङ्कारौ शब्दमर्थं चोपकुरुतः, न प्रकृतं सन्तमपि विप्रलम्भरसम् । **न रोद्धुमिति** । अतिसूक्ष्मत्वाज्जीवस्येति भावः । अत्र विप्रलम्भे जीवनिर्गमस्यापि[4] वर्णनीयत्वात् प्रकृतरसस्य अननुगुणा उपमेति ज्ञेयम्[4] ॥

## मधुमती

दोष एव । **इत्यादौ वाच्यमेवेति** । अत्र उपमालङ्कारः इति, उपकुरुते इति च शेषः । **अत्रेति** । बिसलतायाः उद्दीपकत्वेन विरहिप्राणधारणाक्षमत्वात् । न च उपमादयोऽपि रसधर्मा एव तत्तत्पदैः परं व्यज्यन्ते इति वाच्यम् । सादृश्यादेः अर्थनिष्ठत्वेन प्रतीतेः, तत्र रसनिष्ठत्वकल्पनेऽपि मानाभावात् ॥

---

1 'दयितासक्तं'–क, 2 'चक्राङ्केन'–ख. 3 (सूक्तिमुक्तावली ६८-१४). 4 'अत्र विप्रलम्भे' इत्यादि नास्ति–ग.

**एष एव च गुणालङ्कारप्रविभागः ।**

**एवं च—'समवायवृत्त्या शौर्यादयः, संयोगवृत्त्या तु हारादयः इति अस्तु गुणालङ्काराणां भेदः। ओजः-प्रभृतीनां अनुप्रासोपमादीनां च उभयेषामपि समवाय-वृत्त्या स्थितिरिति, गड्डरिका[1]प्रवाहेण एषां भेदः—' इत्यभिधानं [2] असत् ।**

---

## सङ्केतः

एषः योऽस्माकं मतः। **भेद इति** । एतेन शौर्यादिकल्पाः गुणाः, हारादिस्थानीयाः अलङ्काराः इति सिद्धम् । **अभिधानमिति** ॥ तथा च—

'शब्दार्थालङ्काराणां गुणवत् समवायेन स्थितिः ।
गड्डरिकाप्रवाहेण तु गुणालङ्कारभेदोक्तिः ॥'

इति भामहवृत्तौ भट्टोद्भटेन भणनं असत् । तथाहि—शृङ्गारादिरसे गुम्फे

## मधुमती

उपसंहरति—**एष एवेति** । एवं च—सति विप्रलम्भे विरहि-प्राणधारणाक्षमत्वेन तदुपादानस्योचितत्वमेव। अत्र तु कविप्रौढोक्तिसिद्धये तद्धारकत्वप्रतिपादनात् रसानुपकारकत्वेऽपि वाक्यार्थमेव पुष्णातीति भावः। **समवायवृत्त्या**—साक्षात्सम्बन्धेन । **संयोगवृत्त्या** परम्परासम्बन्धेन । लोकानुरोधित्वात् संज्ञायाः इति भावः। **गड्डरिकेति**। गड्डरिका—मेषी।

---

1 'स्थितिः गड्डलिका'—क. 2 भामहविवरणे एवमुक्तम् ।

**यदप्युक्तम्—'काव्यशोभायाः कर्तारो धर्माः गुणाः, तदतिशयहेतवस्तु अलङ्काराः' इति,[1] तदपि न युक्तम्। यतः—किं समस्तैः गुणैः काव्यव्यवहारः? उत कतिपयैः?। यदि समस्तैः, तत् कथं असमस्तगुणा**

---

## सङ्केतः

प्राच्यस्य अलङ्कारस्य उत्थापने अन्यस्य च स्थापने[2] गुम्फस्य न दोषः, नापि पोषः, न किञ्चिद्वा स्थाप्यते तथापि न दोषः। तत्र अर्थालङ्कारस्योत्थापने, अन्यस्य च तादृशः स्थापने स्वोक्तं यथा—

'सतामपि महाद्वेषः स्यादेकगुणजीविनाम्।
वैमुख्यमेकमालायां[3] यथा सुमनसां मिथः॥'

यथा च—'न किं सुमनसां मिथः।' इति॥ शब्दालङ्कारस्योत्थापने एवमेव स्वोक्तं यथा—

'दुष्टः सुतोऽपि निर्वास्यः स्वामिना नयगामिना।
ग्रहपङ्क्तेः ग्रहाधीशः शनिमन्त्ये[4] न्यवीविशत्॥

यथा च—'विभुना नयशालिना'। इति॥ एवं अलङ्कारान्तरेष्वपि ज्ञेयम्, गुणानां तु नैषा युक्तिः। तत्रैव गुम्फे माधुर्यमुत्सार्य ओजोन्यासे दोषप्रसङ्गात्। **असमस्तेति**। वैदर्भी तु सर्वगुणा। वामनमतं अदः॥

## मधुमती

यथा काचिदेका मेषी निरभिसन्धिः पुरो व्रजति, ततश्च तदनुसारिण्यः अपरा अपि भवन्ति, तथा अत्रापि गतानुगतिकत्वमात्रं इत्यर्थः। दूषयति—**यत इति**। आद्ये **यदीति**। **काव्यव्यवहारापत्तिः**, अलङ्कारं विनाऽपीति

---

1 (काव्यालङ्कारसूत्रवृत्तौ ३-१-१, २) 2 अन्यस्येत्यादि नास्ति-ग. 3 'मालायाः'-ग. 4 'मन्ते'-घ.

गौडी पाञ्चाली च रीतिः काव्यस्यात्मा ? । अथ कतिपयैः, ततः—

"अद्रावत्र प्रज्वलत्यग्निरुच्चैः
प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।।। ३४५ ।।"

इत्यादौ ओजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहार-प्राप्तिः ॥

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि !
अस्याः रसच्छदरसः न्यक्करोतितरां सुधाम्" ।। ३४६ ।।

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यव-हारस्य प्रवर्तकौ ॥

---

## सङ्केतः

अद्रावत्रेति । अत्र वाक्ये उक्तिमात्रमेव, न वैचित्र्यम् । ततः ओजःप्रभृतिषु गुणेषु सत्स्वपि न काव्यत्वव्यवहारः इति भावः[1] ।

स्वर्गेति । वरवर्णिनी स्त्री । अत्र स्फुटस्य कस्यापि गुणस्य अनुपलम्भेऽपि काव्यत्वमस्त्येव । स्वर्गप्राप्तिरूपहेतुसामग्र्ये सत्यपि दिव्यदेह-रूपकार्यस्य अनुक्तेः विशेषोक्तिः । पूर्वदेहत्यागाभावेऽपि स्वर्गप्राप्तिफलस्योक्तेः विभावनाऽपि । सुधान्यक्करणेन उपमेयस्याधररसस्य आधिक्यात् व्यतिरेकः । गुणनिरपेक्षौ अतिस्पष्टत्वात् ।

## मधुमती

शेषः । इष्टापत्तिमाशङ्क्याह —स्वर्गेति ।

'यत्किञ्चिदेकगुणहानिकल्पनया साम्यदार्ढ्यं विशेषोक्तिः ।'

इति वामनमते अभौतिकशरीररूपगुणहान्या वरवर्णिन्याः स्वर्गसाम्यदार्ढ्य-कथनात् विशेषोक्तिः, तथा अन्यत्र स्वर्गसाम्यमेव, अधरेण सुधातिरस्कारः परं विशेषः इति तत्प्रतीतेः व्यतिरेकश्च स्फुट एव । गुणनिरपेक्षाविति ।

1 'अद्रावित्यादि नास्ति–ग.

इदानीं गुणानां भेदमाह—

माधुर्यौजःप्रसादाख्याः
त्रयस्ते न पुनर्दश ।

एषां क्रमेण लक्षणमाह—

आह्लादकत्वं माधुर्यं
शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥

---

## सङ्केतः

मूले—शृङ्गारे इति । शृङ्गाराङ्गे हास्याद्भुतादावपीति ज्ञेयम् । यद्यपि—हास्याद्भुतयोः चित्तवृत्तिविस्तारहेतुतया ओजोऽप्यस्ति । तथापि शृङ्गाराङ्गतया प्रकृष्टं माधुर्यमेव तत्र प्रतीयते इति ज्ञेयम् । द्रुतीति । आर्द्रतेति यावत् ॥ 'चित्तस्य द्रुतिहेतुः आह्लादकत्वं माधुर्यम्' इति अतिव्यापकत्वाव्यापकत्वाभावात् लक्षणं सत् । 'बहुधा श्रुतमपि यत् अनुद्वेजकं वचः तन्मधुरम्' इति भरतोक्तं तु लक्षणं प्रियजनरूक्षाक्षराक्षेप-वचनेऽपि तुल्यत्वादतिव्यापकम् । एवं 'पृथक्पदत्वं माधुर्यम्' इति वामनोक्तं तु अव्यापकम् । समासेऽपि माधुर्यस्य दृष्टेः । 'अवृत्तिः

## मधुमती

काव्यशोभाकरं गुणं विनापीत्यर्थः । न चात्र प्रसाद एव गुणः तथास्त्विति वाच्यम् । 'अद्रावत्रे'त्यत्रापि काव्यलिङ्गालङ्कारसत्त्वात् । 'यतोऽग्निः

शृङ्गारे—अर्थात् सम्भोगे। द्रुतिः गलितत्वमिव।
श्रव्यत्वं पुनः ओजःप्रसादयोरपि ॥

---

## सङ्केतः

मध्यवृत्तिर्वा' इति अग्रे भणनात्। परं एतदपि भेद[1]भङ्ग्या उपात्तम्। दण्डिमते तु—रसवत् काव्यं मधुरम्। श्रुतिवर्णानुप्रासाभ्यां वाग्रसः। अग्राम्यार्थता[2] तु वस्तुरसः, इत्थं रसो द्वेधा। अनुप्रासस्य अलङ्कारत्वात्, अग्राम्यार्थतायास्तु दोषाभावत्वात् न गुणत्वम्। वामनोक्तः अर्थगुणस्तु माधुर्यं अग्रे चर्चिष्यते। **अर्थात्** तत्र अग्रेतनश्लोके विप्रलम्भभणनरूपसामर्थ्यात्। **श्रव्यत्वमिति**। ओजःप्रसादयोरपि श्रव्यत्वात्—

'श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते।'

इति माधुर्यलक्षणं भामहोक्तं अतिव्यापकत्वेन निरस्तम् ॥

## मधुमती

प्रज्वलति, अतो धूमो लसती'ति च प्रतीतेः। तस्मात् गुणालङ्कारयोः मिलितयोः प्रतीतयोरेव काव्यशोभाकरत्वं इति। एवं च काव्यशोभातिशय-हेतुत्वं न भेदकम्, अलङ्कारस्यापि काव्यशोभाहेतुत्वसम्भवात् गुणाविशेषत्वा-पत्तेः इत्यपि द्रष्टव्यम् ॥

---

1 भेद इति नास्ति—घ. 2 'अग्राम्यता तु'—ग.

करुणे विप्रलम्भे तत्
शान्ते चातिशयान्वितम् ।

अत्यन्तद्रुतिहेतुत्वात् ।

दीप्त्यात्मविस्तृतेः हेतुः
ओजो वीररसस्थिति ॥६९॥

चित्तस्य विस्तार[1]रूपदीप्तत्वजनकं ओजः ।

---

सङ्केतः

**करुण इति** । अत्र क्रमेणेत्यभणनात्, सम्भोगात् करुणे ततो विप्रलम्भे, ततोऽपि शान्ते सातिशयं माधुर्यं न, किन्तु सम्भोगात् करुणादौ समतया अधिकमित्यर्थः । अन्ये तु क्रमेणेति व्याख्यान्ति ।

**वीरेति** । वीररस[2]प्रधाना स्थितिः यस्य तत् । यद्वा—स्थानं स्थितम् । तत् विद्यते यस्य तत् स्थिति । वीररसे स्थिति—स्थितिमत् तत्तथा । **विस्तारेति** । विस्तारः विकासः । तद्रूपदीप्तिजनकत्वं[3] ओजसो लक्षणं सत् । न तु 'हीनं अवगीतं वा वस्तु शब्दार्थसम्पदा यदुत्कृष्यते तदोजः' इति भरतोक्तम्[4] । अहीनानवगीतस्य अपकर्षणेन ओजसोऽपि गुणस्य प्राप्तेः । द्वयोरुदाहृतिः स्वा यथा—

'लघुभ्यो यादृशी कीर्तिः महद्भ्यः स्यान्न तादृशी ।
अरण्यं समृगं स्थानं[5] नगरं कीटकाश्रितम् ॥'

---

1 'विस्तर'–क. 2 'रसो'–ग. 3 'दीप्तत्वम्'–ग. 4 समासवद्भिर्विविधैः विचित्रैश्च पदैर्युतम् । सर्वैस्वैरुदारैश्च तदोजः परिकीर्त्यते ॥ इति भरतः । 5 'समृगस्थानं'–ग. कीटकाश्रितं इत्यस्य अनुकम्पनीयभोगैकलालसकुत्सितकीटप्रायदुर्जनभूयिष्ठं इत्यप्यभिप्रायः स्यात् ।

**बीभत्सरौद्ररसयोः**
**तस्याधिक्यं क्रमेण च ।**

**वीरात् बीभत्से, ततोऽपि रौद्रे सातिशयं ओजः ।**

**शुष्केन्धनाग्निवत् स्वच्छ-**
**जलवत् सहसैव यः ॥७०॥**

---

## सङ्केतः

साहित्यदिगेषा यत्—कदाचित् किमपि कथंचिद्वर्ण्यते । तत्कथमिवायं गुणः स्यात् । दण्ड्युक्तं[1] समासदैर्ध्यमोजः इत्यपि न । रीतित्रयेऽपि ओजसः साधारणत्वात् । गौडीयानां निर्देशः न युक्तिमान् इति वामन-मङ्गलौ[2] तस्मात् गाढत्वमोजः इत्यपि न शुद्धम् । बन्धगाढत्वं प्रत्युत ओजोहानिहेतुः । यथा—

> 'दैत्येन्द्रं द्राग् विदद्रे हृत्पङ्क्तैर्वाऽस्वदुच्चकैः ।
> नार्मृगेन्द्रैः स्पष्टमात्रं वक्रक्रूरैः नखाग्रकैः ॥' इति ॥

वामनोक्तश्चौजोर्थगुणो[3] द्विविधोऽपि अग्रे चर्चिष्यते । वीरबीभत्सान्तःपाठात् भयानकेऽप्योज इत्येके ॥

शुष्केति । शुष्केन्धनस्याग्निः स यथा तथा । यद्वा—यश्चित्तं

## मधुमती

शुष्केति । प्रसादस्य सर्वरसवृत्तित्वात् प्रथमं दृष्टान्तं ओजस्संभेदार्थ-मुपादत्ते । ननु गुणस्य रसधर्मत्वमेव न शब्दार्थधर्मत्वमिति चेन्न—एक-

---

1 ओजस्समासभूयस्त्वं एतद्गद्यस्य जीवितम् ।
पद्येऽप्यदाक्षिणात्यानां इदमेकं परायणम् ॥ इति दण्डी ॥

2 गाढबन्धत्वमोजः इति वामनः । 3 'श्चार्थगुणः'–ग.

व्याप्नोत्यन्यत् प्रसादोऽसौ
सर्वत्र विहितास्थितिः ।

अन्यदिति । व्याप्यमिह चित्तम् । सर्वत्रेति । सर्वेषु रसेषु, सर्वासु रचनासु च ।

---

## सङ्केतः

व्याप्नोति सः प्रसादः । किं भूतः ? शुष्केन्धनाग्निवत् इत्यादि । तुल्यार्थे वतिः । शुष्केन्धनस्य अग्निः, वस्त्रादेः जलं च यथा शीघ्रं व्याप्तिकृत्, तथा चित्तस्य प्रसादः इत्यर्थः । 'विभक्तवाच्यवाचकयोगात् अनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसादः' इति तु भरतः । प्रसिद्धपदार्थतेति भावः । पदपूर्विका तदर्थावगतिः इति शब्दार्थयोः ग्रहणम् । सेयं विशेषणाधारा विशेष्याणामुक्तिः । वामनोक्ते तु शैथिल्यं प्रसादः । ओजोव्यत्ययात्

## मधुमती

वृत्त्यैवापरत्रापि तद्व्यवहारोपपत्तौ उभयत्रापि तदनभ्युपगमात् । रसापेक्षया च वर्णादीनामनेकत्वात् तत्तद्वर्णादिवृत्तित्वाभ्युपगमे गौरवात् रसमात्रवृत्तित्वम् । शब्दार्थेषु च नैकमेव माधुर्यम् । अद्रावत्रेत्यादौ वर्णसौकुमार्येऽपि वचनयोः परुषत्वात्, अकुण्ठेत्यादौ अर्थमाधुर्येऽपि वर्णानाममधुरत्वात्, बर्हिनिर्ह्राद-नेत्यादौ तदुभयमाधुर्येऽपि समासस्यामधुरत्वात् शब्दार्थमाधुर्ययोः भेद एव । तथाच गौरवं तदवस्थमेव । रसवर्तित्वे तत्तद्व्यञ्जनोपाधिकमाधुर्यादिरिति तु युक्तमेवेति ॥

एवं युक्त्या गुणस्य रसधर्मत्वे सिद्धे शुष्केत्यादि दोषत्यागाभिप्रायेण, द्वितीयस्तु माधुर्यसंभेदाभिप्रायेण । न चैवं हास्यभयानकाङ्गरसेषु प्रसादमात्रे

**गुणवृत्त्या पुनस्तेषां**
**वृत्तिः शब्दार्थयोर्मता ॥७१॥**

गुणवृत्त्या उपचारेण। तेषां गुणानाम्, आकारे शौर्यस्येव।

---

### सङ्केतः

दोषोऽयम्। 'तर्हि गाढत्वसंप्लुतं शैथिल्यं प्रसादः' इत्युच्यते इति चेन्न। मिथोविरोधिगाढत्वशैथिल्ययोः एकत्र [1] संप्लवासिद्धेः।

"करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः।
यथानुभवतः सिद्धः तथैवोजःप्रसादयोः॥"

इत्युक्त्या संप्लवः सिद्ध्यतीति चेत्—तर्हि ओजस्यन्तर्भावः इति वक्ष्यते। वस्तुवृत्त्या तु—सभ्यानां नाट्ये करुणवासितानां प्राक् दुःखम्, नेपथ्यादिदर्शनेन च पश्चात् सुखमिति क्रमात् सुखदुःखानुभूतिः। ओजःप्रसादयोः पुनः सममनुभवप्रतिज्ञेति दृष्टान्तसिद्धिः। यद्वा—सर्वरसप्रतीतिः आनन्दरूपैवेति दृष्टान्तासङ्गतिः। अर्थगुणस्तु प्रसादः अग्रे चर्चिष्यते।

गुणेति। मुख्यया वृत्त्या गुणाः रसे, शौर्यमिवात्मनीत्यर्थः॥

### मधुमती

गुणाश्रयेऽव्यतिव्यापनं नोक्तं स्यादिति वाच्यम्। हास्यस्य शृङ्गारानुगामितया भयानकाद्भुतयोः बीभत्सवीरानुगामितया च तत्तन्न्यायेन चित्तव्यापनात्। अत एव प्रकारद्वैविध्यमेवोक्तम्। तस्मात् अनुभवसिद्धचित्तवृत्तिविशेषजनकत्वं माधुर्यादिजनकत्वलक्षणं शरीरादौ माधुर्यादिव्यपदेशं समर्थयति—गुणवृत्त्येति। वस्तुतस्तु—शरीरे सुखमितिवत् शब्दार्थयोः माधुर्यादिप्रतीतिः

---

1 'एकत्व'—ग.

कुतः त्रय एव, न दश ? इत्याह—

केचिदन्तर्भवन्त्येषु
दोषत्यागात् परे श्रिताः ।
अन्ये भजन्ति दोषत्वं
कुत्रचित् न ततो दश ॥७२॥

बहूनामपि पदानां एकपदवत् भासनात्मा[1] यः

---

सङ्केतः

एष्विति । रसध्वनिगुणालङ्कारेष्वित्यर्थः । दोषेति । पूर्वोक्तदोषत्यागात् केचिल्लब्धाः, परोक्तशेषशब्दार्थगुणानां क्रमेण अन्तर्भावस्वीकारदोषत्वान्याह—बहुनामित्यादि ।

'स्वभावस्पष्टं विचारगहनं वचः श्लिष्टम्'

इति भरतः । विचारगहनं गम्भीरार्थम् ॥ अभिधानाभिधेयव्यवहार[2]-

मधुमती

परम्परासम्बन्धविषयिणीति तत्र मधुरादिव्यपदेशः मुख्य एव । गौणत्वोक्तिस्तु साक्षात्संबन्धाभावनिबन्धना उपचरिता । व्यपदेशप्रतीत्योः उभयत्रापि तुल्यत्वात् विनिगमकाभावाच्च ।

दोषत्यागादिति । ल्यब्लोपे पञ्चमीयम् । तेन दोषत्यागं प्राप्य आश्रिता दोषाभावान्तर्भूता इति यावत् । उपलक्षणमिदम्—अलङ्कारान्तर्भूता

---

1 'अवभासनात्मा'–ख. 2 'व्यवहारे'–घ.

श्लेषः, यश्च आरोहावरोहक्रमरूपः समाधिः, या च

---

सङ्केतः

वैदग्धी इयं, न च गुम्भधर्मः। गुम्फधर्मा हि गुणाः। तस्मात्—

'मसृणत्वं श्लेषः, यस्मिन् सति बहून्यपि पदान्येकवद्भान्ति।'

इति वामनः। यथा—

'अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।' इति ॥

मसृणं—अदन्तुरम्। दन्तुरत्वे हि[1] रीतिवैशसोपनिपातः। तं च अन्यतरनिर्वाहे निषेवन्ते। तस्मात् 'अशिथिलं श्लिष्टम्।' इति दण्डी। तच्च स्वं यथा—

"अपकारिण्यपि प्रायः स्वच्छाः स्युरुपकारिणः।
मारकेभ्योऽपि कल्याणं रसराजः प्रयच्छति ॥" इति।

ओज एवेदम्। गौडगुम्फदर्शिनो[2] वा मतमिदम्। ते हि शिथिलप्रायाः। तत्र स्वं यथा—

'नीचाः स्वशीलं मुञ्चन्ति नोपकारापकारयोः।
आरटन्त्येव करभाः भारारोहावरोहयोः ॥'

'एकपदवद्भान्ती'ति उक्तौ, वस्तुवृत्त्या तु पृथक्पदत्वमेव सत्यमिति माधुर्यमेवेदम्।

'अर्थस्य गुणान्तरसमाधानात् समाधिः।'

इति भरतः। समाधानं आरोपः। यथा—

---

1 अन्यतररसनिर्वाहः इति काव्यानुशासनानुसारेण मसृणपददन्तुरत्वे इति पाठः स्यात् इति भाति। 2 'गुम्फदर्शने'–घ.

विकटत्वलक्षणोदारता, यश्च ओजोमिश्रित[1]शैथिल्यात्मा प्रसादः, तेषां ओजस्यन्तर्भावः। पृथक्पदत्वरूप माधुर्यं

---

## सङ्केतः

'कीर्तिः पल्लवितेवासीत् गुणैः कुन्देन्दुसुन्दरि[2] !' इति ।

सोऽयं अतिशयोक्तिविशेषः । तस्मात्—

'आरोहावरोहक्रमः समाधिः ।'

इति वामनः । तदिदं गुरुलघुवर्णयोः मिथोऽन्तरणम् इति[3] दण्डिभोजौ । तस्मात् अन्यधर्मस्य अन्यत्र समाधानात् समाधिः ।

यथा—'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितम् ।'

इत्यादि । उल्लेखवानसावर्थः न गुणः । तस्मात्—

'विकटत्वमुदारता । यस्मिन् सति नृत्यन्तीव पदानीति प्रतीतिः ।'

इति वामनः । स्वं यथा—

'यद्यशःकैरवारामे वैरिणामपकीर्तयः ।
भ्रमद्भृङ्गाङ्गनाभङ्गी अङ्गीकुर्वन्ति हेलया ॥' इति ॥

मनागमसृणः अनुप्रासप्रभावोऽयं,[4] न गुणः । स्वमते तु ओजः इति ॥

## मधुमती

इत्यपि द्रष्टव्यम् । तेन नाग्रिमग्रन्थविरोधः । तेषामिति । बन्धस्य गाढत्वानुभवात् । अन्यथा एवंविधविशेषकल्पने दशाधिक्यप्रसङ्गात् ॥

---

1 'मिश्रितः'–क. 2 'सुन्दरी'–ग. 3 'मिथोऽन्तरेणेति'–घ.
4 'मनागमसृणानुप्रासप्रभवोऽयम्'–ग.

भङ्ग्या साक्षादुपात्तम्। प्रसादेन अर्थव्यक्तिः गृहीता।

---

## सङ्केतः

"यस्मिन् अतथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति स अर्थव्यक्तिः गुणः" इति भरतः ॥ स्वोक्तं यथा—

"तदम्भः किं वाच्यं तनयिषु जगज्जीवनकरं
श्रियः क्रीडागारं जयति जलजं यस्य तनयः।
कथं वा निर्वाच्यं सरसिजमिदं यस्य भुवन-
त्रयीस्रष्टा स्रष्टा समजनि सुतः सर्वमहितः ॥" इति ॥

प्रसादान्न भेदोऽस्येति वामनीयाः। तस्मात् यत्र प्रागिव अर्थस्यावगतिः पश्चादिव वाचां[1] सा अर्थव्यक्तिः। यथा—"वागर्थाविव सम्पृक्तौ" इति। सोऽयं उक्त्यन्तरोक्तः प्रसाद एवेति दण्डी। तस्मात् अनेयार्थत्वं अर्थस्य अर्थव्यक्तिः। दोषाभावोऽयं न गुणः। "परस्परविभूषणः गुणालङ्कार[2]-ग्रामः समम्" इति भरतः। 'भिन्नाधाराः गुणालङ्काराः कथमन्योन्यं भूषयेयुः?' इति दण्डी ॥ श्लेषयमकचित्राणि भूयनुप्रासश्च प्रस्तुत[3]गुणान् विगृह्णन्ति। तस्मात् बन्धेष्वविषमं समम्। बन्धाश्च प्रौढमृदुमध्यवर्णारब्धत्वात् तादृशास्त्रयः। अत्र दृष्टान्ताः सुलभत्वात् नोच्यन्ते। एवं पश्चात् अग्रेऽपि ज्ञेयम् ॥ तदिदं वृत्तिष्वन्तर्भवतीति। तस्मात् आरब्धरीतिनिर्वाहः सममिति वामनीयाः

## मधुमती

भङ्ग्या—उक्त्यन्तरेण। प्रसादेनेति। तद्भिन्नायां अर्थव्यक्तौ

---

1 'वाचः'-ग. 2 'विभूषणालङ्कार'-ग. 3 'प्रस्तुत गुणास्'-ग.

मार्गाभेदरूपा समता क्वचिद्दोषः । तथाहि—

'मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः'

इत्यादौ सिंहाभिधाने मसृणमार्गत्यागः गुणः । कष्टत्व-ग्राम्यत्वयोः दुष्टत्वाभिधानात् तन्निराकरणेन अपारुष्य-रूपं सौकुमार्यम् , औज्ज्वल्यरूपा कान्तिश्च[1] स्वीकृता । एवं न दश शब्दगुणाः ॥

---

## सङ्केतः

इत्यपि दूष्यते—मार्गाभेदेति ॥ क्वचित् इति कुत्रचिदित्यस्य व्याख्या ॥ तस्मात् समता न गुणः ॥ अपारुष्येति । "सुखशब्दार्थं सुकुमारम् ।" इति भरतः । "सुखशब्दमेव" इति तु वामनः । तदिदं माधुर्यं कष्टत्व-दोषाभावो वा । कान्तिरिति । "श्रोत्रमनःप्रीतिकृत् कान्तिः"[2] इति भरतः । "माधुर्यमेवेदम् । तस्मात् औज्ज्वल्यं कान्तिः ।" इति वामनः । यस्यां सत्यां न वाग्गुम्फ[3]च्छायेयमिति प्रतीतिः । स्वं यथा—

"अस्तावनीं विगलितोष्मणि संश्रितेऽर्के[4]
दिक्कामिनीषु रुदतीषु विहङ्गनादैः ।
सौरभ्यलीन[5]मधुपालिमिषेण राज्ञा
मृत्पिण्डमुद्रितमुखा इव पद्मकोशैः[6] ॥" इति ॥

## मधुमती

मानाभावात् । क्वचित् इति । औचित्यप्राप्तिमार्गवैषम्यादित्यर्थः । मसृ-णेति । वाच्यौचित्यस्य नियामकत्वादिति भावः ।

---

1 'रूपा च कान्तिः'–क. 2 'कान्तं'–घ. 3 'नव्या गुम्फ'–ग. 4 'संसृतेऽर्के'–ग. 5 'नील'–घ. 6 'कोशाः'–ग.

'पदार्थे वाक्यरचना[1] वाक्यार्थे च पदाभिधा ।
प्रौढिः व्याससमासौ च साभिप्रायत्वमस्य च' ॥

इति[2] या प्रौढिः ओजः इत्युक्तम्, तद्वैचित्र्यमात्रं न गुणः । तदभावेऽपि काव्यव्यवहारप्रवृत्तेः । अपुष्टार्थत्व-अधिकपदत्व-अनवीकृतत्व-अमङ्गल[3]रूपाश्लीलग्राम्याणां

## सङ्केतः

"ओजोऽपि औज्ज्वल्यतस्तर्हि कान्तिः । तस्मात् लोकसीमाऽनतिक्रमः कान्तिः" इति दण्डी । सा च उपचारात्[4] प्रशंसनाच्च । क्रमेणोदाहृतम्—

"एते वयं अमी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यं अनास्था बाह्यवस्तुषु ॥"

"तदास्यमनु भृङ्गाली गन्धलोभात् भ्रमन्त्यभात् ।
ध्रुवं भुवं गतस्येन्दोः भ्रान्त्या सेनेव तामसी ॥"

स्वमिदम् । एवं चेत् तर्हि लोकसीमाऽतिक्रमः अकान्तिः स्यात् ।

**पदार्थ इति** । पदार्थे वाच्ये वाक्योक्तिर्यथा—चन्द्रपदे वाच्ये "अत्रिनयनसमुत्थं ज्योतिः" इत्युच्यते ॥ वाक्यार्थे पदोक्तिर्यथा—दिव्यैषा

## मधुमती

सन्तु तर्हि श्लेषादयोऽर्थधर्माः इत्यत आह—**पदार्थ इति** । तत्र वाक्यरचना यथा—चन्द्रे वाच्ये—

'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' इति ॥

---

1 'रचनं'–ख. 2 'समासौ चेति'–क. (काव्यालङ्कारसूत्रवृत्तिः ३-२-२०) । 3 'कृतामङ्गल'–ख. 4 'उपकारात्'–ग.

निराकरणेन च[1] साभिप्रायत्वरूपं ओजः,

---

## सङ्केतः

न स्यात्, किन्तु मानुषी इति वाच्ये 'निमिषति' इत्युक्तिः ॥ वाक्यार्थस्य व्यासो यथा—

"सुखं क्वचित् क्वचिद्दुःखं सुखदुःखे क्वचित्पुनः ।
क्वचिन्न दुःखं न सुखं इति चित्रा भवस्थितिः ॥" इति ।

स्वमिदम् ॥ तस्यैव समासो यथा—'ते हिमालयमामन्त्र्य' इति । साभिप्रायत्वमिति । वामनोक्तोऽयं द्वितीयो भेदः ॥ ननु अर्थस्य जडत्वात् नाभिप्रायः । वक्तृश्रोत्रोः सः इति चेत्—तद्गतोऽर्थस्य गुणः इति कथम्?

## मधुमती

पदाभिधा यथा—

"यन्न दुःखेन सभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥" इति

विशिष्टसुखे वाच्ये स्वर्ग इति । व्यासो यथा ममैव—त्वत्प्रयाणरसाब्धिः शुष्कः इति वक्तव्ये—

"आदायामृतवाजिवारणमणिश्रीचन्द्रकल्पद्रुमात्
अम्भोमात्रघनस्थितो दिविषदां बृन्देन रत्नाकरः ।
जेतुं वैरिपुरीं त्वयि प्रचलिते सेनाभवैः पांसुभिः
धिक् कष्टं न तदप्यमुष्य मिथिलाभूमीन्द्र! वर्तिष्यते ॥"

---

1 'निराकरणे च'—क.

अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपा[1] उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रस-ध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा

---

## सङ्केतः

अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुणः इति ब्रूषे, तद्वस्त्वन्तरं आक्षेप्यं वक्तृभि प्रायरूपम्। एवं आक्षेपकत्वमपि कविव्यापारादेव तथा विनिवेशप्रकारयोगे भवेत्[2]। अत एव प्रौढिः वस्तुतो वक्तृगतार्थेषु उपचर्यते ॥

**अर्थेति**। प्रयोजकपदोक्तिः **वैमल्यम्**। **उक्तीति**। नवीकृतत्वे हि उक्तयो विचित्राः स्युः। **अपारुष्येति**। अत्र अर्थगतं अपारुष्यम्। यथा "यशश्शेषः" इति। यद्वा—उक्तिविशेषोऽसौ पर्यायोक्तस्य। **उदारतेति**। यथा—"त्वमेवंसौन्दर्या स च रुचिरतायाः" इत्यादि।

## मधुमती

इति। यथावा—

"अयं नानाकारो भवतिसुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च ततः।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्ध्वं न च भवति दुःखं न च सुखम् ॥"

अत्र च अदृष्टवैचित्र्यात् सुखवैचित्र्यमित्यर्थस्य बहुधा प्रतिपादनं कृतम् ॥

---

1 'अग्राम्यत्ववपुः'–क.  2 'योगे तथाभावात्'–घ.

अर्थव्यक्तिः, दीप्तरसत्वरूपा[1] कान्तिश्च स्वीकृते । क्रम-कौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि[2] विचित्रत्वमात्रम् । अवैषम्यरूपा समता दोषाभावमात्रं, न पुनः गुणः । कः खलु अनुन्मत्तः अन्यस्य प्रस्तावे[3]

## सङ्केतः

**दीप्तेति** । वामनमतमिदम् । यथा—"प्रेयान् सोऽयमपाकृतः" इत्यादि । रौद्राद्याः दीप्ताः रसाः, शृङ्गाराद्यास्तु न । ततः तद्वैपरीत्यात् अकान्तिरपि स्यात् इत्यप्युत्तरम् । **क्रमेति** । नेत्रपिधानादेः यः क्रमः, यच्च कौटिल्यं तयोरनुल्बणत्वेन अग्राम्यत्वेनोपपत्त्या युक्ततया यद्योजनं=योगः, तद्रूपा घटना या, तदात्मा श्लेषः । यथा—

"दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकस्वेदोल्लसन्मानसां
अन्तर्हासलसत्कपोलफलकां[4] धूर्तोऽपरां चुम्बति ॥" इति ॥

अत्र एका प्रिया अक्षिपिधानकेलिना, अन्या चुम्बनेन च रञ्जिता इति संविधानकभवं वैचित्र्यमात्रमिदं न तु गुणः ॥ **कः खल्विति** ॥

## मधुमती

समासो यथा—'रक्ष सासुं जयेने'ति[5] ॥ **क्रमेति** । **क्रम-कौटिल्यं** औचित्यव्युत्क्रमः, तस्यानुल्बणत्वं अनभिव्यक्तिः, तत्रोपपत्तियोगः ।

1 'रसरूपा'–ख. 2 'श्लेषः'–क. 3 'अन्यप्रस्तावे'–ख. 4 'पुलको'–ग. 5 'रक्षसा मृगसञ्जयेनेति'–च. इदं पाठद्वयमपि असमञ्जसं भाति । रक्षसेत्येकः श्लोकः, सञ्चये चेत्यपरः श्लोकश्च अत्र सूचितौ भवेताम् ॥ तत्र प्रथमः—'रक्षसा-मृगरूपेण वञ्चयित्वा स राघवौ । जहार सीतां पक्षीन्द्रप्रयासक्षण विघ्नितः ॥' इति । द्वितीयस्तु—सञ्चये च विनाशान्ते मरणान्ते च जीविते । संयोगे च वियोगान्ते को नु विप्रणयेन्मनः ॥" इति ॥

**अन्यदभिदध्यात्! अर्थस्यायोनेः अन्यच्छायायोनेर्वा यदि न भवति दर्शनं, तत् कथं काव्यम्? इति, अर्थ-दृष्टिरूपः समाधिरपि न गुणः ॥**

---

## सङ्केतः

एकमर्थं प्रक्रम्य तत्त्यागात् अन्येनार्थेन कस्सुधीः निर्वाहं कुर्यात्? इत्यर्थः ॥ **अर्थदृष्टीति** । स्वं यथा—

> 'सर्वथा नष्टनैकट्यं विपदे वृत्तशालिनाम् ।
> वारिहारिघटी[1]पार्श्वे ताड्यते पश्य झल्लरी ॥'

तस्मात् समाधिः काव्यार्थ एव न तु गुणः ॥ "व्याजालम्बनं समाधिः" इति तु भोजः । यथा—

> "दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
> तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
> आसीद्विवृत्तवदना च विमोचयन्ती
> शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥"

एतदपि वैचित्र्यमात्रम् । अविच्छेदेन विच्छेदेन च आरोहावरोहाभ्यां ससौष्ठवतया स्थानस्य अनुच्चनीचतया च पाठक्रमेण[2] ओजःप्रसादमाधुर्यौदार्य-

## मधुमती

एवं च औचित्यव्युत्क्रमतानभिव्यक्तियुक्तियोगः इत्यर्थः । यथा—

> 'एकत्रासनसङ्गते प्रियतमे पश्चादुपेत्यादरात्'

इत्यादौ । अत्र प्रथमं ज्येष्ठायाः ततः कनिष्ठायाश्च वञ्चनमित्युचितम् । तत्र तदतिक्रमः क्रीडापरचक्षुर्निमीलनरूपयुक्त्या समाधीयते इत्यर्थः ॥ उपसंहरति—**तदिति** ॥

---

1 'घटे'–घ.　2 'पाठे क्रमेण'–घ.

तेन नार्थगुणा वाच्याः ।

वाच्याः—वक्तव्याः ।

प्रोक्ताः शब्दगुणाश्च[1] ये ॥

वर्णाः समासो रचना

तेषां व्यञ्जकतामिताः ॥७३॥

---

### सङ्केतः

साम्यानीति गुणाः पञ्चेत्येके । तदसत् । न हि विषयविभागेन पाठक्रम-नियमोऽस्ति । किमपि कदाचित् कथंचित् पठ्यते इति । पाठनियमः कल्प्यते इति चेत, सः अलीकत्वात् न गुणहेतुः ॥ स्रग्धरादौ ओजः, इन्द्रवज्रादौ प्रसादः, मन्दाक्रान्तादौ माधुर्यम्, शार्दूलादौ साम्यम्, विषम-वृत्तेषु चौदार्यम्, इति छन्दोविशेषसाध्याः गुणाः इत्येके । तदप्यसत् । स्रग्धरादिष्वपि प्रतिगुणं यथोक्तवर्णरचनासमासाद्यभावे गुणान्तराप्राप्तेः ॥ यथा—

"जङ्घाकाण्डोरुनालः नखकिरणलसत्केसरालीकरालः"

इति । एवं इन्द्रवज्रादिष्वपि ज्ञेयम् ॥

**तेषामिति** । ये माधुर्याद्याः गुणाः शब्दगतत्वेनोक्ताः **तेषां** वर्णाद्याः **व्यञ्जकतां** गताः इत्यर्थः ।

### मधुमती

**प्रोक्ताः इति** । अन्यैरिति शेषः । अमीषां मते तस्य रसधर्मत्वात् । यया गुणवृत्त्या ये शब्दगुणाः प्रोक्ताः इत्यर्थः । इताः गताः । 'इण् गतौ' इति धात्वनुसारात् ।

---

1 'गुणास्तु'—क.

के कस्येत्याह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शाः
अटवर्गा रणौ लघू ।
अवृत्तिः मध्यवृत्तिर्वा
माधुर्ये घटना तथा ॥७४॥

ट–ठ–ड–ढवर्जिताः[1] कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावः मध्यमः समासो[2] वेति समासः, तथा माधुर्यवती पदान्तरयोगेन[3] रचना माधुर्यस्य व्यञ्जिका । उदाहरणम्—

## सङ्केतः

स्पर्शाः वर्गवर्णाः । ह्रस्वान्तरिताः इति । लघुत्वस्य स्वरधर्मत्वात् । रणव्यञ्जनयोः अनुपपत्तौ ह्रस्वान्तरितोपनिबन्धे लघुत्वं कल्प्यते । **तथेति** माधुर्यानुकूलाः ॥ स्पर्शाः इति । 'व्यञ्जकतां इताः' इति सम्बन्धः ॥

## मधुमती

मूर्ध्नीति ।

"कादयो मावसानाश्च स्पर्शाः स्युः पञ्चविंशतिः ।"

एतच्च सम्भवाभिप्रायम् 'न प्राधान्याभिप्रायम्' तेन अन्यसंयुक्तैरेव वर्णैः माधुर्याभिव्यक्तिर्भवतीति भ्रमः न कर्तव्यः । अशेषकविकाव्यानां विलोपप्रसङ्गात् ।

---

1 'वर्जाः'–ख. 2 'मध्यमसमासो'–क. 3 'योगे'–ख.

अनङ्ग ङ्गप्रतिमं तदङ्ग
भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः
स्वान्तानि शान्तापरचिन्तितानि[1] ॥ ३४७॥

**योगः आद्यतृतीयाभ्यां**
**अन्त्ययोः रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं**
**गुम्भः उद्धत ओजसि ॥७५॥**

---

## सङ्केतः

**अनङ्गेति** । एताः भङ्ग्यः । स्वान्तानि योषाङ्गमेव ध्यायन्तीत्यर्थः । अत्र 'ङ्ग' 'न्त' 'ङ्गी' इत्यादि[2]रूपतया वर्णाः मूर्ध्नि

## मधुमती

तदयमत्र विवेकः—त्रिविधो हि वर्णः—विहितः निषिद्धः अनिषिद्धश्चेति । तत्र विहितानिषिद्धयोरुपादाने तद्दोषनिषेधयोरविषयत्वात् न दोषः । निषिद्धस्यापि बाहुल्येनोपादाने एव दोषः । अन्यथा 'गण्डकुण्डला'दिपदं शृङ्गारादौ नोपादेयं स्यात् ॥ एवं सर्वत्र बोद्धव्यम् ।

**योग इति** । तुल्ययोर्योग इत्यन्वयः । **रेणेति** । अर्क-शर्करा-

---

1 'चिन्तनानि'–क. 2 'अत्र अनङ्गेत्यादि'–ग.

वर्गप्रथमतृतीयाभ्यां अन्त्ययोः द्वितीयचतुर्थयोः रेफेण अध उपरि उभयत्र वा यस्यकस्यचित् तुल्ययोः तेन तस्यैव संबन्धः, टवर्गः अर्थात् णकारवर्जः शकारषकारौ दीर्घसमासः विकटा सङ्घटना ओजसः । उदाहरणम्—'मूर्ध्नामुद्वृत्तकृत्ते'त्यादि ॥

---

## सङ्केतः

स्ववर्गान्त्यगाः । समासरचने च शृङ्गारस्य व्यञ्जकाः । **तद्द्वितीयेति** । 'च्छ' 'ट्ठ' 'त्थ' 'प्फ' इत्यादिरूपतयेत्यर्थः । **अध इति** । 'क्र' 'र्क' 'र्क्र' इत्यादिरूपतयेत्यर्थः । **तुल्ययोरिति** । 'क्क' 'च्च' 'द्द' 'त्त' इत्यादि[1] रूपतयेत्यर्थः ॥

## मधुमती

आर्द्रकादौ एतत् द्रष्टव्यम् । **विकटा सङ्घटना इत्युपसंहारात्**—तथा वर्णाः न रमणीयाः, यथा विकटमयपदघटिततया समासाः । तदुभयघटिततया तु घटना विकटा भवत्येवेति स्मर्तव्यम् । अत एव—

> " अनवरतनयनजलवनिपतनपरिपीत-
> हरिणमदतिलकं करतलनिषण्णमराल-
> वदनमिदं कर्णतापं तपति । "

इत्यत्र दीर्घसमासायामपि रचनायां ओजो नानुभूयते, विकटवर्णाघटितत्वात् इति ॥

---

1 'क्वचिद्वृत्ते'त्यादि–घ.

श्रुतिमात्रेण शब्दात्तु
येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां
स प्रसादो गुणो मतः ॥७६॥

समग्राणां–रसानां[1] सङ्घटनानां च । उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयतः
तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्[2]॥३४८॥

---

## सङ्केतः

परीति । दाहाधिक्येन अधोमुखी स्त्री शयने भृशं लुठिता[3] । अतः स्तनजघनयोः म्लानिः ।

## मधुमती

श्रुतीति । श्रुतिमात्रात् यत्र अर्थप्रत्ययः तद्रचनायां गुणः इति स्मर्तव्यम् । साधारणः इति ब्रुवता गुणान्तरादप्येतद्व्यक्तिः अभिमता । न चैवं प्रतिकूलवर्णादिनाऽपि प्रसादव्यञ्जने । "चित्ते विहट्टदि' इत्यादौ वाचकमेव, 'मित्रे क्वापी'त्यादौ वाच्यमेव, न तु रसम्" इत्यादि विरुद्ध्येतेति वाच्यम् । वर्णानां गुणान्तराभिव्यक्तावपि एतद्व्यक्तेरनुमतौ प्रतिकूलवर्णादीनां

---

1 'रसानां समासानां'–क. 2 (रत्नावली २·१२) । 3 'लुण्ठिता'–ग.

यद्यपि गुणपरतन्त्राः सङ्घटनादयः, तथापि—

वक्तृवाच्यप्रबन्धानां
　औचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानां
　अन्यथात्वमपीष्यते ॥७७॥

क्वचित् वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दर[1]ध्वानधीरः
　कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
　केनास्मत्सिंहनादप्रतिरसितसखः दुन्दुभिस्ताडितोऽसौ[2] ॥
॥ ३४९ ॥

---

## सङ्केतः

मन्थेति । मन्थेन आयस्तं यत् अर्णवाम्भः तत्प्लुतिकुहरं चलन् यो मन्दरः इति योगः । कृष्णा द्रौपदी । केन ताडितोऽयं दुन्दुभिः

## मधुमती

गुणप्रतिकूलत्वमपि इति तत्र रसानभिव्यक्तौ सतोऽपि प्रसादगुणस्य अनभिव्यक्तेः । यद्वा प्रसादगुणवत्तायाः व्यञ्जने माधुर्यादिगुणवत्तया व्यञ्जनात् वर्णानां तत्रैव प्रतिकूलत्वकथनमिति भाव्यम् ॥

---

1 'गलन्मन्दरा'–क. 'रणन्मन्दर'–ख. 'जलन्मन्दरा'–ग. 2 'ताडितोऽयम्'–क. (वेणीसंहारे १-२२) ।

अत्र हि[1] न वाच्यं क्रोधादिव्यञ्जकम् । अभि-नेयार्थं[2] च काव्यमिति तत्प्रतिकूलाः उद्धताः रचनादयः । वक्ता चात्र भीमसेनः ॥

क्वचित् वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचना-दयः । यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैः भीममेतत् निपतति वियतः कुम्भकर्णोत्तमाङ्गम्[3] ॥
॥ ३५० ॥

---

## सङ्केतः

ईदृग्भूतः[4] इति निवृत्तार्थः ॥ अत्रेति । यदि हि क्रोधादिव्यञ्जकं वाच्यं स्यात्, इदं च काव्यं अभिनेयार्थं स्यात् तदा अनुमन्येत उद्धत[5]-रचनादि । अभिनेयार्थं हि नाटकादि । तत्र रौद्रादावपि न दीर्घवृत्त्यादि-कार्यम् ॥

## मधुमती

प्रौढच्छेदेति । कृत्यारावणनाम्नि नाटके वैतालिकस्येयमुक्तिः ॥

---

1 'हि' इति नास्ति–ख. 2 'अभिनयार्थं'–क. 3 'कौम्भकर्णोत्त-माङ्गम्'–क. (कृत्यारावणे, छलितरामे च) । 4 'ईदृग्भूत'–घ.. 5 'मन्ये नोद्धत'–ग.

क्वचित् वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते ।
तथाहि—आख्यायिकायां शृङ्गारेऽपि न मसृण[1]
वर्णादयः । कथायां रौद्रेऽपि न अत्यन्तमुद्धताः ।
नाटकादौ रौद्रेऽपि न दीर्घसमासादयः ॥

---

## सङ्केतः

**न मसृणेति** । विकटगद्यबन्धा—आख्यायिका । बन्धस्य च वैकट्यं न मृदुवर्णैः स्यात् । **कथायामिति** । मृदुवर्णा—कथा । **नाटकेति** । न केवलं करुणविप्रलम्भयोः । रौद्रेऽपि न दीर्घवृत्त्यादिकं कार्यम् । यतः रसप्रतीतौ विरोधिनो व्यवधायकाश्च त्याज्या एव ॥ एवं दीर्घवृत्ते, वृत्तानां[2] नानाविधसम्भावनया रसप्रतीतिं कदाचित् व्यवदधातीति

## मधुमती

**आख्यायिकायामिति** । आख्यायिकालक्षणं तु साहित्यमीमांसायामुक्तम् । यथा—

'कविसाहित्यसहितं नरपालकथाऽन्वितम् ।
विचित्रवर्णनाचारु दशोच्छ्वासं मनोहरम् ॥
उच्छ्वासान्ते वक्त्रयुतं चरितापरवक्त्रकम् ।
उच्छ्वासादौ च पद्यार्थयुक्तं आख्यायिकाभिधम् ॥"

इति वक्त्रापरवक्त्रे छन्दोविशेषौ ॥ **कथायामिति** ।

"तत्र वक्त्रापरवक्त्रशून्या चाख्यायिका मता ।"

---

1 'मसृणाः'–क. 2 'दीर्घवृत्तिः वृत्तीनां'–ग.

एवं अन्यदपि औचित्यं अनुसर्तव्यम् ॥

इति श्रीमम्मटभट्टविरचिते काव्यप्रकाशे
गुणालङ्कारभेदनियतगुणनिर्णयो नाम
अष्टमः उल्लासः

———

## सङ्केतः

तस्यां [1] न भरः कार्यः, विशेषेण काव्ये अभिनेयार्थे । तत्रापि विप्रलम्भ-करुणयोः । तयोर्हि सुकुमारत्वात् अल्पेऽप्यस्वच्छत्वे [2] शब्दार्थयोः प्रतीतिः मन्दा स्यात्। रसान्तरे तु रौद्रादौ मध्यवृत्तिरपि। धीरोद्धतव्यापारौचित्यात्। दीर्घवृत्तिरपि वा तदाक्षेपाविनाभावि रसोचितवाच्यापेक्षया न विगुणा स्यादिति साऽपि स्वीकार्या। प्रसादस्तु सर्वरससाधारणः [3] इत्युक्तत्वात् सर्वत्र सः स्वीकार्यः इति ज्ञेयः। तत्त्यागे हि अवृत्तिरपि न करुणविप्रलम्भयोः व्यञ्जिका। तदङ्गीकारे मध्यवृत्तिरपि च [4] व्यञ्जिका । अत एव "कृतमनुमतं दृष्टं वा यैः" इत्यादौ प्रसाद एव, न माधुर्यम्, नाप्योजः। दीर्घवृत्त्याद्यभावात्। न च अचारुत्वम्। इष्टरसप्रतीतेः।

**एवमिति**। तत्र—"एक-द्वि-त्रि-चतुर्भिः छन्दोभिः अर्थसमाप्तौ **मुक्तक-सन्दानितक-विशेषक-कलापकानि** सर्वभाषाभिः स्युः। पद्यादि-

## मधुमती

इति गुप्तपादाः॥ अग्निपुराणे तु—

"श्लोकैरेव तु संक्षेपात् कविर्यत्र प्रशंसति ।
मुख्यार्थस्यावतरणं भवेद्यत्र कथान्तरम् ॥

1 'ताभ्यां'–ग. 2 'अल्पेऽपि' इति नास्ति–घ. 3 'रसगः'–ग. 4 'रपि न'–घ.

## सङ्केतः

चतुर्दशान्तैस्तु कुलकम् । चतुर्दशोर्ध्वमप्येके । मुक्तकैः एकविषया पद्धतिः पर्या । स्वपरकृतानां सूक्तीनां मिलनं कोशः । एकानेकप्रघट्टकविषयत्वेन एककविकृतानां तु मिलनं संङ्घातक-संहिते ॥" तत्र—एतेषां मध्ये मुक्तकेषु रसबन्धाश्रयेण न दीर्घा वृत्तिः कार्या । अन्यथा तु स्वेच्छा । सन्दानित-कादौ विकटबन्धत्वेन वृत्त्यभावः त्याज्यः । प्रबन्धाश्रिते तु मुक्तकादौ [1] यथोक्तप्रबन्धविषयाः [2] आराध्याः । पर्याबन्धेषु तु दीर्घा वृत्तिः त्याज्या । क्वचित् रौद्रादिविषये दीर्घायामपि वृत्तौ परुषाग्राम्ये वृत्ती त्याज्ये । एकं पुमर्थमुद्दिश्य प्रकारभङ्ग्या भूरिवृत्तान्तवर्णनारूपायां परिकथायां तु इति-वृत्तस्य न्यासे भरः कार्यः, न रसानाम् । मध्यादुपान्ततो वा । ग्रन्थान्तर-प्रसिद्धं इतिवृत्तं यस्यां वर्ण्यते सा खण्डकथा । पूर्णकथा तु प्रसिद्धा । तयोः कुलकादिभूयस्त्वात् दीर्घाऽपि वृत्तिः न विरुद्धा । सर्गबन्धे तु रसा एव आराध्याः इति ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते
काव्यप्रकाशसङ्केते
अष्टमोल्लासः

---

## मधुमती

परिच्छेदो न यत्र स्यात् भवेद्वा लम्बकः क्वचित् ।
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदम् ॥"

इति कथालक्षणमुक्तम् ॥

इति श्रीरत्नपाणिसूनुरविभट्टाचार्यविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां अष्टमोल्लासः समाप्तः

---

1 'श्रितेऽनुमुक्तकादौ'–ग. 2 'विशेषाः'–ग.

काव्यप्रकाशमूलकारिकासु शब्दालङ्कारनिर्णयो नाम

## नवमः उल्लासः

—o—

वक्रोक्त्यलङ्कारः—

यदुक्तमन्यथा वाक्यं अन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा[1] ॥ १ ॥

अनुप्रासालङ्कारः—

वर्णसाम्यं अनुप्रासः छेकवृत्तिगतो द्विधा ।
सोऽनेकस्य सकृत्पूर्वः एकस्याप्यसकृत्परः [2] ॥ २ ॥

---

1 अथ शब्दैकविषयान् अलङ्कारान् प्रचक्ष्महे ।
यावतः प्राहुराचार्याः संक्षेपेण चिरन्तनाः ॥
ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि ।
चित्रं च पञ्चमष्षष्ठोऽप्याभासः पुनरुक्तवत् ॥
यदुक्तमन्यथा वाक्यं अन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ।
द्विविधा श्लेषवक्रोक्तिः सभङ्गाभङ्गभेदतः ।
सालकाननरम्याऽपि क सालानां वनं मयि ।
सभङ्गश्लेषवक्रोक्तिरित्यादौ परिदृश्यताम् ।
धन्वना भाति ते पाणिः न मे पाणौ मरुस्थली ।
अभङ्गश्लेषवक्रोक्तिमित्यादौ सम्प्रचक्षते ।
काले वलद्बलाकेऽपि सखि! नायास्यति प्रियः ।
इत्यादौ काकुवक्रोक्तिं प्रवदन्ति मनीषिणः ।
2 साम्यं व्यञ्जनमात्रस्य वर्णानुप्रास इष्यते ।
अयं च द्विविधः छेकवृत्त्यनुप्रासभेदतः ।
सकृद्व्यञ्जनयोः साम्यं छेकानुप्रास ईरितः ।
वन्दे वन्दारुजनता रक्षादक्षिणमच्युतम् ।
एकस्याप्यसकृत्साम्यं वृत्त्यनुप्रासमूचिरे ।
रामं कामसमाकारं नौमि सीताभनोरमम् ॥

उपनागरिका—परुषा—कोमलाः वृत्तयः—

माधुर्यव्यञ्जकैः वर्णैः उपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा, कोमला परैः [1] ॥ ३ ॥

वृत्तीनामासां मतान्तरानुसारेण नामान्तराणि—

केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः [2] ।

पदगतस्य शब्दानुप्रासस्य द्वैविध्यम्, नामगतस्य तु त्रैविध्यम्—

शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ४ ॥

---

1 उपपूर्वा नागरिका परुषा कोमलेति च ।
त्रिविधैतदनुप्राससंश्रया वृत्तिरिष्यते ।

माधुर्यव्यञ्जकैः वर्णैः उपनागरिकेष्यते ।
असावभङ्गशृङ्गारभङ्गीसारङ्गलोचना ।

ओजःप्रकाशकैः वर्णैः परुषा तु निगद्यते ।
कृत्तमूर्धभिरारब्धं नृत्यं युध्यद्भटं भटैः ।

माधुर्यौजोव्यञ्जकान्यैः वर्णैः भवति कोमला ।
उभयव्यञ्जकैर्वर्णैः कोमलेत्यपरे जगुः ।

बालालीलाकुलालोलनीलनीरजलोचना ॥
कोमलामेव केचित्तु ग्राम्यामाहुर्मनीषिणः ।

2 केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ॥

पदानां सः, पदस्यापि, वृत्तावन्यत्र तत्र वा ।
नाम्नः स वृत्त्यवृत्त्योश्च, तदेवं पञ्चधा मतः [1] ॥ ५ ॥

यमकालङ्कारः, तद्विभागश्च—

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः ।
यमकम्, पादतद्भागवृत्ति तद्यात्यनेकताम् [2] ॥ ६ ॥

---

1 तात्पर्यमात्रभेदे या शब्दार्थपुनरुक्तता ।
स एष लाटानुप्रासः शाब्दो विद्वद्भिरुच्यते ।
वाक्यावृत्तौ पदावृत्तौ नामावृत्तौ च सा त्रिधा ।
त्वयि प्रसन्ने देवेश किममीभिर्गुणैर्मम ।
इत्यत्र वाक्यावृत्त्याऽसौ लाटानुप्रास इष्यते ।
वदनं वरवर्णिन्याः सत्यं तस्याः सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ।
इत्यत्र तु पदावृत्तौ लाटानुप्रास इष्यते ॥
समासैक्येऽपि तद्भेदे ससमासासमासयोः ।
नाम्नः साम्ये भवेल्लाटानुप्रासः त्रिविधः पुनः ।
सुधासुधाकरमहोमहोभरनिधेशयः ।
त्वय्येवास्ते शौर्यलक्ष्मीः लक्ष्मीरपि कुलागता ।
एवं पञ्चविधोऽप्येष लाटानुप्रास ईरितः ।

2 अनर्थका वा भिन्नार्थाः सार्थकानर्थकाश्च वा ।
आवर्त्यन्ते क्रमाद्वर्णाः यदा स्याद्यमकं तदा ।
श्लोकार्धपादतद्भागावृत्त्या तत् स्याच्चतुर्विधम् ।
सत्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषीद्वानलसमस्थितः ॥ (पुनः)
इत्यादौ यमकं ज्ञेयं श्लोकावृत्तिनिबन्धनम् ।
भवन्तं कामदं सोम कलयामलयाहितम् ।
भवन्तं कामदं सोमकलयामलयाहितम् ।
इत्यादौ यमकं विद्यात् अर्धावृत्तिनिबन्धनम् ।
आवृत्तावाद्यपादादेः द्वितीयादौ भिदा नव ।

श्लेषालङ्कारः, तत्र अष्टधा सभङ्गश्लेषः—

वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।
श्लिष्यन्ति, शब्दाः श्लेषोऽसौ अक्षरादिभिरष्टधा [1] ॥७॥

---

द्विधा विभागे पादानां प्रथमाद्यादिमा यदि ।
द्वितीयाद्यादिभागेषु यम्यन्ते स्युर्भिदा दश ॥
प्रथमाद्यन्तिमा भागाः द्वितीयाद्यन्तिमांशगाः ।
भवेयुश्चेत् तदापि स्युः एवमेव भिदा दश ।
एवं द्विधा विभागे तु भेदानां विंशतिर्भवेत् ।
त्रिधा पादविभागे तु त्रिंशदित्यूह्यतां क्रमात् ।
एवमन्तादिकाद्यन्तकादिभेदा भवन्ति च ।
एकैकत्रैव पादे तु नियतानियतक्रमाः ।
आदिमध्यान्तभागाश्चेत् यम्यन्ते स्युर्भिदां शतम् ।
सन्नारीभरणोमायमाराध्यविधुशेखरम् ।
सन्नारीभरणोमायस्ततस्त्वं पृथिवीं जय ।
प्रथमाङ्घ्रेरिहावृत्तिः तृतीयाङ्घ्राविंयं तु दिक् ।

1 अर्थभेदेन भिन्ना यद्येकोच्चारणगोचराः ।
शब्दा निह्नुतभेदाः स्युः तदा श्लेषोऽयमिष्यते ।
अष्टधाऽयं वर्णपदलिङ्गभाषाविभक्तिभिः ।
प्रकृतिप्रत्ययाभ्यां च वचनैरपि भेदकैः ।
सर्वरक्षोदारहेतौ रमे रामे गुहेऽथवा ।
इत्यत्र हेतावित्यत्र श्लेषो वर्णनिमित्तकः ॥
सर्वदोमाधवः पायादिति श्लेषः पदे भवेत् ।
बिभ्रन्नीलोत्पलरुचिं हरिरव्यात् तदक्षि वा ।
इत्यादौ स तु विज्ञेयः श्लेषो लिङ्गनिमित्तकः ।
शं लालयन्तं विशशं कलेशं कलये शिवम् ।
इत्यत्र भाषाश्लेषस्तु विपश्चिद्भिर्विभाव्यताम् ।
सर्वस्वं हर सर्वस्वं त्वं भवच्छेदतत्परः ।

अभङ्गश्लेषालङ्कारः—

भेदाभावात् प्रकृत्यादेः भेदोऽपि नवमो भवेत् [1] ।

चित्रालङ्कारः—

तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता [2] ॥ ८ ॥

---

नयोपकारसांमुख्यमायासि तनुवर्तनम् ।
इत्यादिषु तु विद्वद्भिः विभक्तिश्लेष ईरितः ॥
अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ।
इत्यत्र प्रकृतिश्लेषः मनीषिभिरुदाहृतः ॥
यदि भार्याऽनुकूला स्यात् तदैव भविता सुखम् ।
इत्यत्र प्रत्ययश्लेषः कथितः श्लेषकोविदैः ॥
अभजन्निर्मलां कीर्तिं धर्मस्य प्रभवो नरः ।
इत्यत्र वचनश्लेषः प्राचीनैः समुदाहृतः ।

1 भेदाभावेऽपि वर्णादेः भेदः स्यान्नवमोऽपि च ।
योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥

2 तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।
मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ।
मातानतानां संघट्टः श्रियां बाधितसम्भ्रमा ।
मान्याथसीमा रामाणां शं मे दिश्यादुमादिमा॰॥
इत्यत्र खड्गबन्धस्तु प्राचीनैः समुदाहृतः ॥
सरला बहुलारम्भतरलालिबलारवा ।
वारला बहुलामन्दकरलाबहुलामला ॥
भासते प्रतिभासार रसाभाताहताविभा ।
भावितात्मा शुभावादे देवाभा बत ते सभा ॥
रसासाररसासारसायताक्षक्षतायसा ।
सातावाततवातासारक्षतस्त्वस्त्वतक्षर ॥

शब्दार्थोभयवृत्तिः पुनरुक्तवदाभासालङ्कारः, तद्विभागश्च—

पुनरुक्तवदाभासः विभिन्नाकारशब्दगा ।
एकार्थतेव, शब्दस्य, तथा शब्दार्थयोरयम्[1] ॥९॥

इति नवम उल्लासः

---

1 एकार्थताभ्रान्तिकरानेकशब्दनिबन्धने ।
पुनरुक्तवदाभासं प्रवदन्ति विपश्चितः ॥
भूपितोऽलङ्कृतस्नेहो मृगेष्वास्तेऽद्य राघवः ।
पुनरुक्तवदाभासः सभङ्गस्त्विह दृश्यताम् ॥
स एष राजति गुरुर्धिषणः पृथिवीपतिः ।
पुनरुक्तवदाभासं अभङ्गमिह चक्षते ॥
पाटलारुणदिग्भागाः भान्त्यमी घर्मवासराः ।
पुनरुक्तवदाभासं शब्दार्थगमिहोचिरे ॥

इति श्रीराजचूडामणिदीक्षितकृतकाव्यदर्पणकारिकासु
नवमोल्लासः

काव्यप्रकाशमूलकारिकासु अर्थालङ्कार[1]निरूपणं नाम

## दशमः उल्लासः

—०—

उपमालङ्कारः नावान्तरभेदः—

**साधर्म्यमुपमा भेदे, पूर्णा लुप्ता च, साऽग्रिमा ।**
**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते यथा ॥ १ ॥**

---

1 अथार्थालङ्कृतीः काश्चित् उपमाद्याः प्रचक्ष्महे ।
उपमानन्वयौ पूर्वमुपमेयोपमा ततः ॥
उत्प्रेक्षाथ च सन्देहो रूपकापह्नुती तथा ॥
श्लेषः समासोक्तिरथ द्विविधा च निदर्शना ॥
अप्रस्तुतप्रशंसाऽतिशयोक्तिस्तु ततः परम् ॥
प्रतिवस्तूपमा पश्चात् दृष्टान्तो दीपकं तथा ।
स्यात्तुल्ययोगिता पश्चात् व्यतिरेकस्ततः परम् ।
आक्षेपः कथितः पश्चात् तत उक्ता विभावना ॥
विशेषोक्तियथासङ्ख्यार्थान्तरन्यासपूर्वकः ।
विरोधोऽथ स्वभावोक्तिव्याजस्तुतिसहोक्तयः ।
विनोक्तिः परिवृत्तिश्च भाविकं काव्यलिङ्गकम् ।
पर्यायोक्तमुदात्तं च द्विप्रकारः समुच्चयः ।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ।
व्याजोक्तिः परिसंख्याऽथ प्रोक्ता कारणमालया ।
अन्योन्यमुत्तरं सूक्ष्मं सारस्तद्वदसङ्गतिः ।
समाधिश्च समं पश्चात् विषमं चाधिकं ततः ।
प्रत्यनीकं मीलितं च तत एकावलिः स्मृतिः ।
भ्रान्तिः प्रतीपसामान्यविशेषास्तद्गुणस्ततः ॥
अतद्गुणश्च व्याघातः एषां संसृष्टिसंकरौ ॥
इति क्रमादेकषष्टिः अलङ्कारा इहोदिताः ॥

तद्वत् धर्मस्य लोपे स्यात् न श्रौती तद्धिते पुनः ।
उपमानानुपादाने वाक्यगाऽथ समासगा ॥ २ ॥
वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि, एतद्द्विलोपे क्विप् समासगा ॥ २ ॥
धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।
क्यचि वाद्युपमेयासे त्रिलोपे च समासगा ॥ ४ ॥ [1]

---

1 साधर्म्यमुपमा भेदे, रामः काम इवोज्ज्वलः ।
सामान्यतो द्विधा सेयं पूर्णा लुप्तेति भेदतः ।
उपमावाचकेवादेरुपमानोपमेययोः ।
साधारणस्य धर्मस्याप्युक्तौ पूर्णा निगद्यते ॥
एकद्वित्र्यनुपादाने लुप्ता स्याद्वाचकादिषु ॥
श्रौत्यार्थीति द्विधा पूर्णा ते च वाक्यसमासयोः ।
तद्धिते च भवन्त्यौ द्वे प्रत्येकं त्रिविधे पुनः ॥
श्रौती यथेववाशब्दाद्युपादाने निगद्यते ।
विधुबिम्बं यथा वक्त्रं प्रसन्नं ते स्मितद्युतिः ॥
ज्योत्स्नेव विशदा राम सुधावत् स्वादिमा गिरि ।
आर्थी तु तुल्यसङ्काशनीकाशाद्युपवर्णने ।
दृष्टिरब्जेन तुल्यश्रीः तारकालिसमा द्युतिः ।
पद्मकेसरवत् सान्द्रा यस्यान्तां नौमि जानकीम् ॥
स्यादेकलुप्ता त्रिविधा द्विलुप्ता तु चतुर्विधा ।
त्रिलुप्ता त्वेकरूपेति लुप्ता सामान्यतोऽष्टधा ।
लुप्तधर्मा तथा लुप्तोपमाना लुप्तवाचका ।
इत्येकलुप्ता त्रिविधा विपश्चिद्भिरुदीरिता ।
धर्मवाचकयोर्लोपे तथा धर्मोपमानयोः ।
वर्ण्यवाचकयोस्तद्वद्वाचकावर्ण्ययोरपि ।
चतुर्विधा द्विलुप्तेयं कथिता काव्यवेदिभिः ।
त्रिलुप्तैकविधा धर्मवाचकावर्ण्यलोपतः ॥

ज्योत्स्नेव कीर्तिस्ते शौर्ये त्वत्समानो वनासित ।
पद्माक्ष त्वत्प्रतापोऽयं न केनाप्युपमीयते ।
कान्त्या स्मरीयति भवान् सिंहविक्रम राघव ॥
पूर्णावद्धर्मलुप्ता स्यात् तत्र श्रौते न तद्धिते ।
सीता यथा लता, बाहा शाखेव, सदृशः करः ।
प्रवाळस्य, नखाः पुष्पसदृक्षाः, गुच्छवत्कुचौ ॥
द्विधोपमानलुप्ता तु भवेद्वाक्यसमासयोः ।
महिम्ना तव भृत्योऽपि न केनाप्युपमेयते ।
कुतस्त्वदुपमानस्य वार्ताऽपि रघुपुङ्गव ।
वाऽऽदिलुप्ता समासे सा कर्माधारक्यचोः क्यचि ।
कर्मकर्त्रोर्णमुलि च णिनौ क्विपि च तद्धिते ।
पयोदनीलो यः पुत्रीयति स्वं भजतो जनान् ।
स्वान्तेष्वपास्तदोषेषु तेषां चन्तःपुरीयति ।
वहन् धुरं त्रिजगतां मूलस्तम्भायते च यः ।
ज्वलन्तं तेजसा दीपदर्शं यं वीक्ष्य रावणः ।
हिताहितविमूढात्मा कीटनाशं ननाश सः ।
कोकिलालापिनी यत् स्त्री वत्सला जगदम्बति ।
तं राममभजन् मर्त्यः चञ्चेवानात्मसौख्यवित् ।
धर्मवाचकलुप्ता तु कथिता क्विप्समासयोः ।
क्षणः कल्पति सीतायाः पद्माक्ष विरहे तव ।
धर्मोपमानलुप्ता तु वृत्तौ वाक्ये च तद्धिते ।
नास्ति त्वदुपमानस्य भाजनं भुवने जनः ।
रत्नाकरस्योपमानं स्यात् किमन्यो जलाशयः ।
खरादिभिर्यो योगस्ते यश्च तेषां त्वया वधः ।
तददोऽजाकृपाणीयं अभवद्रघुपुङ्गव ।
विपश्चिद्भिर्वाचकोपमेयलुप्ता क्वचिन्मता ।
भवानव्याजकारुण्यदयारत्नाकरीयति ।
समासगा वाचकोपमानलुप्ता भवेत् क्वचित् ।
समासेऽजाकृपाणीयं इत्यत्रैषा तु दृश्यताम् ।
स्याद्धर्मवाचकावर्ण्यलुप्ता तत्र समासगा ।
मृगाक्ष्या सीतया युक्तं रामं वन्दे घनद्युतिम् ।
एवमष्टविधा लुप्ताः सोदाहरणमीरिताः ।

अनन्वयालङ्कारः—

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे । अनन्वयः—[1]

उपमेयोपमालङ्कारः—

विपर्यासः उपमेयोपमा तयोः ॥ ५ ॥[2]

उत्प्रेक्षालङ्कारः—

सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।[3]

सन्देहालङ्कारः—

ससन्देहस्तु भेदोक्तौ तदनुक्तौ तु संशयः ॥ ६ ॥[4]

---

1 उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
भवेदनन्वयः, राम भवानिव भवान् विभो ॥

2 तृतीयतुल्यव्यावृत्तिफलान्योन्योपमा तु या ।
द्वयोर्व्यक्तिं विना गम्या सोपमेयोपमा मता ॥

3 शङ्के भुजभुजङ्गेन्द्ररसनां ते कृपाणिकाम् ॥
फलहेतुस्वरूपाणामुत्प्रेक्ष्यत्वे त्रिधा तु सा ।
स्रष्टुं त्वां हस्तशिक्षायै धात्रा सृष्टः स्मरो ध्रुवम् ।
त्वामालोक्य ह्रिया मन्ये मदनोऽदृश्यतां गतः ।
मन्ये भवत्प्रतापाग्नेर्धूमरेखां कृपाणिकाम् ।
उत्प्रेक्षाद्योतकाभावे गूढोत्प्रेक्षां विदुर्बुधाः ॥
कृपाणिका तवाभाति वेणिका विजयश्रियः ।

4 ससन्देहस्तु सादृश्यात्संशयो हृदयङ्गमः ।
स्मरो वाऽयं हरो वेति त्वयि संशेरते जनाः ॥
भेदोक्तौ तदनुक्तौ च ससन्देहः द्विधा मतः ।
स्मरः किमेष सोऽनङ्गो दस्रः किं स तु नैककः ।
किमेष मूर्तः शृङ्गारो यद्वा वीरोऽथवाऽद्भुतः ॥

रूपकालङ्कारः—

तद्रूपकमभेदो यः उपमानोपमेययोः ।
समस्तवस्तुविषयं श्रौताः आरोपिताः यदा ॥ ७ ॥

श्रौता आर्थाश्च ते यस्मिन् एकदेशविवर्ति तत् ।
साङ्गमेतत्, निरङ्गं तु शुद्धं, माला तु पूर्ववत् ॥ ८ ॥

नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९ ॥ [1]

---

1 रूपकं तदभेदो यः उपमानोपमेययोः ।
त्वत्खड्गवल्ली शतशः सूते सुमनसो युधि ॥
त्रिधा साङ्गं निरङ्गं च परम्परितमित्यदः ।
समस्तवस्तुविषयमेकशब्दविवर्ति च ॥
इति द्विविधमाख्यातं बुधैः साङ्गन्तु रूपकम् ॥
समस्तवस्तुविषयं श्रौता आरोपिता यदा ।
तेजः प्रवालासिलता यशस्सूनानि सौति ते ।
श्रौता आर्थाश्च ते यस्मिन् एकदेशविवर्ति तत् ।
शमयत्यरितेजोऽग्निं धारया त्वत्कृपाणिका ।
निरङ्गं त्वङ्गिनो यत्र केवलस्य निरूपणम् ।
तच्च केवलमालाभ्यां द्विविधं परिकीर्तितम् ॥
राजहंस कृपाणी ते कृतान्तभ्रुकुटी लता ।
उत्पातकेतुः द्विषतां तथा कालभुजङ्गिका ॥
नियतारोपणोपायः स्यादारोपः परस्य यत् ।
तत्परम्परितं श्लिष्टाश्लिष्टभेदाद् द्विधा च तत् ॥
क्षमाभृत्पक्षविच्छेददम्भोळिस्त्वत्कृपाणिका ।
जयेन्दिराकलापिन्यावासयष्टिर्मणीमयी ॥

अपह्नुत्यलङ्कारः—

प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।[1]

श्लेषालङ्कारः—

श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ॥१०॥[2]

समासोक्त्यलङ्कारः—

परोक्तिः भेदकैः श्लिष्टैः समासोक्तिः—[3]

निदर्शनालङ्कारः—

-निदर्शना । अभवन् वस्तुसम्बन्धः उपमापरिकल्पकः ॥११॥
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।[4]

---

1 शेषोऽयं न भुजो वीर धत्ते यद्धरणीमिमाम् ।

2 स्वैरिणीव कृपाणी ते स्वयं कण्ठेषु गृह्णती ॥
परान्नयत्यहो मोहं सुरतानुभवोचितम् ॥

3 परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिरुदीर्यते ।
वाणौ गृहीता भवता धनुर्वल्ली सुवंशजा ॥
परेषां सन्निधौ याति रघुवीर विनम्रताम् ।

4 अभवन् वस्तुसम्बन्ध उपमार्थो निदर्शना ।
कृतान्तभ्रुकुटीलीलां वहन्तीं त्वत्कृपाणिकाम् ।
पश्यन् युधि रघूत्तंस चुम्बेत् सिंहीमुखं वने ।
स्वस्वहेत्वन्वयस्योक्तिः ह्रियैव च नाऽपरा ।
सर्वत्रापि समा दृष्टिः सद्भिः कार्येति बोधयन् ।
अधिकातंस्वरान् द्विष्टान् स्निग्धांश्च तनुते भवान् ॥

अप्रस्तुतप्रशंसालङ्कारः—

अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ १२ ॥ [1]
कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ॥ १३ ॥
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ [2]

अतिशयोक्त्यलङ्कारः—

निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ १४ ॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।
विज्ञेयाऽतिशयोक्तिः सा [3]

---

1 त्वद्यशोविजितो राम लज्जयेन्दुर्दिने दिने ।
पतन्नपि महाम्भोधौ उन्मज्जत्युडुपो यतः ॥

2 कन्धराः कदळीकाण्डखण्डं खण्डयति द्विषाम् ।
प्रत्यासीदति काकुत्स्थे दिष्ट्या नाकुर्मया श्रितः ।
अन्तःपुरद्रोहगते काकेऽपि शरणागते ।
राघवो दयतेऽस्येति दशास्यमनुजोऽवदत् ।
श्रियः स्थानं स एवेश कटाक्षयति यं भवान् ।
इति स्तुवन् प्राप्तराज्यो ववन्दे तं विभीषणः
स्वयं क्लेशाननुभवन् अपि रक्षेन्निजाश्रितान् ।
सुमहानिति दिग्व्यक्तं एषा रामेण दर्शिता ।
चञ्चरीकेषु सर्वेषु चतुरस्त्वेक एव सः ॥
यो विहायान्यपुष्पाणि पारिजातं समाश्रितः ॥
धन्याः खलु वने वाताः कल्हारसुखशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥

3 सेयं प्रोक्ता विशेषज्ञैः सामान्येन चतुर्विधा ॥
अहो महोभरः कश्चित् अस्पृशद्ध्यानपद्धतिम् ।
यस्यान्यदेव माहात्म्यं अवाङ्मनसगोचरम् ।
तेजस्त्रयी यदि भजेदैक्यं येनोपमीयते ।
प्रागेव यदनुध्यानाल्लीनमेनस्तमोभरैः ॥

प्रतिवस्तूपमालङ्कारः—

प्रतिवस्तूपमा तु सा ।
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥ १५ ॥ [1]

दृष्टान्तालङ्कारः—

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् । [2]

दीपकालङ्कारः—

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ॥ १६ ॥
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् । [3]
मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ॥ १७ ॥ [4]

तुल्ययोगितालङ्कारः—

नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता । [5]

---

1 सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।
इवादेरनुपादाने प्रतिवस्तूपमा मता ।
त्वमेव राम चतुरो निशाचरनिबर्हणे ।
भानुमानेव हि पटुः प्रौढध्वान्तनिवारणे ॥

2 त्वया राजन्वती भूमिः निशा ज्योतिष्मतीन्दुना ।

3 शक्रेण द्यौः त्वया भूमिः शेषेणेन्धे रसातलम् ।
भवान् सत्कुरुते साधून् दीनान् रक्षति हन्त्यरीन् ॥

4 पलायितास्त्वया दृष्टाः तैस्तिहा गिरिगह्वरात् ॥

5 भवान् भवत्कृपाणी च नीलोत्पलसमद्युतिः ।
त्वत्कीर्तेः पुरतो हारा हीराश्चाश मलीमसाः ॥

व्यतिरेकालङ्कारः—

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ॥ १८ ॥ [1]

हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ।
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत् त्रिरष्ट तत् ॥ १९ ॥ [2]

आक्षेपालङ्कारः—

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ २० ॥ [3]

---

1 रामचन्द्रश्च चन्द्रश्च नीलोत्पलसुहृद्द्युती ।
तयोराद्यस्तु निर्दोषः परो दोषाकरः पुनः ॥

2 असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥
अन्यभूपगणस्येव न स्मयोऽस्य महीपतेः ।
असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं महाधृतिः ॥
इयं सुवदना दासीकृततामरसश्रियम् ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥
जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥
अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैषम्यमागतः ।
नित्योदितप्रतापेन त्रियामा मीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ।

3 शृणु देव्याः स्थितिं राम कथयाम्यथवा कथम् ॥
कल्पायते क्षणोऽप्यस्याः प्रपञ्चेन गिरामलम् ॥

विभावनालङ्कारः—

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ।[1]

विशेषोक्त्यलङ्कारः—

विशेषोक्तिरखण्डेषु कारणेषु फलावचः ॥ २१ ॥[2]

यथासङ्ख्यालङ्कारः—

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ।[3]

अर्थान्तरन्यासालङ्कारः—

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ॥ २२ ॥
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ।[4]

---

1 विनाप्यरिपु रोषं ते स्वभावादरुणे दृशौ ॥

2 त्वत्तेजोभानुनोल्लासं न यात्यरिमुखाम्बुजम् ॥

3 जितावौदार्यधैर्याभ्यां त्वया स्वर्द्रुहिमाकरौ ।

4 एकोऽपि शक्तो जयति द्विषतः सुबहूनपि ।
रामेणैकेन निहता नन्वनेके खरादयः ।
ररक्ष प्रणतं रामो द्रोग्धारमपि वायसम् ।
महतां प्रकृतिर्ह्येषा प्रणिपातप्रसादिता ॥
त एव सुखमेधन्ते ये गुणेषु पराङ्मुखाः ।
गुणानामेव दौरात्म्यात् ननु रामो वनं गतः ।
कष्टं वर्तामहे राम वयं दुष्प्रभुसेविनः ।
त एव खलु मोदन्ते ये भवन्तमुपासते ॥

विरोधालङ्कारः—

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ॥ २३ ॥

जातिश्चतुर्भिः जात्याद्यैः विरुद्धा स्याद्गुणस्त्रिभिः ।

क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश ॥ २४ ॥ [1]

स्वभावोक्त्यलङ्कारः—

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् । [2]

व्याजस्तुत्यलङ्कारः—

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ॥ २५ ॥ [3]

---

1 विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।
राम कोदण्डदण्डस्ते कुटिलोऽपि गुणोज्ज्वलः ।
जातिश्चतुर्भिर्जात्याद्यैः विरुद्धा स्याद्गुणस्त्रिभिः ।
क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ॥
पुन्नागोऽपि हरिर्वीतमदगन्धोऽस्खलद्गतिः ।
राजाऽपि भास्वान् वैदेह्यां शक्तोऽपि श्यामलाकृतिः ।
कीर्तिमानपि निष्पङ्कानाश्रितान् कुरुतेतराम् ॥
कमलोल्लासकलनालालनोऽपि कलानिधिः ।
कदर्थयत्यरिकुलं चक्रोल्लासं दिशन्नपि ।
गोत्राभिवृद्धिं तनुते जिष्णुरप्येष राघवः ।
महासेनोऽपि सर्वज्ञः श्रीपतिश्चतुराननः ॥

2 जानुभ्यां चङ्क्रमन् वेगात् मुहुरावृत्तकन्धरम् ।
पश्यन् नन्वायतीं धात्रीं रामः श्यामः श्रियेऽस्तु नः ॥

3 स्तुवन्ति सन्तो राम त्वां परदाररतं कथम् ।
स्वस्त्रीसम्भोगरसिकान् निन्दन्ति च परान् कथम् ॥

सहोक्त्यलङ्कारः—

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । [1]

विनोक्त्यलङ्कारः—

विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः ॥ २६ ॥ [2]

परिवृत्त्यलङ्कारः—

परिवृत्तिर्विनिमयः योऽर्थानां स्यात्समासमैः । [3]

भाविकालङ्कारः—

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ॥ २७ ॥
तद्भाविकम्—[4]

काव्यलिङ्गालङ्कारः—

—काव्यलिङ्गं हेतोर्वाक्यपदार्थता । [5]

---

1 त्वयाऽखण्डि धनुश्शैवं दुर्मदानां मदैस्समम् ।

2 नानुध्यायन्ति ये रामं तेषां व्यर्थतमा जनिः ।
धन्यास्त एव ये रामं नान्यं देवमुपासते ॥

3 मारुतिस्त्वदयां लेभे दिशन् देव्याः शिरोमणिम् ।
दिवं दत्त्वा त्वयारिभ्यः तेभ्य आदीयते मही ।
दिव्यां तनुं त्वदरयः यान्ति जीर्णतनुत्यजः ॥

4 प्रत्यक्षा इव यद्भूतभाविनो भाविकं तु तत् ।
वनं यियासतः स्मेरं पश्याम्यद्यापि ते मुखम् ।
अच्छत्रमपि राम त्वां तथा छत्रावृताननम् ।

5 काव्यलिङ्गं भवेद्यत्र हेतोर्वाक्यपदार्थता ।
प्रियाऽस्मि भार्गवजितो हतोऽसि कुणपाशन ॥
किमिच्छेद्भिन्नमत्तेभपञ्चाननवधूं मृगः ॥

पर्यायोक्तालङ्कारः—

पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ॥ २८ ॥ [1]

उदात्तालङ्कारः—

उदात्तं वस्तुनः सम्पत्, महतां चोपलक्षणम् । [2]

समुच्चयालङ्कारः—

तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ॥ २९ ॥
समुच्चयोऽसौ । स त्वन्यो युगपद्या गुणक्रियाः ॥ [3]

पर्यायालङ्कारः—

एकं क्रमेणानेकस्मिन् पर्यायः, अन्यस्ततोऽन्यथा ॥ ३० ॥[4]

अनुमानालङ्कारः—

अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः । [5]

---

1 नमो महिम्ने भ्रूभङ्गलीलागाधीकृताब्धये ॥

2 सैषाऽयोध्यापुरी दिव्यरत्नप्राकारतोरणा ।
यत्र भद्रासनासीनः जगद्रक्षति राघवः ॥

3 औदार्यशौर्यगाम्भीर्यधैर्यैः ख्यातिं परां गते ।
ध्याते रघूद्वहे चेतः प्रहृष्टं च प्रसादि च ।
नृत्यत्युन्माद्यति कथा जगन्मोहं धुनोत्यघम् ॥

4 प्रागर्णवं ततश्चन्द्रं त्वद्वचोऽद्याश्रिता सुधा ।
विलम्बिन्यरुणा दृक्के प्रसन्ना विनतेऽम्बुधौ ॥

5 भुजारणौ प्रतापाग्निः ज्ञायते तेऽसिधूम्यया ॥

परिकरालङ्कारः—

विशेषणैर्यत्साकूतैः उक्तिः परिकरस्तु सः ॥ ३१ ॥[1]

व्याजोक्त्यलङ्कारः—

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ।[2]

परिसंख्यालङ्कारः—

किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते ॥ ३२ ॥
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ।[3]

कारणमालालङ्कारः—

यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ॥ ३३ ॥
तदा कारणमाला स्यात्—[4]

अन्योन्यालङ्कारः—

क्रियया तु परस्परम् । वस्तुनोर्जननेऽन्योन्यम् ।[5]

---

1 नाहं शेषोऽस्मि न विधिः स्तवानि त्वद्गुणान् कथम् ॥

2 विद्विषो भवतो राम हिमाचलगुहा गृहाः ।
शैत्याभिनीत्या गूहन्ते कम्पं त्वत्स्मृतिसम्भवम् ।

3 करणीयं किमापत्सु स्मरणीयो रघूद्वहः ।
किमाकाङ्क्ष्यं नृणां रामदास्यं नेन्द्रादिवैभवम् ।
कौटिल्यं राम ते चापे चिन्ता भक्तेषु नो धने ॥

4 यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात् पुण्यैश्चेतो विशुध्यति ।
चेतश्शुद्ध्या रामभक्तिः तया कैवल्यमाप्यते ॥

5 वस्तुनोऽर्जननेन्योन्यं क्रियया तु परस्परम् ।
भवता शोभते सीता भवानपि तया विभो ॥

उत्तरालङ्कारः—

उत्तरश्रुतिमात्रतः ॥ ३४ ॥
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ।
असकृद्यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम् ॥ ३५ ॥ [1]

सूक्ष्मालङ्कारः—

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥ ३६ ॥ [2]

सारालङ्कारः—

उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः । [3]

असङ्गत्यलङ्कारः—

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ॥ ३७ ॥
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः । [4]

समाध्यलङ्कारः—

समाधिः सुकरं कार्यं कारणान्तरयोगतः ॥ ३८ ॥ [5]

---

1 प्रश्नस्य यत्रोन्नयनमुत्तरात्तत्र वा सति ।
असकृद्यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम् ॥
वत्स सेव्यो रघुपतिः किं पृच्छसि पुनःपुनः ।
को लाभो भक्तिरेकान्ता कस्मिन् देये रघूद्वहे ॥

2 संवीक्ष्योद्भिन्नरोमाञ्चे वनेचरकुमारके ।
वने भवद्द्विषत्कन्या साकूतं मुखमावृणोत् ॥

3 कार्तवीर्यो बली तस्माद्भार्गवोऽस्माद्रघूद्वहः ॥

4 त्वयि धून्वत्यसिलतां स्वर्द्रुभ्यः पतितं सुमैः ।

5 जिघांसो रावणं तस्य प्राहिणोद्वासवो रथम् ॥

समालङ्कारः—

समं योग्यतया योगो यदि सम्भावितः क्वचित् ।[1]

विषमालङ्कारः—

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ॥ ३९ ॥
कर्तुः क्रियाफलावाप्तिः नैवानर्थश्च यद्भवेत् ।
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिया ॥ ४० ॥
क्रमेण च विरुद्धे यत् स एष विषमो मतः ॥[2]

अधिकालङ्कारः—

महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ॥ ४१ ॥
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ।[3]

प्रत्यनीकालङ्कारः—

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ॥ ४२ ॥
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ।[4]

---

1 सीता रतिः स्मरो रामः सङ्गमः सदृशोऽनयोः ॥
अन्यस्त्समं विनानिष्टमिष्टाप्तिः तत्समुद्यमात् ।
जले तप्त्वा तपः पद्मं भजते त्वन्मुखश्रियम् ॥
कार्यकारणसाधर्म्यं तृतीयं तु समं विदुः ।
स्थाने तारापतिं द्वेष्टि राम त्वत्प्रभवं यशः ॥

2 क्वाहमल्पवचा राम क्व चासंख्या भवद्गुणाः ।
त्वया जयेच्छया युध्यन् दशास्यः सानुजो हतः ।
आताम्रात् त्वत्पदाम्भोजात् आसीद्गङ्गा कथं सिता ।
त्वमामोदयसे लोकान् त्वत्तेजः तापयत्यरीन् ॥

3 अहो कियद्वृत्तमनो यत्र भाति भवान् विभुः ।
जगन्ति यत्र विध्यण्डे तत्र भाति न ते यशः ॥

4 द्विषो हतास्त्वया भ्रातुं भिन्दन्ति त्वत्कुलोद्वहम् ॥

मीलितालङ्कारः—

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ॥ ४३ ॥
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ।[1]

एकावल्यलङ्कारः—

स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ॥ ४४ ॥
विशेषणतया यत्र वस्तु सैकावली द्विधा ।[2]

स्मरणालङ्कारः—

यथानुभवमर्थस्य दृष्टे तत् सदृशे स्मृतिः ॥ ४५ ॥
स्मरणम् ।[3]

भ्रान्तिमदलङ्कारः—

भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने ।[4]

---

1 स्वतोऽरुणे विभोर्नेत्रे नालक्षि प्रतिबोदयः ।
अङ्के देव्याः शयानस्य रोमाञ्चिततनोर्विभोः ॥
रक्षसां गर्जति विले न वीरो लक्षितो रसः ॥

2 राम एव धनुष्पाणिः तदेव दृढशिञ्जिनि ।
सैव घम्भीरनिर्घोषा स एव रिपुमोहदः ॥
न शस्यते स लोकेषु यत्र नैव गुणाः शुभाः ।
न ते गुणा ये काकुत्स्थपदभक्तिविनाकृताः ॥

3 स्मरणं प्राग्गृहीतस्य दृष्टे तत्सदृशे स्मृतिः ।
प्रावृषेण्ये घने दृष्टे रामं मे गाहते मनः ॥

4 भ्रान्तिमान् गन्यसंवित्तिः अन्यस्मिन् साम्यदर्शनात् ।
रामं वीक्ष्य घनभ्रान्त्या ववृतुः शिखिनो वने ॥

प्रतीपालङ्कारः—

आक्षेप उपमानस्य प्रतीपमुपमेयता ॥ ४६ ॥
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् । [1]

सामान्यालङ्कारः—

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ॥ ४७ ॥
ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् । [2]

विशेषालङ्कारः—

विना प्रसिद्धमाधारं आधेयस्य व्यवस्थितिः ॥ ४८ ॥
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ।
अन्यत्प्रकुर्वतः कार्यं अशक्यस्यान्यवस्तुनः ॥ ४९ ॥
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः । [3]

तद्गुणालङ्कारः—

स्वमुत्सृज्य गुणं योगात् अत्युज्ज्वलगुणस्य यत् ॥ ५० ॥
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः । [4]

---

1 वसन्त कन्तुना सत्याः स्पृष्टा किं त्वयि जाग्रति ।
इन्दोर्दास्येऽप्यनर्हस्य भवदास्योपमा कुतः ॥

2 न वेत्तीशोऽपि कैलासं जगति त्वाद्यशोवृते ॥

3 प्राचां मान्धातृमुख्यानां राम! त्वय्यासते गुणाः ॥
अन्तः बहिः पुरः पश्चात् राम! दिक्षु च दृश्यसे ॥
नमता त्वां विरिञ्च्याद्या नतास्ते यत्त्वदंशकाः ॥

4 कैलासत्यञ्जनगिरिः भवतो यशसां भरैः ॥

अतद्गुणालङ्कारः—

तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ॥ ५१ ॥ [1]

व्याघातालङ्कारः—

यद्यथा साधितं केनाप्यपरेण तदन्यथा ।
तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥ ५२ ॥ [2]

संसृष्टिः—

सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः । [3]

सङ्करः—

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ॥ ५३ ॥ [4]
एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः । [5]
स्फुटमेकत्रविषये शब्दार्थालङ्कृतिद्वयम् ॥ ५४ ॥

---

1 खेलन्नपि सुवर्णाद्रौ त्वद्यशो धवलच्छवि ॥

2 बाहुना हरिणा सृष्टान् क्षत्रियान् बाहुनैव यः ।
क्षयं निनाय विजितः भवता सोऽपि भार्गवः ॥

3 स्मरस्मरहरेष्वासखण्डने पण्डितं मनः ।
लिम्पन्तं सुधयेवाशाः ज्योत्स्नागौरैर्यशोभरैः ।
मनोभिरामं श्रीरामं नौमि नीलघनद्युतिम् ॥

4 तमोभिदस्तु मे राम त्वत्पादनखचन्द्रिका ।

5 स्फुरन्नखांशुकिञ्जल्कं जयति त्वत्पदाम्बुजम् ।

व्यवस्थितं च तेनासौ त्रिरूपः परिकीर्तितः ।[1]

निगमनम्—

एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ ५५ ॥

(आहत्य १४२ कारिकाः ॥)

इति श्रीमम्मटकृतकाव्यप्रकाशमूलकारिकासु
दशमः उल्लासः

---

1 द्वयोः समप्रधानत्वेऽप्येके सङ्करमूचिरे ।
उच्चस्तनकुलक्ष्माभृत्पाण्डरीकरणक्षमाम् ॥
कीर्तिं तव दिशां राम मन्ये श्रीखण्डचर्चिकाम् ॥

एवं व्यतानि श्रीराजचूडामणिमखीन्दुना ।
काव्यदर्पणनामाऽसौ प्रबन्धो विदुषां मुदे ॥

(आहत्य–६५० कारिकाः)

इति श्रीराजचूडामणिदीक्षितकृतकाव्यदर्पणमूलकारिकासु
दशमः उल्लासः

अथ शब्दालङ्कारनिर्णयो नाम

नवमः उल्लासः

—o—

गुणविवेचने कृते अलङ्काराः प्राप्तावसराः इति सम्प्रति [1] शब्दालङ्कारानाह—

यदुक्तमन्यथा वाक्यं
अन्यथा[2]ऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया
सा वक्रोक्तिस्तथा द्विधा ॥

'तथे'ति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ।

---

सङ्केतः

लोकोत्तरोऽयं सङ्केतः कोऽपि कोविदसम्मतः ।
शब्दस्याडम्बरो यत्र भूषणत्वेन निश्चितः ॥ [3]

यदुक्तमिति । अन्येन अन्यथोक्तं वाक्यं अन्येन **अन्यथा योज्यते** इत्यन्वयः । श्लेषेणेति काक्वेति च हेतौ तृतीया । **तथा** श्लेषकाकुभ्याम् ॥

मधुमती

अथ प्राप्तावसरतया अलङ्कारान् निरूपयिष्यन्, आदौ प्राधान्यविवक्षया शब्दालङ्कारान् निरूपयति—शब्देति ।

यदुक्तमिति । अन्यतात्पर्येणोक्तं **वाक्यं** यत् अर्थान्तरे **योज्यते सा वक्रोक्तिः** । अन्यथा योजने च कापि **श्लेषः**, कापि **काकुः** निमित्तमित्यर्थः ।

**तथेति** । तथा च यत्पुरस्कारेण योजनं तदेव वक्रोक्तेः भेदकमित्यर्थः ॥

---

1 पूर्वोक्तं उपकुर्वन्तीत्यादिकं तु सामान्यलक्षणम्, इदं तु विशेषलक्षणमिति बोध्यम् । वक्रोक्ति–अनुप्रास–यमक–श्लेष–चित्र–पुनरुक्तवदाभासाः षट् अत्र शब्दालङ्काराः । 2 अन्यार्थघटनयेत्यर्थः । 3 अयं श्लोकः उल्लासान्ते दृश्यते–ग.

तत्र पदभङ्ग[1]श्लेषेण यथा—

नारीणां अनुकूलमाचरसि चेत् जानासि, कश्चेतनः
वामानां प्रियमादधाति[2] ? हितकृन्नैवाबलानां भवान् !

---

## सङ्केतः

**तत्रेति** । पदानां भङ्गाभङ्गाभ्यां या श्लेषवक्रोक्तिः तत्रेत्यर्थः ।

**नारीणामिति** । चेज्जानासि तन्नारीणामनुकूलमाचरसि इति योगः । **नारीणां** स्त्रीणाम्, भङ्गे तु न अरीणाम् । वामाः स्त्रियः

## मधुमती

ननु—

"धन्या केयं स्थिता ते शिरसि ? शशिकला, किं नु नामैतदस्याः ?
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ?
नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुः,
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥"

इत्यादौ वक्रोक्तिरधिका स्यात् । श्लेषकाक्वन्यतराभावात् । न चेयं न वक्रोक्तिः, अर्थान्तरयोजनस्यापि सत्त्वात् वक्रोक्तित्वावश्यम्भावात् इति चेत्— न । अत्रापि शब्दश्लेषसत्त्वात् । अर्थभेदेन शब्दभेदः इत्यभ्युपगमात् । तदिहापि सर्वनाम्नां अनेकार्थवाचिनां सुरसरित्परत्वाभिप्रायेण प्रयुक्तानां चन्द्रकलापरतया योजनम्, तथा 'नारीं पृच्छामि' इत्यत्र नारीविषयकप्रश्नपरतया प्रयुक्तस्य तदुद्देश्यकप्रश्नपरतया योजनमिति श्लेषवक्रोक्तित्वमेवास्येति ध्येयम् ।

**नारीणा**मिति स्त्र्यभिप्रायेण प्रयुक्तस्य न अरीणां इति योजितम्, **वामाना**मिति पदं प्रतिकूलार्थतया प्रयुक्तं स्त्रीरूपार्थे योजितम् । **अबलापदं**

---

1 'भङ्गे'–क. 2 'वामानां हितमातनोति'–क.

युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः ?
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ?[1] ॥३५१॥

अभङ्गश्लेषेण यथा—

अहो ! केनेदृशी बुद्धिः दारुणा तव निर्मिता ?
त्रिगुणा श्रूयते बुद्धिः, न तु दारुमयी क्वचित्[2] ॥३५२॥

---

## सङ्केतः

प्रतिकूलाश्च । हितकृत् हितं करोति कृन्तति च । **बलं** शक्तिः **बलः** दैत्यश्च । तदभावेन प्रसिद्धात्मा[3] दुर्बलः बिडौजाश्च । **मतं** अभीष्टम् । अत्र अभङ्गभङ्गाभ्यां उक्तिप्रत्युक्ती ॥

दारुणेति प्रथमान्ततया रौद्रा, तृतीयान्ततया काष्ठेन । **केन** काष्ठेनेति योगः । सत्त्वरजस्तमांसि गुणाः ॥

## मधुमती

स्त्रीरूपेऽर्थे, कृदिति पदं करणेऽर्थे च प्रयुक्तं बलाभावकृन्तनयोः योजितम् । बलाभावपदं च बलशून्यार्थे प्रयुक्तं असुरविशेषाभावे योजितम् । अत्र च सर्वत्र पदभङ्गश्लेषनिबन्धना योजना द्रष्टव्या ॥

अभङ्गश्लेषे तदुदाहरति—**अहो केनेति** । **दारुणा** इति प्रथम-तृतीययोः श्लेषः ॥

---

1 (१) सखे! स्त्रीणां हितमाचरसि चेत् तदा त्वं विदग्धः । (२) (न-अरीणा-मिति छेदेन) को वा ज्ञानवान् प्रतिकूलानां प्रियमादधाति ? (१) (वामानां=स्त्रीणा-मिति कृत्वा) तर्हि त्वं स्त्रीणां हितकारी न भवसि । (२) (बलरहितानां हितकर्तन-कारी इति कृत्वा) दुर्बलानां हितकर्तनं किं युक्तम् ? (१) (बलनामासुरविनाशिनः शक्रस्येति कृत्वा) शक्रेच्छाविघातं कर्तुं भवतः सामर्थ्यं कुतः ? ॥ इति संवादः । अत्र 'नारीणा'मिति, 'अबलाना'मिति च सभङ्गश्लेषवक्रोक्तिः । 2 (१) परोपद्रवणैकप्रवणा तव बुद्धिः एवं क्रूरा केन निर्मिता ? (२) (दारुणा इत्यस्य काष्ठखण्डेनेति कृत्वा) बुद्धिः खलु सत्त्वरजस्तमोरूपगुणत्रयात्मिकैव श्रूयते, न तु क्वचिदपि दारुमयी इति संवादः । 3 'अप्रसिद्धात्मा'—ग.

काक्वा यथा—

गुरुजनपरतन्त्रतया [1]
दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते
नैष्यति सखि! [2] सुरभिसमयेऽसौ ॥ ३५३ ॥

---

## सङ्केतः

काक्वेति । काकुशब्दव्युत्पत्तिः तृतीयोल्लासे कृता । वाक्यस्य साकांक्षत्व-निराकांक्षत्वाभ्यां काकुः द्विधा—निराकांक्षा साकांक्षा चेति । यस्मात् वाक्यात् यादृशः सङ्केतेनार्थः प्रतीयते, न तादृगेव, किन्तु न्यूनाधिकः, प्रमाणबलेन निर्णययोग्यः तद्वाक्यं साकांक्षम् । अन्यथा तु निराकांक्षम् । वक्तुराकांक्षा वाक्ये उपचर्यते । सा च प्रस्तावबशात् निर्णीयते । विशिष्ट-विषयता चास्याः प्रस्तावादेव वाच्या । गुरुजनेत्येतद्वाक्यं नायिकया आगमननिषेधायोक्तं कदाचित् । तत्सख्या तु काकुप्रयोगेण विधिपर्यन्तत प्रापितम्[3] ।

विषयोऽपि—अर्थान्तरं, तदर्थगत एव विशेषः, तदर्थाभावो वा इति त्रिधा । तत्र—

'देशस्सोऽयमरातिशोणितजलैः यस्मिन् ह्रदाः पूरिताः'

इत्यत्र साकाङ्क्षकाकुप्रभावात् ततोऽप्यधिकं कुरुत इति अर्थान्तरे गतिः ॥

## मधुमती

गुरुजनेति । अत्र आगमनाभावपरतया प्रयुक्तस्य वाक्यस्य काक्वा आगमननियमे योजना कृता ॥

---

1 'गुरुपरतन्त्रतया बत दूरं'—क. 2 'सखि! नैष्यति'—क. 3 गुरुजनेत्यादि नास्ति—घ.

## सङ्केतः

"स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः ।
तदात्मज इहाङ्गदः प्रहित एव[1] सौमित्रिणा
क स क स दशानने ननु निवेद्यतां राक्षसाः ॥"

इत्यत्र 'तदात्मज इहाङ्गदः' इति साकाङ्क्षया काका स्वगता वालिपुत्रत्वोचिता विशेषाः अर्प्यन्ते ॥

'निर्वाणवैरदहनाः प्रशमादरीणाम्'

इत्यत्र साकाङ्क्षया काकुः भवनाभावमाह । अत्र[2]भवन्तीति वचनोच्चारणं तु अर्थे सम्भावनां विदधत् अभावस्य निषेधात्मनः विषयं भवनलक्षणं अर्पयति । न भवन्त्येवेत्यर्थः ॥

"अभिप्रायवान् पाठधर्मः काकुः ।
स नालङ्कारी स्यात् ।" इति यायावरीयस्तु स्थवीयः[3] । शब्दस्पृष्टत्वेन अर्थान्तरप्रतीतिहेतुत्वात् । गुणीभूतव्यङ्ग्यभेद एवायम् । यदाह ध्वनिकारः—

"अर्थान्तरगतिः काका या चैषा परिदृश्यते ।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥"

इति । तन्मते काकुवक्रोक्तिः नालङ्कारः । यथा च पाठधर्मत्वं काकोः तथा भरतात् ज्ञेयम् ।

'वस्तुस्वाभाव्यात् काकुः श्रुतमर्थमनादृत्य अर्थान्तरं वक्ति' इत्येके ॥

---

1 'एष'–घ. 2 'इत्यत्र'–ग. 3 'इति तु वायावरीयः'–ग. 'इति तु स्थवीयः'–घ.

# वर्णसाम्यं अनुप्रासः ।

## स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं–वर्णसाम्यम् ।

### सङ्केतः

अन्ये तु एवमाहुः—इह यैषा[1] प्रथमेन संवित्स्पन्दनेन[2] प्राणोल्लासनया वर्णादिविशेषविहीना वाक् जन्यते, सा नादरूपा सती हर्षादिचित्तवृत्तिं विधिनिषेधाद्याशयं वा तत्कार्यलिङ्गतया[3] तादात्म्येन वा गमयति। दृश्यते हि मृगश्वादेरपि नादश्रुतौ भी-रोष-शोकादिप्रतिपत्तिः। नादात् चित्तवृत्त्याद्यनुमानमिति भावः। ये त्वेते वर्णविशेषाः ते तन्नानारूपसामान्यात्मकवाक्तन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षाः। त एव अन्यत्राप्यभिप्रेते अन्यथाऽपि प्रयोक्तुं शक्याः। अत एव दृष्टव्यभिचाराः[4]। नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयः नान्यथा कर्तुं पार्यते इति अनन्यथासिद्धः अन्यथासिद्धं शब्दार्थं बाधत एव[5]। यथा 'भीरु! न मे भयम्' इत्युक्ते[6] अन्यप्रकारतां वाक्यार्थस्य विशेषणार्पणेन विधत्ते॥

वामनस्तु—'सादृश्याल्लक्षणा वक्रोक्तिः' इति वक्रोक्तिलक्षणमाह॥

**वर्णेति**॥ **वर्णस्य** एकस्यानेकस्य घटपटेत्यादिशब्दरूपरहितस्य **साम्यं** सादृश्यम्। **स्वरेति**। स्वरव्यञ्जनसादृश्ये यमकं स्यात् इति वर्ण-

### मधुमती

**वर्णसाम्यमिति**। एकस्य द्वयोः बहूनां वा वर्णानां साम्यमित्यर्थः। तावन्मात्रं यमकेऽपि गतम्, अत आह—**स्वरेत्यादि**। **स्वरवैसादृश्येऽपि** अज्वैसादृश्येऽपीत्यर्थः। यमकस्य तु स्वरसादृश्य एव संभवः 'सा पुनश्श्रुतिः' इत्यभिधानात्। पर्यवसितमाह—**व्यञ्जनसदृशत्वमिति**। एवं च लाटानु-

1 'यैषां'–ग. 2 'तु स्पन्दनेन'–घ. 3 'तत्कार्यं लिङ्गतया वा'–ग. 4 'दृष्टाभिचारः'–ग. 5 'एव वा'–ग. 6 'यथोक्तं भीरु नमे भयमिति'–ग. 'भीरुर्नमे भयमिति'–घ.

रसाद्यनुगतः[1] प्रकृष्टः न्यासः—अनुप्रासः ॥

## छेकवृत्तिगतो द्विधा ।

छेकाः-विदग्धाः । वृत्तिः-नियतवर्णगतः रसविषयो व्यापारः ॥ गत इति । छेकानुप्रासः वृत्त्यनुप्रासश्च ॥

किं तयोः स्वरूपम्? इत्याह—

## सोऽनेकस्य सकृत्पूर्वः ।

अनेकस्य-अर्थात् व्यञ्जनस्य, सकृत्-एकवारं सादृश्यं छेकानुप्रासः । उदाहरणम्—

---

### सङ्केतः

साम्यमुक्तम् । एकस्यैव पुनःपुनः निबन्धसाम्यं आवृत्ति[2]रित्यर्थः । **प्रकृष्ट इति** । अदूरान्तरित इति शेषः ॥

**पूर्वः** छेकानुप्रासः । **अनेकस्येति** । अयं भावः—यत्र **अनेकं** व्यञ्जनं द्वित्र्यादिव्यञ्जनसमुदायः **सकृत्** एकवारं आवर्त्यते तत्र छेकानुप्रासः

### मधुमती

प्रासे नाव्याप्तिः, तत्रापि व्यञ्जनसाम्यसत्त्वात् । अनुप्रासपदव्युत्पत्तिमाह—**रसेति** । **रसविषयो व्यापारः** योजनाविशेष इत्यर्थः । **गत इतीति** । तथाच द्वन्द्वोत्तरवर्तितया गतपदस्य उभयत्रान्वयः इति भावः ॥

---

1 'रसाद्यनुगुणः'–क. 2 'निबन्धः साम्यवृत्ति'–ग.

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्[1] ॥३५४॥

## एकस्याप्यसकृत्परः ॥७९॥

एकस्य, 'अपि'शब्दात् अनेकस्य[2] व्यञ्जनस्य द्विः बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ॥ तत्र—

## माधुर्यव्यञ्जकैः वर्णैः उपनागरिकोच्यते[3] ।
## ओजःप्रकाशकैः तैस्तु[4] परुषा ।

उभयत्रापि प्रागुदाहृतम्—'अनङ्गरङ्गे'त्यादि, 'मूर्ध्नामुद्वृत्ते'त्यादि[5] च ॥

---

### सङ्केतः

इति । ततोऽरुणेति । अत्र रु रि,[6] न्द न्दी, ण्ड ण्डु इत्याद्यनेकव्यञ्जनं सकृदावृत्तम् । कामपरिक्षामकामिनी इत्यत्र तु कामेत्यनेकस्य व्यञ्जनस्य द्विरावृत्तत्वात् वृत्त्यनुप्रासः ।

एकस्येति । असमुदायरूपस्य । केवलस्येति यावत् । तस्य असकृत् बहुकृत्वः सादृश्ये चारुत्वम्, अनेकस्य तु द्विः बहुकृत्वो वा ॥

तत्र वृत्त्यनुप्रासे । उभयत्रापि उपनागरिकापरुषयोः । प्राक्—

### मधुमती

ततोऽरुणेति । अत्र नकारदकारयोः णकारडकारयोश्च संयुक्तत्वेनानेकयोः सकृत् एकवारं आवृत्त्या छेकानुप्रासः इत्यर्थः ॥

वृत्तिविभागमाश्रित्य अनुप्रासं विभजते—तत्रेति । तथा च उपनागरिकापरुषे वृत्तिविशेषौ, तद्गततया अनुप्रासोऽपि भिन्न इत्यर्थः ॥

---

1 वाल्मीकेरयं श्लोकः इति केचित् । 2 'अनेक'–ख. 3 'केष्यते'–क.
4 'तैश्च'–ख. 5 अनङ्गेत्यादि क्वचिन्नास्ति–ख. 6 'ण इ'–ग.

## कोमला परैः ॥८०॥

परैः-शेषैः। तामेव केचित् ग्राम्येति वदन्ति ॥

उदाहरणम्—

अपसारय घनसारं,
 कुरु हारं दूर एव, किं कमलैः ?
अलमलमालि ! मृणालैः,
 इति वदति दिवानिशं बाला[1] ॥३५५॥

---

### सङ्केतः

'अनङ्गरङ्गे'त्यादौ, 'मूर्ध्नामुद्वृत्ते'त्यादौ च। अत्र—अनङ्गरङ्गेत्यत्र एकस्य गकारस्य बहुवारमावृत्तिः ॥

**ग्राम्येति**[2]नाम्नि तात्पर्यम्। न तु दुष्टत्वे। न हि सर्वं ग्राम्यं दुष्टमेव। ग्राम्यमपि किमपि रम्यं भवतीति नामान्तरतत्परता[3] खलु ॥
**अपसारयेति**। अत्र वर्णसमुदायस्य बहुवारमावृत्तिः ॥

### मधुमती

**परैः** शेषैः। माधुर्यौजोव्यतिरिक्तस्थले इति भावः। एवं च—यत्र माधुर्यौजसी तत्र यद्यपि प्रसादोऽस्त्येव, तथापि तद्व्यञ्जकैरेव तस्यापि व्यञ्जनम्। यत्र तु हास्याद्भुतभयानकेषु प्रसादमात्रं तत्र कोमलेत्यर्थः। यद्वा—माधुर्यौजोव्यञ्जकवर्णरचनाभिन्ना वर्णरचना कोमलेत्यर्थः। तथा च—सर्वत्र रसे प्रसादो व्यज्यते। अत एव 'अपसारय घनसारं' इत्यत्र विप्रलम्भे कोमलामुदाजहार, न हास्यादिषु। तथा च—कोमला सर्वसाधारणी, उपनागरिकापरुषे तु नियते इति द्रष्टव्यम् ॥

---

1 अयि सखि! कर्पूरं दूरतः कुरु, इत्याद्यर्थः। (कुट्टिनीमते १०२)।
2 'अग्राम्येति। ग्राम्येति'–घ. 3 'नाभ्यन्तरतत्परतां'–ग.

**केषांचिदेताः वैदर्भी-**
**प्रमुखाः रीतयो मताः ।**

एताः तिस्रः वृत्तयः, वामनादीनां मते वैदर्भी-गौडी-पञ्चाल्याख्याः रीतयः मताः [1] ॥

**शाब्दस्तु लाटानुप्रासः**
**भेदे तात्पर्यमात्रतः ॥८१॥**

---

### सङ्केतः

**रीतयः इति** । एतेन रीतयो वृत्त्यात्मिकाः इति फलति ।

**शाब्दस्त्विति** । न तु वार्ण इति भावः । **तात्पर्यमात्रतः इति** यमकव्यवच्छेदार्थम् । तात्पर्यं—अन्यपरत्वम् [2] । तेनैव भेदोऽत्र, न तु

### मधुमती

वामनादीनां मतमाह—**केषाञ्चिदिति** । तत्र उपनागरिका **वैदर्भी**, परुषा **गौडीया** कोमला **पाञ्चाली**, इति द्रष्टव्यम् । तत्र शृङ्गारादौ वैदर्भी, वीरादौ गौडी, रसानां प्रकाशरूपतया प्रतीतिस्थगने च तद्बाधात् सर्वत्र पाञ्चाली इति द्रष्टव्यम् ॥

लाटानुप्रासं लक्षयति—**शाब्दस्त्विति** । यद्यप्यत्र शब्दार्थयोः पुनर्वचनात् अर्थालङ्कारताऽपि संभाव्यते । तथापि पर्यायान्तरेण तदर्थाभिधाने नायमिति शब्दान्वयव्यतिरेकानुविधायितया शाब्द इत्युक्तम् । अत एव चात्र कल्पितपदत्वमपि नास्तीति प्रागुक्तम् । यमके तु एकार्थत्वाभावात्

---

1 'रीतय उच्यन्ते'–क, 2 'अन्यतरपरत्वम्'–ग.

**शब्दगतः अनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्र-भेदात्, लाटजनवल्लभत्वाच्च[1] लाटानुप्रासः। एषः पदानुप्रास इत्यन्ये।**

## पदानां सः।

**सः इति लाटानुप्रासः। उदाहरणम्—**

**यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।**
**यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य[2] ॥३५६॥**

---

### सङ्केतः

शब्दार्थस्वरूपेण। **अन्वयमात्रभेदादिति**। अनन्वये शब्दैक्यं औचित्यात् आनुषङ्गिकम्। न तु नियतम्। ततश्च—तत्र हंस इव हंस इति, हंसो मरालः इति वा कृते न दोषः। अत्र तु शब्दार्थयोरैक्यमेव ॥

एष च पञ्चधेति तान् क्रमेणाह—**पदानामिति**। **यस्येति**। अत्र पूर्वार्धे **दवदहनः** विधेयः, **तुहिनदीधितिः** अनुवाद्यः। एतदेव उत्तरार्धे विपरीततया ज्ञेयम्। यथा वा—

### मधुमती

नातिव्याप्तिः, तदिदमाह—**अन्वयमात्रेति**। न पदार्थभेदादिति भावः। ननु पदानुप्रासेऽतिव्याप्तिः अत आह—**एष इति**। तथा च संज्ञामात्र-भेदात् नातिव्याप्तिरिति भावः ॥

अमुं विभजते—**पदानामिति**। अत्र बहुवचनेन वाक्यावृत्ति-मभिप्रैति ॥ **यस्येति**। अत्र वाक्यावृत्तिः पदार्थसाम्यं च। उद्देश्यविधेय-

---

1 'त्वात्'–क. 2 कान्तायाः असन्निधौ चन्द्रो दवाग्निः, तत्सन्निधौ तु दवाग्निरपि चन्द्रः इत्यर्थः। उत्तरार्धेऽपि 'जस्य न' इत्येव पाठ.–ख. अस्मिन् पाठे दवदहनो नेत्यन्वयः।

**पदस्यापि ।**

**अपिशब्देन सः इति समुच्चीयते । उदाहरणम्—**

**वदनं वरवर्णिन्याः तस्याः सत्यं सुधाकरः ।**

**सुधाकरः क नु पुनः कलङ्कविकलो भवेत्** [1] **॥ ३५७॥**

---

## सङ्केतः

'न्यायशालिनि भूपाले सङ्गृही नावसीदति ।

विपरीते पुनस्तत्र सङ्गृही नाऽवसीदति ॥'

पूज्यानामिदम् । स्थानद्वयेऽप्यत्र बहूनां पादानां सकृदावृत्तिरुक्ता । असकृत्तु [2] स्वं यथा—

'सन्ति सन्तः किं न सन्ति सन्ति चेत्तन्निवेद्यताम् ।

किं कुप्यन्ति न कुप्यन्ति ते कुप्यन्ति किमीदृशाः [3] ॥'

पदस्य सकृदावृत्तिर्यथा—**वदनमिति** । अत्र **वदनं सुधाकर**त्वेनोक्त्वा पुनर्निषेधः न युक्तः इति चेत्—न । वर्णनीयस्य अत्यन्तोत्कर्षाय स्वोक्तस्यापि तिरस्कारः न दूषणम्, प्रत्युत भूषणमेव । यद्वा—'तस्याः सत्यं वक्तुं

## मधुमती

भावः परं ज्ञेयः । अत्र च उद्देश्यविधेयव्युत्क्रमनिर्देशरूपाविमृष्टविधेयांशो न दोषः । एवंविधानुप्रासस्य निरवकाशत्वेन बलवत्त्वात् ॥

**अपिशब्देनेति** । समुच्चीयते संबध्यते इत्यर्थः । 'पदानां सः' इत्यत्रत्यस्यैव तत्समुच्चेयत्वात् । **वदनमिति** । अत्र **सुधाकरः** पूर्वार्धे विधेयः, उत्तरार्धे तु उद्देश्यः इति तात्पर्यभेदात्=अन्वयभेदात् पदतदर्थयोरभेदाच्च ॥

---

1 पूर्वार्धोक्तं रूपकं निषेधत्युत्तरार्धेन । 'कलङ्करहितः'–क. 2 'असकृत्त्वं'–घ. 3 'कतीदृशाः'–घ.

वृत्तावन्यत्र तत्र वा ।
नाम्नः स वृत्त्यवृत्त्योश्च ।

**एकस्मिन् समासे, भिन्ने वा समासे,[1] समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम् । उदाहरणम्—**

**सितकरकररुचिरविभा**
**विभाकराकार! धरणिधर! कीर्तिः ।**

---

**सङ्केतः**

सुधाकरः, न तु इन्दुः सुधाकरः'[2] इति काका व्याख्येयम् ॥
असकृद्यथा—

'दुःखाभावः सुखं नेह सुखं[3] यत्तन्न वा सुखम् ।
सुखं तत्परमार्थेन यद्विहाय सुखं सुखम् ॥'

स्वमिदम् ।

**वृत्तौ** इति **एकस्मिन् समासे, अन्यत्र तत्र वा** इति **भिन्ने वा समासे, वृत्त्यवृत्त्योः** इति **समासासमासयोः** इति च ज्ञेयम् । **सितकरेति** ।

**मधुमती**

प्रकृतानुप्रासभेदान्तरमाह—**वृत्तावन्यत्रेत्यारभ्य वृत्त्यवृत्त्योश्चेत्यन्तेन** । **नाम्न इति** । यद्यपि—केवलप्रातिपदिकस्य प्रयोगाभावात् न तस्यावृत्तिः, तथापि—लुप्तविभक्तिकस्यैव प्रयोगेण तावन्मात्रपुरस्कारेण **प्रातिपदिकस्ये**-त्युक्तम् । **सितकरेति** । अत्र च **करकरेति** एकस्मिन् समासे, **विभाविभेति**

---

1 'समासे' इति नास्ति–क. 2 नत्वित्यादि नास्ति–ग. 3 'दुःखं'–ग.

पौरुषकमला कमला
साऽपि तवैवास्ति नान्यस्य[1] ॥ ३५८ ॥

## तदेवं पञ्चधा मतः ॥८२॥

---

### सङ्केतः

अनेकस्य नाम्नः सकृदावृत्तिरेषा। असकृदावृत्तिः स्वयमूह्या। एकस्य नाम्नः सकृदसकृदावृत्तिर्यथा—

विश्वसृष्टिकरो विश्वपालको विश्वघातकः।
विश्वज्ञो विश्वविख्यातो देवदेवः पुनातु वः ॥

इदं स्वम् ॥ 'नेत्रेऽब्जनेत्रे तव' इत्यादौ तु विभक्त्यादौ वाच्या[2]पौन-

### मधुमती

भिन्ने समासे कमलाकमलेति समासासमासयोश्चेति द्रष्टव्यम्।

यद्यपि—'भेदे तात्पर्यमात्रतः' इत्यभिधानेन शब्दतदर्थाभेदे सति अयं अनुप्रासः इति लभ्यते। न चात्र सोऽस्ति, कमलापदेन लक्ष्म्याः, कमलपदेन च पद्मस्याभिधानेन अर्थभेदात् शब्दभेदाच्च। न च पौरुष-कमलपदं बहुव्रीहिसिद्धं लक्ष्मीवाचकमेवेति वाच्यम्। तस्य अनावृत्तेः, एकदेशभूतस्य च अनर्थकत्वात् इति। तथापि—यथा सार्थानर्थकशब्दावृत्तौ यमकत्वम्, तथा लाटानुप्रासत्वमपि। न चैवं यमकाभेदः, एकार्थत्वाभाव-नियतसमानाकारशब्दावृत्तिः यमकम्, तदनियततथाविधशब्दावृत्तिः लाटानुप्रासः इति भेदात्। 'भेदे तात्पर्यमात्रतः इत्यस्यापि अत्रैव तात्पर्यात् ॥

उपसंहरति—**तदेवमिति**। एकानेकपदगततत्वेन पदानुप्रासस्य द्वौ

---

1 हे सूर्यवच्चण्डप्रताप! राजन्! शुभ्रचन्द्रिकावदाह्लादिका कीर्तिः परक्रमसम्यत् तदतुलमैश्वर्यं च तवैव, नत्वन्यस्येत्यर्थः। 2 'वाक्या'–घ,

**अर्थे सत्यर्थभिन्नानां वर्णानां**
**सा पुनःश्रुतिः । यमकम् ॥**

'समरसमरसोऽयम्' इत्यादौ एकेषां अर्थवत्त्वे,

---

**सङ्केतः**

रुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्यात् लाटानुप्रास एव । यमकस्येव अस्यापि प्रायेण भेदाः स्युः ॥

**वर्णानामिति** । स्वरसहितानामिति शेषः । तथा 'सूत्रे लिङ्गवचने अतन्त्रे' इति न्यायात् वर्णस्य वर्णयोश्च पुनःश्रुतौ यमकत्वम् । परं–वर्णस्य पादा[1]न्तरगतत्वेन पुनःश्रुतौ वैचित्र्याभावात्, तस्मिन्नेव पादे[2] पुनःश्रुतिः कार्या । **पुनःश्रुतिः** आवृत्तिः ॥ वर्णस्य पादादिमध्यान्तेष्वावृत्तिर्यथा—

'नानाशं शङ्करो मम ।' इति

वर्णयोः वर्णानां च तस्मिन्नेव पादे पादान्तरे वा आवृत्तिः स्वयमूह्या । यमौ द्वौ यमजातौ, तत्प्रतिकृतिः **यमकम्** । तेन एकस्याक्षरस्य द्वयोः बहूनां वा अन्यत् सदृशं निरन्तरं सान्तरं वा शोभाजनकं अलङ्कारः ।

**मधुमती**

भेदौ । एकसमास—भिन्नसमास—समासासमासगतत्वेन प्रातिपदिकानुप्रासस्य त्रयो भेदाः एवं च मिलित्वा पञ्चधेत्यर्थः ॥

यमकालङ्कारं लक्षयति—**अर्थे सतीति** । **वर्णानां** इति बहुवचनेन

'विविधधववनानानागगर्धधनाना'

इत्यादावनुप्रासत्वमेव । न तु यमकत्वमित्युक्तं भवति । स्वरसादृश्येऽपि

---

1 'पदा'–ग. 2 'पदे'–ग.

**अन्येषां अनर्थकत्वे 'भिन्नार्थानां' इति न युज्यते वक्तुमिति, 'अर्थे सति' इत्युक्तम् ॥ 'सा' इति [1]। 'सरो रसः' इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ॥**

---

## सङ्केतः

**अनर्थकत्व इति ।**

'मधुपराजिपराजितमानिनी—
जनमनस्सुमनस्सुरभिश्रियम् ।'

इत्यादौ द्वयोरनर्थकत्वे वेति शेषः । न च तदर्थ एव शब्दः पुनः प्रयुज्यते, पौनरुक्त्यप्रसङ्गात् इति । सामर्थ्यलब्धेऽप्यर्थभिन्नत्वे, यत्र स एवार्थः पुनर्वक्तुमिष्टः स्यात् 'अहो मध्यमहो मध्य'मित्यादौ, बन्धबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते----

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।'

इत्यादौ, तच्च पौनरुक्त्यदोषाभावात् यमकत्वं प्रसज्येतेति **अर्थभिन्नानां**

## मधुमती

लाटानुप्रासाङ्गीकारात् । **अर्थे सति** इत्यस्य व्यावर्तनीयमाह **समरेति** । इदमुपलक्षणम्—'कुरवकारवकारणतां ययुः' इत्यादौ अनर्थकशब्दावृत्तावपि यमकसत्त्वात् । एकार्थत्वाभावनियतसमानाधिकरणशब्दावृत्तिर्यमकमित्यर्थः । तेन विशिष्टव्यतिरेकात् भिन्नार्थकयोः सार्थकानर्थकयोः अनर्थकयोर्वा शब्दयोरावृत्तौ न दोषः । अत एव—'अत्र लक्षणद्वये तात्पर्यम् । इदं तु सार्थकमात्रयमकलक्षणम्' इति भास्करमतं अपास्तम् । अननुगमात्, अनुगमे वा तस्यैव लक्षणत्वापत्तेः ॥ न च—यथाश्रुतमूलस्वरसात् अनर्थकशब्दावृत्तौ

---

1 'सतीत्यभ्युक्तम् । सा श्रुतिः'–क.

पादतद्भागवृत्ति तद्यात्यनेकताम्॥ ८३ ॥
प्रथमः द्वितीयादौ (३), द्वितीयः तृतीयादौ (२)

---

## सङ्केतः

इत्युक्तम् । तथा—दन्तौष्ठ्यौष्ठ्य–वकारवकारादिवर्णभेदे, लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे संयुक्तयोः सजातीययोः वर्णयोः वास्तवे विशेषे यमकबन्धो न विरुध्यते । लोकप्रतीत्या तत्रापि श्रुतितुल्यत्वात् । तत्र स्वं यथा—

'यथा नश्यन्ति विघ्नानि यथा नश्श्यन्ति न द्विषः ।
तथा कुरु गुणालम्ब ! कृपालं वस्सदा मनः [1] ॥'

अत्र 'नश्यन्ति' इत्यत्र एकत्र एकः शकारः, अन्यत्र द्वौ । तथा एकत्र 'लम्वः' ओष्ठ्यः, अन्यत्र 'लंवः' दन्त्योष्ठ्यः । 'गुणालम्वे'त्यत्र लकारः लघुप्रयत्नतरः । कृपां लातीति 'कृपालं' इत्यत्र तु अलघुप्रयत्नतरः । तथा नकारणकाराभ्यां [2] अस्वरमकारनकाराभ्यां विसर्गभावाभावाभ्यां [3] च न

## मधुमती

लाटानुप्रास एव न यमकमिति वाच्यम् । "पौरुषकमला कमला" इत्यनुरोधेन 'भेदे तात्पर्यमात्रतः' इत्यस्य अन्यथाकरणम्, 'कुरवकारवकारणतां ययुः' इत्यनुरोधेन 'अर्थे सति' इत्यादेर्वा अन्यथाकरणम्, इत्यस्य नियन्तुमशक्यत्वात् । एवं च उभयत्रापि यथाविवक्षित एवार्थः इति द्रष्टव्यम् ॥

यमकं विभजते—पादेति । अत्र पादावृत्तौ—(१) द्वितीयस्य प्रथमतुल्यत्वे मुखम् । (२) तृतीयस्य तत्तुल्यत्वे सन्दंशः । (३) चतुर्थस्य

---

1 'मतः'–ग. 2 'स्योः'–घ. 3 'वयोः'–घ.

तृतीयः चतुर्थे, (१) प्रथमः त्रिष्वपि (१), इति सप्त।
प्रथमो द्वितीये तृतीयश्चतुर्थे (१), प्रथमश्चतुर्थे द्वितीयस्तृतीये (१) इति द्वे[1]। तदेवं पादजं नवभेदम्।

---

### सङ्केतः

विरोध इत्यन्ये। यथा—

'अप्रमाणमप्रमानं अङ्गीकुर्वन् गुणव्रजम्।
देवदेव! समक्षोऽसि[2] साधूनामध्वनि व्रजन्॥

इत्यादि। लोकादन्यदप्यूह्यम्।

**तदेवं पादजं नवभेदमिति**। प्रथमस्य क्रमेण—द्वितीय-(मुखं) तृतीय—(सन्दशः) चतुर्थैः (आवृत्तिः) पादैः सह, द्वितीयस्य तृतीय—(गर्भः) चतुर्थाभ्यां (सन्दष्टकं), तृतीयस्य चतुर्थेन (पुच्छं) च सादृश्ये षड्भेदाः। चतुष्पादसादृश्ये (पङ्क्तिः) सप्तमो भेदः। अन्ये च द्वेयमके (युग्मकं, परिवृत्तिः) इति नवेति॥ अत्र '**प्रथमस्त्रिष्वपी**'ति भेदवर्जं पादस्य सकृदावृत्त्या भेदाः ज्ञेयाः। तेन—प्रथमो द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतुर्थयोः, एवं द्वितीयः तृतीयचतुर्थयोः इति चतुर्भेदी सत्यपि

### मधुमती

तथात्वे **आवृत्तिः**। (४) द्वितीयस्य तृतीयतुल्यत्वे **गर्भः**। (५) चतुर्थस्य तत्तुल्यत्वे **सन्दष्टकम्**। (६) चतुर्थस्य तृतीयतुल्यत्वे **पुच्छम्**। (७) सर्वस्य प्रथमतुल्यत्वे **पङ्क्तिः** इति सप्त शुद्धभेदाः॥ **प्रथमो द्वितीय इति**। तथा च—(८) मुखपुच्छयोर्योगे **युग्मकम्**। (९) गर्भावृत्त्योर्योगे

---

1 'प्रथमश्चतुर्थे द्वितीयस्तृतीय इति, प्रथमो द्वितीये तृतीयश्चतुर्थे इति द्वे'–क.
2 'समाक्षासि'–ग.

अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे ॥ (२)=११.

द्विधा विभक्ते पादे प्रथमादिपादादि[1]भागः पूर्ववत् द्वितीयादि[2]पादादिभागेषु, अन्तभागोऽन्तभागेषु इति

---

## सङ्केतः

न गणिता ॥ **अर्धेति** द्वे अप्यर्धे सदृशे । **श्लोकेति** द्वावपि श्लोकौ सदृशौ इत्यर्थः ॥

**प्रथमपादादीति** । प्रथमपादस्यादिभागः स तथा । **द्वितीयादयश्च** ते पादाश्च तेषां **आदिभागाः** तेषु यथा । **प्रथमपादादिभागः** इत्यत्र आदिशब्दः प्रथमादिपादादिभागः इत्येवंरूपतया ज्ञेयः । ततः ग्रन्थो युज्यते । अन्यथा तु दशभङ्गी नोतिष्ठते । यद्वा आदिशब्दं[3] विनाऽपि पुर उक्तस्य इति शब्दस्य प्रकारार्थता ज्ञेया । ततश्च ग्रन्थोक्तं युज्यते इति ज्ञेयम् ॥

## मधुमती

**परिवृत्तिः** इति द्वौ सङ्कीर्णभेदौ । एवं नव ॥ **अर्धावृत्तिरिति** ॥ अनयोश्च यथासङ्ख्यं (१०) **समुद्गकं** (११), **महायमकं** इति संज्ञा ॥

अथ पादभागावृत्तौ यमकप्रकारानाह—**द्विधेति** । **प्रथमादीत्यादि**-पदेन द्वितीय-तृतीय-चतुर्थपादपरिग्रहः । तथा च प्रथमपादाद्यभागः द्वितीय-तृतीय-चतुर्थपादाद्यभागेषु क्रमेण यम्यते इति त्रिधा (३) । द्वितीयपादाद्य-भागश्च तृतीयचतुर्थपादाद्यभागयोः यम्यते इति द्विधा (५) । तृतीयपादाद्य-भागश्च चतुर्थपादाद्यभागे यम्यते इति एकः (६) । प्रथमपादाद्यभागः

---

1 'प्रथमपादादि'–क.  2 'द्वितीयतृतीयादि'–ख.  3 'यद्वा दशत्वं'–ग.

विंशतिर्भेदाः[1]। श्लोकान्तरे हि नासौ[2] भागावृत्तिः।
त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत् ॥

## सङ्केतः

**श्लोकान्तरे हीति**। अत्र हि भागस्य आवर्त्यमानत्वे न वैचित्र्यमिति आवृत्तिः नेष्टा, न तु असम्भवादेव ॥ **चत्वारिंशदिति**। द्वित्रिचतुष्खण्डपाद[3]भेदानां केवलानामेव मेलने उक्तसंख्या युज्यते। द्विकादियोगे तु वर्धतेऽपि ॥

## मधुमती

त्रिष्वप्याद्यभागेषु युगपत् यम्यते इत्यपरः (७)—एवं सप्त शुद्धभेदाः ॥ प्रथमपादाद्यभागतुल्यः द्वितीयपादाद्यभागः, तृतीयपादाद्यभागतुल्यः चतुर्थपादाद्यभागः, एतयोः सङ्करः एकः (८), प्रथमपादाद्यभागतृतीयपादाद्यभागयोः तुल्यत्वे द्वितीयपादाद्यभागचतुर्थपादाद्यभागयोश्च तुल्यत्वे सङ्करः अपरः (९) इति आहत्य नव। अर्धावृत्त्या समं दश (१०)। एवमेव अन्त्यभागोऽन्त्यभागेष्विति आहत्य विंशतिर्भेदाः (२०) ॥ ननु अर्धावृत्तिवत् कुतोऽत्र श्लोकावृत्तिर्नोक्ता? इत्यत आह—**श्लोकेति**। तथा च भागावृत्तौ भागनिबन्धना भागिनः श्लोकस्य आवृत्तिर्न भवत्येवेति भावः। **त्रिखण्डे इति**। एवं च श्लोकपादानां त्रिधा विभागे त्रिंशत्त्वम् (३०)। चतुर्धा विभागे तु चत्वारिंशत्त्वमित्यर्थः (४०) ॥

---

1 'विंशतिभेदाः'–क. 2 'न'–ख. 3 'द्विचतुष्पाद'–ग.

**प्रथमपादादिगतान्त्यार्धादिभागः द्वितीयपादादिगते, आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसारेण[1] अनेकभेदम्—अन्तादिकम्, आद्यन्तिकम्,[2] तत्समुच्चयः,**

---

## सङ्केतः

**प्रथमपादादीति।** प्रथमपादादिगतान्त्यार्धरूपः, आदिशब्दात् आदि-मध्यान्तरूपः भागः इत्यर्थः। **अन्तादिकमिति।** अत्र अन्तशब्देन अग्रेतनः अन्तादिकनामा यमकभेदः 'भीमो भीमसेनः' इति न्यायेन गृह्यते। ततः अन्तादिकादिकमिति लभ्यते। यद्वा—अन्तादिकादिकं इति पाठः। यद्वा—यमकस्य जातिनामेदम्। अग्रतस्तु व्यक्तिनामानि॥ **तत्समुच्चय**

## मधुमती

इदानीं सङ्कीर्णभेदानाह—**प्रथमेति।** अत्रापि आदिशब्देन द्वितीय-तृतीय-चतुर्थपरिग्रहः। **अन्त्यार्धादीत्यादिपदेन** आद्यमध्यमयोः। एवमग्रेऽपि। **अन्वर्थतेति।** यम्यते नियम्यते आवृत्त्येति अनुगतार्थतेत्यर्थः॥ तथाहि—यदा प्रथमपादगतान्त्यभागः द्वितीयादिपादाद्यभागे यम्यते तदा अन्त्य आदौ यम्यत इति **अन्त्यादिकम्।** यदा तृतीयपादगतादिभागः चतुर्थपादान्त्यभागे यम्यते तदा **आद्यन्तिकम्।** यदा तु उभयमप्येकत्र पद्ये यम्यते तदा द्वयोः

---

1 'नुसरणेन'–क.  2 'अन्त्यादिकम्, (अन्तादिकादिकम्) आद्यन्तिकम्'–क.

मध्यादिकम्, आदिमध्यम्, अन्तमध्यम्, मध्यान्तिकम्, तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् ॥

तदेतत् काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम् ॥

## सङ्केतः

**इति** । तयोः अन्तादिकाद्यन्तकयोः समुच्चयः योगः इत्यर्थः । **तेषां** मध्यादिकादीनाम् । आद्यादीत्यादिशब्दात् मध्यान्तभागानां, मध्यादीत्यादिशब्दात् अन्तादिभागेषु ।

**गडुभूतमिति** । काव्यवपुषः रसोपचयस्य भङ्ग[1]हेतुत्वात् यमकं गडूयते इति भावः ॥

## मधुमती

**समुच्चयः** । एवं पूर्वपादमध्यभागस्य उत्तरपादाद्यभागे यमनात् **मध्यादिकम्** । आद्यभागस्य मध्यभागे यमने **आदिमध्यकम्** । आदिभागस्य मध्ये यमनात् आदिमध्यान्तयोः एकत्र **समुच्चयः** । अन्त्यभागस्य मध्यभागे यमने **अन्त्यमध्यकम्** । मध्यभागस्य अन्त्यभागे यमने **मध्यान्तिकम्** । तयोरेकत्र **समुच्चयः** । सर्वेषां एकत्र समुच्चयश्चेति चत्वारः **समुच्चयाः** ॥ एकपादस्यैव भेदानाह—**तथेति** । **अनियते चेति** । एतच्च पादभेदेऽपि द्रष्टव्यम् ।

नन्वेवं प्रभूततमभेदसत्त्वे तेषामवश्यं वक्तव्यत्वे च तावतामप्यभिधानं युक्तमेव इत्यत आह—**गडुभूतमिति** । गडुः ग्रन्थिः ग्रहो वा । गडुरिव गडुः । चमत्कारानाधायकः इत्यर्थः ॥

---

1 'चयभङ्ग'—ग.

दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोमायस्ततस्त्वं पृथिवीं जय[1] ॥ ३५९ ॥

---

## सङ्केतः

**सन्नारीति** । **सतीः नारीः बिभर्ति** पुष्णाति या **उमा** तां **याति** स तथा । **सन्ना अरीणां इभा** यत्र तथाविधः **रणः** यस्य सः । **अमायः** निर्दम्भः ॥ **आराध्येति** । सदन[2]क्रियापेक्षया पूर्वकालता । तत इति प्रथमान्तं ततस्त्वं वा[3] । अत्र प्रथमः पादः तृतीये पादे यमितः ॥

## मधुमती

अत्र किञ्चिदुदाहर्तुं प्रवृत्तः प्रथमं सन्दंशमुदाहरति—**सन्नारीभरण इति** । **सतीः** साध्वीः **नारीः बिभर्ति** रक्षति या **उमा** तां **अयते** यातीति **सन्नारी**भरणोमायः तं इति **विधुशेखर**विशेषणम् । **सन्नाः** अवसन्नाः नष्टाः **अरीणां इभाः** हस्तिनः यत्र, ईदृशः **रणः** यस्य इति, **अमायः** मायारहितः इति च द्वयं **त्वं** इत्यस्य विशेषणम् । यद्यपि दलयोः विभक्तिभेदात् वैषम्यम् । तथापि विभक्तेः अविवक्षितत्वात् तद्विनाकृतसमुदायवृत्त्या यमकत्वमिति बोद्धव्यम् ॥

---

1 साध्वीजनरक्षणपरायणायाः उमायाः वल्लभं शिवमाराध्य निर्मायस्तिस्सन् रणे शत्रुहस्तिनाशनपूर्वकमिमां पृथिवीं जयेत्यर्थः । (रु. का. अ. ३-४) ।
2 'सन्न'–घ. 3 'ततस्त्वं' च'–घ.

विनायमेनो नयताऽसुखादिना
विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरं
महाजनोदी यतमानसादरम्[1] ॥ ३६० ॥

### सङ्केतः

**विनेति** । **एनः** अपराधं **विना** स्वस्थानं[2] **नयता** प्रापयता **असु-खादिना** प्राणविनाशिना । **विना** विशिष्टपुरुषयुक्तेन **यमेन**[3] **ऊनयता** हानिं कुर्वाणेन **सुखादिना** सुखभक्षकेण **अयं महाजनः अदीयत** अखण्ड्यत । **अरं** शीघ्रं **मानसात्** मानसमाक्रम्य । 'मानसादि'ति पञ्चमी 'प्रासादात् प्रेक्षते' इतिवत् कर्मणि । महान्—उत्सवान् अजन्ति—क्षिपन्ति इति[4] **महाजाः** खलाः, तान् **नुदतीत्येवंशीलः** । **यतमानानां** सोद्यमानां **सादं** खेदं **राति** इति, क्रियाविशेषणमिदम् । तथा **यमेन मानसं** आक्रम्य **महाजनः**

### मधुमती

युग्मकमुदाहरति—**विनेति** । **एनः विना अयं महाजनः यमेन अरं** शीघ्रं **मानसात् अदीयत** अखण्ड्यत । कीदृशेन यमेन ? **विना** विहग-तुल्येन, **असु-खादिना** प्राणभक्षकेण **सुखादिना ऊनयता** सुखहानिं कुर्वता, तथा **नयता** स्वस्थानं प्रापयता । **यतमानानां** उद्योगिनां **सादं** अवसादं **रातीति** यतमानसादरमिति क्रियाविशेषणम् । महाजनः कीदृशः ? **महाजनोदी** महान्—उत्सवान् उत्साहान् वा अजन्ति—क्षिपन्ति ये

---

1 लोकेऽस्मिन्—परोत्कर्षासहिष्णूनां दुर्जनानां घातकः पापलेपरहितोऽप्ययं महाजनः, स्वभावत एव सुखहानिं कुर्वता विहगवत् वेगेन स्वस्थानं प्रापयता जगत्प्राण-भक्षकेण यमेन, आत्मानं रक्षितुमिच्छतां महान् विषादः यथा भवति तथा निपत्य, प्राणैर्वियोजितः हन्त ! इत्यर्थः । (रु. का. अ. ३-१५) । 2 'विना महाजनं'–ग. 3 'प्राणविनाशिना विशिष्टपुरुषयुक्तोऽयम् । एनो'–घ. 4 'महानजन्ति'–ग.

स त्वारम्भरतोऽवश्यमबलं विततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥ ३६१ ॥

---

## सङ्केतः

अखण्ड्यत । यथा सोद्यमाः खिद्यन्ते इत्यर्थः । अत्र प्रथमो द्वितीये, तृतीयश्चतुर्थे च पादे, पादो यमितः ॥

**स त्वेति** । **सः** प्रक्रान्तः महापुरुषः पुनः **आरं** शत्रुसमूहं, दुर्बलं दीर्घाक्रन्दं भरात् **अवशे** वर्तमानं **सर्वकालं रणं** प्रापयामास । **अलसं अवान्** अगच्छन्[1] । शीघ्रगामी इत्यर्थः । **अस्थीनि तस्यति** विच्छिनत्तीति अस्थितः । **सत्त्वेन ये[2] आरम्भाः** तेषु **रतः**, सर्वथा **आश्रितं तरुत्वव्यसनं**

## मधुमती

दुर्जनाः तान् नुदतीत्यर्थः । यद्वा—महेषु—उत्सवेषु, अजनोदी—छाग-घातकः इत्यर्थः ॥

अथ महायमकमुदाहरति—**स त्वेति** । **स तु** वर्ण्यमानः **आरं** अरिसमूहं **भरतः** भारात् **अवश्यं** अनायत्तं **अबलं** बलरहितं **विततारवं** विस्तृतसिंहनादं **सर्वदा** सर्वक्षणं **रणं** सङ्ग्रामं **अनैषीत्** प्रापयामास । कीदृशः ? **अलसं** अर्थात् युद्धपराङ्मुखं मन्दं यथातथा **अवान्** अगच्छन्, तथा **अस्थितः** अस्थीनि तस्यति उपक्षिपतीत्यर्थः । रौद्र इति यावत् । 'तसु उपक्षये' इति धात्वनुसारात् ॥ अथावृत्तस्यायमर्थः—**सत्त्वेन यः आरम्भः** तत्र **रतः**, **अवश्यं** निश्चितं **अवलम्बितं तारवं** तरुत्वं येन तत् तथा ।

---

1 'अवान्, गच्छन्'–ग. 2 'तस्य च्छिनत्ति सत्त्वे नये'–घ.

सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः [1] ॥ ३६२ ॥
अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् [2] ॥ ३६३ ॥

---

### सङ्केतः

येन आरेण सर्वेषां यो दारणः मानः तं इच्छति । दवाग्निना समं स्थितं यस्य ॥

अनन्तेति । अत्र द्विधा पादविभागे अन्तर्भागे अन्तर्भाग आवृत्तः । वेधाः यां न वेद न वेत्ति । या च नम्रे मानवे दयां कृपां भजते इति ॥

### मधुमती

सर्वदारणः यो मानः तं इच्छतीति—सर्वदारणमानैषी । तथा दवानलसमस्थितः दावाग्नितुल्यः इति ॥

पदार्थावृत्तिप्रकारेषु सन्दंशमुदाहरति—अनन्तेति । यां अनन्तमहिमव्याप्तजगतीं दुर्गां वेधाः अपि न वेद, या च प्रणते मानवे दयां भजते । अस्य—

'तमांसि ध्वंसमायान्ति यस्याः स्तुत्यादरेण वः ।
तस्याः सिद्ध्यै श्रियां मातुः कल्पन्तां पादरेणवः ॥'

इतितत्रत्य पञ्चमश्लोकेनान्वयः ॥

---

1 सात्त्विककर्मानुष्ठाननिरतः सर्वशत्रुविदारणः इति मानाभिलाषी दवाग्निवत् अहितसन्तापकारी बलसगातिरहितः शत्रुषु रौद्रश्च सोऽयं राजा, बलहीनं अथाप्यवशं प्रवृद्धतरुषण्डवत् अनम्रं अरिसमूहं सर्वदा नैरन्त्येन अतिशयितहाहाशब्दाक्रन्दं यथातथा रणभूमिं प्रापयामासेत्यर्थः । (रु. का. अ. ३-१८-५) 'श्रिततारवं'–क. क्वचित्तु अयं श्लोकः द्विर्न पठितः–ख. 2 (देवीशतके–१) ।

यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवेहितां शिवे हितां स्मराश्रितां स्मरामि ताम्[1] ॥३६४॥
सरस्वति![2] प्रसादं मे स्थितिं चित्त[3]सरस्वति ।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति![4] ॥ ३६५ ॥

---

## सङ्केतः

**यदानत इति । यस्याः आनतः** प्रणतः **अयस्य** शुभावहस्य **दैवस्य दानतः** दानात् न्यायातिक्रमं न गच्छत्यसौ **शिवं ईहितं** यस्याः तां, **शिवे** हरे **हितां** अनुकूलां वराभिलाषां **स्मरेण आश्रितां** ध्यायामि **ताम्** ॥ अत्र पादमध्य एव आद्यन्तकम् ॥

**सरस्वतीति** । हे वाणि! **चित्ताब्धौ** स्थिते! **मे प्रसादं सर** गच्छ, **स्थितिं स्वति** सुष्ठु अतिशयेन[5] **कुरु** । **क्षेत्रमेव कुरुक्षेत्रं** तत्र **सरस्वति**

## मधुमती

आद्यन्तकयमकं अव्यपेतं यथा—**यदानत इति** । यस्या आनतः **यदानतः** । **अय-दानतः** शुभावहविधिदानतः, **नयात्ययं** नीतिनाशम्, **नः याति, शिवे** कल्याणे **हितां शिवेहितां** शिवं–शोभनं ईहितं=चेष्टा यस्या ताम्, शिवेन ईहितां वा, **स्मराश्रितां** मन्मथपूर्णाम् । **तां स्मरामि** इत्यर्थः ॥

व्यपेतमुदाहरति—**सरस्वतीति** । हे **सरस्वति** मम **चित्तसरस्वति** चित्तसमुद्रे **स्थितिं कुरु** । **प्रसादं सु अति सर** गच्छ । **कथंभूते! क्षेत्रकुरुक्षेत्रसरस्वति!** क्षेत्रं—इदं शरीरमेव कुरुक्षेत्रं, तत्र सरस्वतीनदीरूपे! ॥ अत्र च समुद्रत्वेन रूपिते चित्ते नदीसम्बन्धस्य युक्तत्वमिति भावः ॥

---

1 (आनन्दवर्धनकृते देवीशतके) । 2 'अथ समुच्चययमकम्–सरस्वति'–क. 3 'चित्ते'–ख. 4 (आनन्द-देवीशतके) । 5 अतिशयेनेति नास्ति–ग.

ससार [1] साकं दर्पेण कन्दर्पेण ससारसा ।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा [2] ॥ ३६६ ॥

## सङ्केतः

नदीरूपिणि! इति सम्बोधनमेतत् । अत्र पूर्वार्धे आद्यन्तकम् । उत्तरार्धे तु आद्यन्तकान्तादिकसमुच्चयः ।

सकलश्लोके आद्यन्तकान्तादिकयोगे यथा—ससारेति[3] । ससार प्रवृत्ता सार्धं दर्पेण कामेन च सारसैर्युक्ता काशं[4] नूतनशकटा धारयन्ती न विद्यते, न वीनां भ्राणः शब्दः यत्रासौ=अविभ्राणा=नाविभ्राणा, अपि तु पक्षिध्वनियुक्ता शरत् ऋतुविशेषः नवा प्रकृष्टा ॥

## मधुमती

अर्थपरिवृत्तिमुदाहरति—ससारेति । दर्पेण कन्दर्पेण साकं शरत् ससारेत्यन्वयः । ससारसा पक्षिविशेषयुक्ता पद्मयुक्ता वा, शरं काशाख्यं तृणकाण्डं बिभ्राणा, नशाना पथि कर्दमाभावात् नूतनशकटयुक्ता, वीनां=पक्षिणं भ्राणः=शब्दः विभ्राणः, अविद्यमानः विभ्राणः यत्रासौ अविभ्राणा, नाविभ्राणा सदाविहगशब्दवतीत्यर्थः ॥

---

1 'अथ वर्णभेदयमकम्—ससार'–ख. 2 (रुद्रटालङ्कारे)। 3 'ससारसेति'–ग. 4 'काण्डं'–घ.

मधुपराजिपराजितमानिनी-[1]
जनमनःसुमनःसुरभिश्रियम् ।
अभृत वारितवारिजविप्लवं
स्फुटितताम्रतताम्रवणं जगत् [2] ॥ ३६७ ॥

एवं वैचित्र्यसहस्रैः स्थितं अन्यदुन्नेयम् ॥

**वाच्यभेदेन भिन्ना [3] यत्**
**युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसौ**
**अक्षरादिभिरष्टधा ॥७८॥**

---

## सङ्केतः

मधुपेति । अत्र अनियते स्थाने आवृत्तिः ॥

## मधुमती

मध्ययमकमुदाहरति—**मधुपराजीति** । **जगत् श्रियं अभृत** दध्रे । कीदृशम्? **मधुपराज्या** भ्रमरमालया **पराजितानि मानिनीजनानां मनांस्येव सुमनसः** ताभिः **सुरभि** । प्रतीतमितरत् ॥

**वाच्येति** । अत्र **श्लेषः** इति लक्ष्यनिर्देशः । **श्लिष्यन्ति** इति लक्षणम् । **असौ** इति लक्ष्यानुवादो विभागार्थः । तथा च एकोच्चारणापह्नुतभेदत्वं लक्षणमित्यर्थः ॥ ननु अविजातीयाकारयोः एकस्यैवैकोच्चारणगोचरत्वेन स्वरूपभेदापह्नवः अनुपपन्नः, समानाकारस्य स्वरूपभेदाभावात् अत आह—**वाच्यभेदेनेति** । एवं च अर्थभेदेनैव भेद इति लभ्यते । तथा च

---

1 'मालिनी'–क. 2 (हरविजये) । 3 'वाच्यप्रभेदभिन्ना'–क.

'अर्थभेदेन शब्दभेदः' इति दर्शने; 'काव्यमार्गे स्वरो न गण्यते' इति च नये; वाच्यभेदेन भिन्ना अपि शब्दाः यत् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपं अपह्नुवते स श्लेषः। स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदात् अष्टधा ॥

---

## सङ्केतः

शब्दभेद इति। यथा 'करः' इत्यत्र पाणिशुण्डाद्यर्थभेदेन शब्दभेदः, न तु वर्णभेदेन। सर्वेष्वप्यर्थेषु वर्णानामेकस्वरूपत्वात्[1] ॥

ननु स्वरभेदात् भिन्नस्वरूपापह्नवाभावे[2] न श्लेषः स्यात् इत्याशङ्क्याह— **काव्यमार्गे इति।** **भेदात्** भङ्गात्। अभङ्गस्तु नवमो भेदः अनन्तरं वक्ष्यते ॥

## मधुमती

समानाकारतायामेव एकोच्चारणगोचरत्वं, न त्वन्यथा। इयान् भेदः—यत् वर्णश्लेषादौ आदेशादिवत् नैकाकारत्वम्। अक्षादिपदे तु आजानिक्येव समानाकारता इति। तदेतत् वृत्तिकारो व्याचष्टे—**अर्थभेदेनेति।** अनेकव्यक्तिवाचिनः शब्दाः एकदा तावतीः व्यक्तीः नोपस्थापयितुमुत्सहन्ते। 'सकृदुच्चारितात् शब्दात् सकृदर्थप्रतीतिः।' इति व्युत्पत्तेः। आवृत्तौ तु सिद्धः शब्दभेदः इत्यर्थः ॥

ननु शब्दसाम्ये श्लेषत्वमित्यनुपपन्नम्। 'अस्त्रापफललुब्धे'त्यादौ समासभेदेन स्वरभेदात् शब्दभेदस्य आवश्यकत्वात् इत्यत आह—**काव्येति।** तथाच स्वरवैसादृश्येऽपि आकारसाम्यमात्रमुपादाय श्लेषत्वमिति भावः।

विभजते—**स चेति।** अत्र प्रत्ययपदं गोबलीवर्दन्यायेन विभक्त्यतिरिक्तप्रत्ययपरमिति बोध्यम् ॥

---

1 'वर्णैकस्वरूपत्वात्'–घ. 2 'पह्नुत्यभावात्'–घ.

क्रमेणोदाहरणानि—

अलङ्कारः शङ्काकरनरकपालं, परिजनः
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोः,
विधौ वक्रे मूर्ध्नि स्थितवति, वयं के पुनरमी[1] ? ॥३६८॥

पृथुकार्तस्वरपात्रं
भूषितनिःशेषपरिजनं देव !
विलसत्करेणुगहनं
सम्प्रति सममावयोः सदनम्[2] ॥ ३६९ ॥

---

### सङ्केतः

**विधाविति** । अत्र विधुः विधिश्चेति उकारेकारयोर्वर्णयोः भङ्गश्लेषः[3] । अलङ्कारसर्वस्वमते तु—अत्र अर्थापत्तिरलङ्कारः । तथाहि—विधौ वक्रे यदा ईश्वरस्यापि ईदृशी दशा दृश्यते, तदा अर्था[4]दन्येषां ईदृग् दशा सिद्धैवेति । संसृष्टिरपि ॥

### मधुमती

वर्णश्लेषमुदाहरति—**अलङ्कार इति** । अत्र **विधौ** इति विधिविधुशब्दयोः सप्तम्येकवचने सारूप्यमित्यर्थः ॥

**पृथुकेति** । **पृथुकार्तस्वरपात्रं** इत्यत्र पृथु कार्तस्वरमयं—हेममयं पात्रं यस्मिन्निति, पृथुकानां बालानां आर्तस्वरस्य पात्रं स्थानमिति च पदभङ्गेन समासभेदेन च भिन्नयोरपि सारूप्यप्रतिभासः ॥

---

1 शङ्काकरं–अयमभिगम्यो न वेति शङ्काकृत् । विधौ–चन्द्रे दैवे च । 2 भुवि उषिताः अपि भूषिताः । बवयोरभेदात् विलसत्काः मूषकाः । 3 'भङ्गश्लेषः'–ग. 4 'ईदृग्दशातदर्था'–घ.

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैः नीतेहितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः[1] ॥३७०॥

एषः[2] वचनश्लेषोऽपि ।

---

## सङ्केतः

**भक्तीति** । 'भवे भवे त्वद्दर्शनं भूयात्' इत्यादिप्रकारेण **भक्तिप्रह्वाणां विलोकनयाच्ञावती** । दृक्पक्षे—भक्तावलोकने स्नेहवती । **नीलोत्पलस्य स्पर्धिनी** कृष्णतया चारुतया च । **हितप्राप्तये नीते** । **नीता च ईहितप्राप्तये** । **महानिधी** इति प्रथमायां 'रो रे लोपः' इति लोपः दीर्घश्च । **वचनेति** । अत्र स्त्रीक्लीबलिङ्गयोः द्विवचनैकवचनयोश्च श्लिष्टता इत्यर्थः ॥

## मधुमती

लिङ्गश्लेषमुदाहरति—**भक्तीति** । **हितप्राप्तये** ध्यानालम्बनतां **नीते** इति नेत्रपक्षे, **ईहितप्राप्तये नीता** इति तनुपक्षे । **महानिधी** इति नेत्रपक्षे ; **महानिधिः रसिकता**मिति तनुपक्षे—'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । **कुरुता**मिति एकवचनद्विवचनयोः श्लेषः । अत्र **नीते** इति **निधी** इति च वर्णश्लेषः । शेषेषु लिङ्गश्लेषः इति बोद्धव्यम् ॥

---

1 'ध्यानालोकनतां'–क. 'लावण्यस्य'–क. (भागवतामृतवर्धनः) ।
2 'एवं'–क.

(सं) महदे सुरसंधम्मे
    तमव समासंगमागमाहरणे ।
हर बहुसरणं तं
    चित्तमोहमवसर उमे ! सहसा ॥

[महदे सुरसन्धं मे
    तमव समासङ्गमागमाहरणे ।
हर बहुसरणं तं
    चित्तमोहमवसरे उमे ! सहसा ॥ ३७१ ॥ ]

---

## सङ्केतः

महदे इति । हे उमे ! महदे ! उत्सवदे ! आगमाहरणे आगमान[1]पलापिनि ! सुरैः सन्धा सन्धानं यस्य तादृशं समासङ्गं विषयप्रसङ्गं अव रक्ष । यद्वा—आगमस्य स्वीकारे समासङ्गं विघ्नं रक्ष । तथा बहुसरणं बहुव्यापकं चित्तमोहं अवसरे काले हर स्फोटय इति संस्कृतपक्षः ॥

## मधुमती

भाषाश्लेषमुदाहरति—महदे इति । हे उमे ! महदे उत्सवदे ! मे समासङ्गं आगमाहरणे वेदस्वीकारे अव रक्षेत्यन्वयः । कीदृशम् ? सुरसन्धं सुरेण = देवेन सन्धा–सन्धानं यत्र स तथा इत्यर्थः । तं चित्तमोहं अवसरउ अपसारय । कीदृशम् ? बहुसरणं विविधसञ्चारप्रवर्तकम् , सहसा

---

1 'आगमना'–घ.

(प्रा) मह देसु रसं धम्मे
तमवसं आसं गमागमा हर णे ।
हरवहु ! सरणं तं
चित्तमोहं अवसरउ मे सहसा ॥

[मम देहि रसं धर्मे
तमोवशां आशां गमागमात् हर नः ।
हरवधु ! शरणं त्वं
चित्तमोहोऽपसरतु मे सहसा[1] ॥ ३७२ ॥]

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७३ ॥

---

## सङ्केतः

प्राकृतपक्षे तु—हे **हरवधु !** शम्भुपत्नि ! **मम देहि रसं धर्मे तमोवशां आशां गमागमात्** भवात् **हर** स्फोटय[2] । तथा **नः** अस्माकं **शरणं त्वं, चित्तमोहः अपसरतु मे सहसा** बलेन । प्राकृतत्वात् चित्तमोहमित्यत्र क्लीबत्वम् एवं संस्कृतस्य अपभ्रंशादिभाषाश्लेषोऽपि ज्ञेयः ।

**वक्ष्यतीति** । वहिवच्योरिदं रूपम् । **कृत्** इति करोतिकृन्तत्योः प्रकृत्योः ॥

## मधुमती

झटितीत्यर्थः । प्राकृतपक्षे—**सहसा गमागमात्** संसारात् । अत एव **तमोवशां** इत्युक्तम् । **हरवधु !** इति सम्बोधनम् । स्पष्टमन्यत् ॥

प्रकृतिश्लेषमुदाहरति —**अयमिति** । अत्र वहिवच्योः करोति-कृन्तत्योश्च सारूप्यम् ॥

---

1 (आनन्दवर्धनस्य देवीशतके) । 2 ' स्फुटय '–ग.

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्ताप्रूर्वसम्पत्सहस्रम् ।
प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादात्
अहमुचितरुचिः स्यान्नन्दिता सा तथा मे[1] ॥३७४॥

सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥ ३७५ ॥

---

## सङ्केतः

सहस्रं इति क्रियाविशेषणम् । सहस्रशब्दश्च बाहुल्यार्थः । **स्यां** इति स्यात् इति च । नन्दतीति नन्दिता, नन्दिनो गणविशेषस्य च भावः नन्दिता इति च आख्यातकृत्तद्धितप्रत्ययानां भेदः ॥

सर्वेति हे हर शम्भो! त्वं सर्वस्य सर्वस्वम् । त्वमेव संसारोच्छेदतत्परः सन् नयोपकारयोः सांमुख्यं शरीरवर्तनं आयासि आगच्छसि । अन्यच्च— **हर** स्फोटय, भव सम्पद्यस्व, नय निवारय, आयासि खेदकारि वर्तनं तनु

## मधुमती

प्रत्ययश्लेषमुदाहरति—**रजनीति** । सहस्रमित्यन्तं स्यादिति क्रिया-विशेषणम् । 'सहस्रः' इति पाठः सुगमः । अहं नन्दिता स्याम् इत्यत्र नन्दतीति तृचि रूपम् । सा मे नन्दिता स्यादित्यत्र नन्दिनो भावः इत्यर्थः । तथाच तृचः तलश्च सारूप्यम् ॥

विभक्तिश्लेषमुदाहरति—**सर्वस्वमिति** । हे हर! त्वं सर्वस्य स्वं **सर्वस्वम्** । तथा **भवच्छेदतत्परः** संसारच्छेदानुकूलयत्नवान् । तथा **नयोपकारयोः सांमुख्यं आयासि** आगच्छसि । कीदृशम्? **तनुवर्तनम्** तन्वाश्रितं वर्तनं यस्येति मध्यमपदलोपः । अथ च—**सर्वस्य सर्वस्वं हर** अपहर । तथा **छेदतत्परः भव** । **उपकारसांमुख्यं नय** । **आयासि** आयासकारि **तनु** विस्तारय । अत्र सुप्तिङोः सारूप्यात् विभक्तिश्लेषः ॥

---

1 'सम्पत्सहस्रः'–क. पराप्तं=प्राप्तम् ।

भेदाभावात् प्रकृत्यादेः
भेदोऽपि नवमो भवेत्[1] ।

'नवमोऽपि' इत्यपिः भिन्नक्रमः । उदाहरणम्—

---

## सङ्केतः

प्रथय । इति सुप्तिङ्विभक्त्योः भेदः । अत्र प्रकरणादिना नियमाभावे श्लेषः, न तु ध्वनिः ॥

**प्रकृत्यादेरिति** । अभङ्गश्लेषः इत्यर्थः ।

## मधुमती

नन्वेवं अक्षरादिपदश्लेषो न स्यात्, उक्तप्रकाराभावात् अत आह—**भेदेति** । **प्रकृत्यादेः** इति पञ्चमी । तेन **प्रकृत्यादेः नवमोऽपि भेदो मतः** इत्यन्वयः । हेत्वाकाङ्क्षायामाह—**भेदाभावादिति** । **भेदेषु** उक्तभेदेषु **अभावात्** अन्तर्भावाभावात् इत्यर्थः । वस्तुतस्तु—**प्रकृत्यादेरिति** षष्ठी । तथाच श्लेषः प्रकृत्यादिभेदे दृष्टः, अत्र तु तेषां अभेदेऽपि श्लेषः इति नवमत्वम् । भेदस्तु आकारवैलक्षण्यम् । तेन अर्थभेदात् शब्दभेदाङ्गीकारात् अत्रापि प्रकृतिभेदः इत्यपास्तम् । आकारवैलक्षण्याभावात् । व्यक्तिभेदस्य न्यायलभ्यत्वात् ॥

---

1 'नवमो मतः'—ख.

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥ ३७६ ॥

अत्र—प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ ॥

---

## सङ्केतः

य इति । **गोत्रशब्दः** गिरिवंशार्थः । **गोत्रेति** कुलपर्वतयोः **पक्षाः** पतत्राणि स्ववर्ग्याश्च । **क्षणः** महः निश्चयश्च [1] । **शतकोटिदः** शतकोटीनां दाता शतकोटिना=वज्रेण छेदकश्च । **विबुधाः** देवाः पण्डिताश्च ।

## मधुमती

य इति । **यः असकृत् परगोत्राणां** प्रतिवादिकुलानां अथ च उत्कृष्टपर्वतानां, **पक्षस्य** प्रतिज्ञायाः अथ च पक्षतेः **छेद** एव **क्षणः** उत्सवः, तस्मिन् समर्थः **शतकोटिं ददाति** अथ च वज्रेण खण्डयति तस्य भावः तत्ता, तां बिभ्रत् सः **विबुधेन्द्रः** विद्वदिन्द्रः अथ च देवेन्द्रः **राजते** इत्यर्थः । ननु ईदृशस्थले द्वितीयार्थस्य व्यङ्ग्यत्वमुक्तमिति तद्विरोधः इत्यत आह—**अत्रेति** । तथाचात्र अभिधानियमत एव तथा । अन्यत्र तु श्लेषत्वमेवेत्यर्थः ॥

ननु प्रकृत्यादिश्लेषे शब्दश्लेषत्वमुचितम्, न तु प्रकृतेः, गोत्रादिवदस्याभेदादिति अलङ्कारसर्वस्वकारादिमतमाशङ्कते—**नन्वित्यादिना** ॥

इह द्विविधः श्लेषः—सभङ्गः अभङ्गश्च । तत्र सभङ्गश्लेष एव शब्दश्लेषस्य विषयः । यत्र उदात्तादिस्वरभेदेन भिन्नप्रयत्नोच्चार्यतया भिन्नयोः शब्दयोः जतुकाष्ठन्यायेन श्लेषः । अभङ्गश्लेषस्तु अर्थश्लेषस्य विषयः ।

---

1 निश्चयश्च इति नास्ति—ग.

ननु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्याणां तद-भावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धे[1] अलङ्का-रान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विवि-धोऽप्यर्था[2]लङ्कारमध्ये परिगणितोऽन्यैरिति कथमयं शब्दालङ्कारः ? ॥ उच्यते—इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सः अन्वयव्यतिरेकाभ्या-मेव व्यवतिष्ठते । तथाहि—कष्टत्वादिगाढत्वाद्यनु-

---

## सङ्केतः

स्वरितादीति समाहारोदात्तानुदात्ताः । भिन्नेति । भिन्नाभिन्न-प्रयत्नोच्चार्यत्वं क्रमेण शब्दार्थश्लेषयोः हेतुः इत्यर्थः । अन्यैः उद्भटाद्यैः । अयं योऽसकृदित्यादिः । कष्टत्वादीति । एते त्रयोऽपि शब्दगतत्वेन दोषगुणालङ्काराः । व्यर्थत्वादीति । एते त्रयस्तु[3] अर्थगतत्वेन दोष-गुणालङ्काराः ।

## मधुमती

स्वरभेदाभावात् अभिन्नप्रयत्नोच्चार्यतया शब्दाभेदात्, अर्थयोः एकवृन्तगतफल-द्वयन्यायेन श्लेषः, अर्थभेदेन शब्दभेदाभावात् । न चाक्षादिपदे प्रकृत्यादि-भेदो, न वा स्वरादिभेदः । तथा च यो यदाश्रितः स तदलङ्कारः । अलङ्कारालङ्कार्यभावस्य लोकवदाश्रयाश्रयिभेदेनोपपत्तेः इति आखण्डलार्थः ॥

अलङ्कारान्तरप्रतिभोत्पत्तिहेतुरित्यनेन अलङ्कारान्तरापवादकत्वमस्येति प्रतिपादितम् ।

प्रागुक्तयुक्त्या अर्थभेदात् शब्दभेदावश्यकत्वे सत्याह—इहेति । तथा च—यदन्वयव्यतिरेकानुविधायी यो गुणोऽलङ्कारो दोषो वा, स तस्येति भावः ॥

---

1 'बन्धे नियमेन'–क. 2 'द्विविधोऽप्ययमर्था'–ख. 3 'त्रयोऽपि'–घ.

प्रासादयः व्यर्थत्वादिप्रौढ्याद्युपमादयः[1] तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते ।

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।

इति[2] अभङ्गः शब्दश्लेषः,

प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ ३७७ ॥

---

## सङ्केतः

तद्भावेति । अयं भावः—गोत्रादिशब्दप्रयोगे अलङ्कारः, तदर्थकवंशशैलादिप्रयोगे तु न, इति तद्भावतदभावानुविधायित्वेन अन्वयव्यतिरेकाभ्यां शब्दालङ्कार एवात्र । अर्थालङ्कारे तु शब्दाः परिवृत्तिं सहन्ते । अर्थस्तु तदवस्थ एवेति ॥

स्वयं चेति । गौरीपक्षे—गौरीयं पल्लववत् आताम्रभास्वद्भ्यां कराभ्यां शोभते । सुखेन आप्तुं यत्र शक्यं फलं तत्र लुब्धानां ईहितं प्रदत्ते । सन्ध्यापक्षे तु—भास्वत्कराः सूर्यकराः । स्वापफलं विश्रान्तिः । लुब्धे इति सप्तम्यन्तम् । अभङ्गः अर्थश्लेषतया उद्भटस्य यः संमतः ॥

## मधुमती

स्वयं चेति । प्रवाळवत् आताम्राभ्यां भास्वद्भ्यां कराभ्यां विराजिनी, अथ च पल्लवाताम्रैः विवस्वतः किरणैः विराजिता । इत्यभङ्गः इति । अत्र 'भास्वत्कर' पदस्य तथाविधत्वादिति भावः । प्रभातेति । अस्वापं दुरापं यत् फलं मोक्षः तत्र लुब्धानां ईहितप्रदा परमेश्वरी । स्वापः निद्रा, तत्फलं दुरितं तत्र अलुब्धे हितप्रदा प्रातस्सन्ध्या । अत्र प्रथमे कर्मधारयसमासे आद्युदात्तत्वम्, द्वितीये षष्ठीतत्पुरुषे अन्तोदात्तत्वमिति

---

1 'प्रौढ्युपमादयः'–क.　2 'विराजिनी ॥ विराजिनी इति'–ख.

क्याचि वाऽऽद्युपमेयासे ।

आसे—निरासे ॥

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति [1] ॥ ४११ ॥

अत्र आत्मा उपमेयः ॥

---

## सङ्केतः

**सहस्रायुधीयतीति** । सहस्रायुधमिव आत्मानमाचरति इति नाम-धातुवृत्तौ । इवादिः, आत्मा उपमेयश्च लुप्तः । आचारलक्षणो धर्मस्तु क्यचा उच्यते । तस्य तत्रैव विधानात् ॥

## मधुमती

पुनः द्विलोपे प्रकारान्तरमाह—**क्यचीति** । **निरासे** निरसने लोपे अनुपादान इति यावत् ॥

**अरातीति** । सहस्रायुधमिवात्मानमात्मानमाचरति—**सहस्रायुधीयति** । अत्र 'उपमानादाचारे' इति क्यज्विधानात् उपमेयेवादिशब्दयोरनुपादानात् उपमानसाधारणधर्मयोरुपादानाच्च उक्तलक्षणसत्त्वमभिप्रेत्याह—**अत्रेति** । 'नास्ती'ति शेषः ।

यद्यपि—'सविता विधवति' इत्यादाविव अत्रापि आचाररूपसमान-धर्मस्यापि लोपः इति त्रिलुप्तेयं भवितुमर्हति । तथापि—तद्रूपलोपस्यात्र अविवक्षितत्वात् द्विलुप्तेयमित्युक्तम् ॥ अथ वा—'त्रिलोपे च समासगा' इति भविष्यति । तस्यायं पुरस्तादपकर्षः इति त्रिलुप्तेयमिति द्रष्टव्यम् ।

---

1 'सहस्रारायुधीयति'–क.

त्रिलोपे च समासगा ॥९०॥

त्रयाणां—वादि-धर्मोपमानानाम्[1] ॥ उदाहरणम्-

तरुणिमनि कृतावलोकना
ललितविलासवितीर्ण[2] विग्रहा ।
स्मरशरविसराचितान्तरा
मृगनयना हरते[3] मुनेर्मनः ॥४१२॥

---

## सङ्केतः

तरुणिमनीति । विलासाय विलब्धः दत्तः विग्रहः यया सा तथा । मृगनयना । मृगनयने इव नयने यस्याः इति 'सप्तम्युपमाने'त्यादिना उपमानपूर्वस्य समासः उत्तरपदलोपश्च । अत्र धर्मस्य इवादेः उपमानस्य चेति त्रयाणां लोपः ॥ यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिः, तदा मृग एव नयने यस्याः इति रूपकसमासस्यैव एष विषयः । न तु

## मधुमती

अत्र सप्तमीति । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिः उत्तरपदलोपश्च' इति श्रूयते । तस्यायमर्थः—सप्तम्यन्तं उपमानं च पूर्वपदं यस्य तस्य शब्दान्तरेण बहुव्रीहिः । तत्र पूर्वसमासावयवस्य उत्तरपदस्य च लोपः इति । तदिह—मृगनयने इव नयने यस्याः सा मृगनयना इत्यत्र मृगनयनरूप-समस्तपदावयवभूतं उपमानवाचकं च नयनपदं लुप्यते इति धर्म-उपमा-वाचक-उपमानलोपात् त्रिलोपवतीयमित्यर्थः ॥

---

1 त्रयाणामित्यादि नास्ति–ख. 2 विलब्ध '–क. 3 ' नयते '=ख.

अत्र 'सप्तम्युपमाने'त्यादिना यदा समासलोपौ भवतः तदा इदमुदाहरणम् ।

क्रूरस्य आचारस्य अयश्शूलतया अध्यवसायात्[1] 'अयश्शूलेनान्विच्छति[2] आयश्शूलिकः' इति अतिशयोक्तिः, न तु क्रूराचारोपमेयतैक्ष्ण्य-धर्म-वादीनां[3] लोपे त्रिलोपेयमुपमा ।

---

## सङ्केतः

उपमासमासस्य । अत एवोक्तम्— यदेत्यादि । यदा उपमासमासलोपौ तदा त्रिलोपे समासगा, अन्यथा नास्ति त्रिलोपिन्युपमा ॥ **आयश्शूलिकः इति** । अत्र—अर्थान्वेषणोपायादिः क्रूराचारः अयश्शूलतया अध्यवसीयते । तथा अत्र अयश्शूलेनेत्युपमानं शब्दोक्तम् । शेषं तु तैक्ष्ण्यादिधर्म-क्रूराचारोपमेय–इवादिरूपं त्रयमपि अर्थसामर्थ्यगम्यम् । तेन निगीर्याध्यवसानरूपा अतिशयोक्तिरियम् । न तु उपमा । उपमानेन अयश्शूलेन अर्थान्वेषणोपायस्य उपमेयस्य तद्भावाध्यवसानेन आपादिताभेदस्य प्रतीयमानत्वात्[4] । भाष्य-

## मधुमती

एकदेशिमतं दूषयति—**क्रूरस्येति** । **अध्यवसानात्** । अयश्शूलपदेन गौणसाध्यवसानलक्षणया उपस्थापनादित्यर्थः । **अयश्शूलेनेति** । 'अयश्शूलदण्डाजिनाभ्यां ठक्-ठञौ' इत्यनेन 'अन्विच्छती'त्यर्थे ठकि **आयश्शूलिकः** इति रूपम् । तथा च अतिशयोक्तिविशेष एव, नोपमा । अन्यथा अतिशयोक्तेः लुप्ताविशेषत्वापत्तेः ॥

---

1 'अध्यवसानात्'–ख. 2 'न्विच्छेत्'–क. 3 'धर्मवादीनां'–ख.
4 निगीर्येत्यादि नास्ति–ग.

एवं एकोनविंशतिः (१९) लुप्ताः, पूर्णाभिः (६) सह पञ्चविंशतिः (=२५) ॥

अनयेनेव राज्यश्रीः दैन्येनेव मनस्विता ।
मम्लौ सा च[1] विषादेन पद्मिनीव हिमाम्भसा ॥४१३॥

इति अभिन्ने साधारणे धर्मे,—

---

## सङ्केतः

कारोऽप्याह—'न तिङन्तेनोपमानमस्ति' इति । आख्यातं नोपमानं स्यादित्यर्थः ॥ एवं वर्तमानसामीप्यादावपि अतिशयोक्तिभेदत्वं यथाप्रतीति वाच्यम् ॥

एवं च पूर्णायाः भेदाः षट् (६) । लुप्तायास्तु एकोनविंशतिः (१९) । तथाहि—धर्मस्य लोपे पञ्च (५) । उपमानलोपे द्वौ (२) । वादिलोपे षट् (६) । धर्मवाद्योर्लोपे द्वौ (२) धर्मोपमानलोपे द्वौ (२) । वाद्युपमेययोर्लोपे एकः (१) । त्रयाणां लोपे एकः (१) इति ॥

**अनयेनेति** । अत्र म्लानत्वं अभिन्नः एको धर्मः ।

## मधुमती

**एवमिति** । साधारणधर्ममात्रलोपे पञ्च (५), उपमानमात्रलोपे द्वे (२), उपमावाचकशब्दमात्रलोपे समासादिभेदेन षट् (६), क्विप्समासगतत्वेन द्वे (२), धर्मवाद्योर्लोपे द्वे (२), क्यचि वाद्युपमेययोर्लोपे एका (१), त्रिलोपे चैका (१) इति आहत्य एकोनविंशतिः (१९) लुप्ताभेदाः, षट् (६) च पूर्णाभेदाः इति मिलित्वा पञ्चविंशतिः (२५) उपमाभेदाः इत्यर्थः ॥

**अनयेनेति** । अभिन्ने इति । अत्र म्लानेः साधारणधर्मस्य

---

1 'साऽथ'–क.

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ४१४ ॥

इति भिन्ने च[1] तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा ; यथोत्तरं उपमेयस्य उपमानत्वे पूर्ववत् अभिन्नभिन्नधर्मत्वे—

---

### सङ्केतः

ज्योत्स्नेवेति । अत्र नयनानन्दहेतुत्वात् नयनानन्दः इति हेत्वलङ्कारः पराशयेन । नयनानन्दादिकः भिन्नः नैको धर्मः । मालोपमेति । माला-स्रक्, तद्रूपा उपमा, सा तथा । यथा तन्तावेकस्मिन् अनेकपुष्परत्नादियोगः, तथा एकस्मिन् उपमेये अनेकोपमानयोगः इति । यद्वा—उपमानां

### मधुमती

अभिन्नत्वादित्यर्थः । भिन्ने इति । अत्र आनन्दादयः भिन्ना एव साधारणधर्माः । एवं च एकस्यैव । उपमेयस्य अनेकोपमानोपादानात् मालोपमा । साधारणधर्मस्य एकत्वं अनेकत्वं वेति न विशेषः ॥ यथोत्तरमिति । उत्तरोत्तरं उपमेयस्य उपमानत्वं यत्र सा रशनोपमा । साधारणधर्मभेदाभेदौ च अविवक्षितावित्यर्थः ।

---

1 'भिन्ने वा'–क.

अनवरतकनकवितरण-
जललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिः, मतिरिव
चेष्टा, चेष्टेव कीर्तिरतिविमला[1] ॥ ४१५ ॥

मतिरिव मूर्तिर्मधुरा
मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः
शक्या जेतुं नृपस्य न परेषाम्[2] ॥ ४१६ ॥

---

### सङ्केतः

माला=पङ्क्तिः, तया उपमेति मालोपमा ॥ **अनवरतेति** । अत्र **विमलत्वं** अभिन्नो धर्मः । **मतिरिवेति** । अत्र तु माधुर्यादिः भिन्नो धर्मः ।

### मधुमती

**अनवरतेति** । अत्र अतिविमलत्वं एक एव समानो धर्मः ॥
**मतिरिवेति** । अत्र मधुरत्वादयः पृथगेव साधारणाः धर्माः ।

---

1 अविश्रान्तसुवर्णविश्राणने धृता जललवाः तैः सञ्जाततरङ्गाः याचकततयः येन । दानोदकधाराजलप्लवमानार्थिजनसमूहस्येति यावत् ॥ उत्तरोत्तरस्य शृङ्खलायामिव पूर्वपूर्वसम्बन्धित्वात् अत्र रशनोपमा । 2 मूर्तिविषये प्रभावः=प्रतापः, अन्यत्र तु माहात्म्यम् ।

इत्यादिका रशनोपमा च न लक्षिता। एवंविध-वैचित्र्यसहस्रसम्भवात्। उक्तभेदानतिक्रमाच्च ॥

इत्युपमालङ्कारः [1]

---

## सङ्केतः

एवंविधेति भणनात् एकदेशविवर्तिनी उपमा गृह्यते। यथा—

'नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरश्श्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव [2] ॥' इति ॥

अत्र सरश्श्रीणां नायिकात्वं न समासोक्त्या, विशेषणसाम्याभावात्। तस्मात् उपमा एकदेशविवर्तिनी वाच्यैव, यथान्यैरुक्ता ॥ इत्युपमा ॥

## मधुमती

संभवत् असङ्गृहीतं बहुतरमपि वक्तव्यमेवेत्यत आह—उक्तेति। श्रौत्यार्थ्योरुभयोरपि सङ्ग्रहादित्यर्थः ॥ इत्युपमा ॥

---

1 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः। हंसीव कृष्ण! ते कीर्तिः स्वर्गङ्गामवगाहते ॥१॥ वर्ण्योपमानधर्माणां उपमावाचकस्य च। एकद्वित्र्यनुपादानात् भिन्ना लुप्तोपमाऽष्टधा ॥ २ ॥ तटिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम। कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥ ३ ॥ यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः। तदेतत् काकतालीयं अवितर्कितसम्भवम् ॥ ४ ॥ (कुवलयानन्दे) ॥ 2 'स्तनै-रिव '-ग.

## २. अनन्वयालङ्कारः

**उपमानोपमेयत्वे एकस्यै-**
**वैकवाक्यगे । अनन्वयः[1] ॥**

**उपमानान्तरसम्बन्धाभावः अनन्वयः ॥ उदाहरणम्—**

**न केवलं भाति नितान्तकान्तिः**
**नितम्बिनी सैव नितम्बिनीव ।**
**यावद्विलासायुधलास्यवासाः[2]**
**ते तद्विलासा इव तद्विलासाः ॥ ४१७ ॥**

इति अनन्वयालङ्कारः[3]

---

### सङ्केतः

**अनन्वय इति** । अयं नोपमा वास्तवद्वित्वाभावात् ॥ **विलासायुधः** कामः । **लासः** क्रीडा । अत्र—**नितम्बिनी नितम्बिनीव** इति, **विलासाः विलासा इव** इति च भेदाभावात् उपमानतया अनुपपद्यमानं अन्यव्यावृत्तौ लक्षणया अवतिष्ठते ॥

### मधुमती

**उपमानेति । उपमानत्वं उपमेयत्वं** चेत्यर्थः । द्वन्द्वपरश्रुतत्वात् भावप्रत्ययस्य । **एकस्यैव** इति उपमाव्यवच्छेदाय । यद्यपि—रशनोपमायामप्येतदस्ति । तथापि—उपमेयोपमाव्यवच्छेदार्थोपात्तात् एकवाक्यगत्व-

---

1 स्वस्मिन्नेव स्वप्रतियोगिकसादृश्यस्यानन्वयात् अनन्वयोऽयम् । अनुपमत्वफलकत्वे सति इत्यप्यत्र अर्थसिद्धम् । 2 'लासवासाः'—क. 3 "उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः" ॥ ५ ॥ (कु) ।

## ३. उपमेयोपमालङ्कारः

# विपर्यास उपमेयोपमा तयोः ॥११॥

तयोः उपमानोपमेययोः परिवृत्तिः, अर्थात् वाक्यद्वये। इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा[1]। उदाहरणम्—

---

### मधुमती

विशेषणादेव तद्व्यवच्छेदोऽपि द्रष्टव्यः। तदुभयत्र उद्देश्यविधेयभेदेन वाक्यभेदात्, अत्र तु तदभावात्।

यद्यपि—असति सादृश्ये नोपमानोपमेयभावः, सादृश्यं च भेदघटितमिति, अभेदे तदनुपपन्नम्। तथापि—आहार्योऽत्र भेदो द्रष्टव्यः। न चैवं—'भेदग्रहणं अनन्वयव्यवच्छेदाय' इति विरोधः। तस्य वास्तविकभेदाभिप्रायकत्वात्। अयमेव उपमाऽनन्वययोर्भेदः—यत्—एकत्र वास्तवः, अन्यत्र आहार्यो भेदः इति। यदि च देशान्तरीयस्य कालान्तरीयस्य वा तस्यैव वास्तविकं भेदमादाय प्रयोगः, तदा उपमैवेति मन्तव्यम्॥ इत्यनन्वयः॥

विपर्यास इति। **परिवृत्तिः** विनिमयः[2]। एवं च—**उपमानोपमेययोः** विनिमये **उपमेयोपमा** इत्यर्थः। न च अनन्वयसङ्करः। तत्र विनिमयाभावात्। अत एवाह—**अर्थादिति**। उद्देश्यविधेयभावभेदेन

---

1 उपमेयेनोपमीयते इत्यर्थः। यत्र द्वयोः परस्परनिरूपितमौपम्यं व्यञ्जनां विना तृतीयसदृशव्यावृत्तिफलकं प्रतीयते तत्र उपमेयोपमेत्यर्थः। 2 'परिवृत्तिः नियमत इत्यर्थः'–च,

कमलेव मतिः, मतिरिव कमला ;
तनुरिव विभा, विभेव तनुः ।
धरणीव धृतिः, धृतिरिव धरणी ;
सततं विभाति बत ! यस्य[1] ॥ ४१८ ॥

इति उपमेयोपमालङ्कारः[2]

---

## सङ्केतः

**कमलेति** । अत्र पूर्ववाक्यात् सादृश्यावगतौ, पुनरिह सादृश्यं उच्यमानं अनन्यार्थत्वे सति अन्यव्यावृत्तिं लक्षयति । अत्र पूर्वत्र च एतयोः सदृशं नान्यदस्तीति भावः ॥ इत्युपमेयोपमा ॥

## मधुमती

वाक्यभेदस्य वज्रलेपत्वात् । अन्यथा विनिमयासम्भवात् । विनिमयप्रयोजन-माह—**इतरेति** ॥ इत्युपयोपमा ॥

---

1 'तस्य'–क. अत्र सर्वत्र अश्लिष्टक्रियासाम्यम् । 2 पर्यायेण द्वयोस्तच्चे-दुपमेयोपमा मता । धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि ॥ (कु) ।

## ४. उत्प्रेक्षालङ्कारः

**सम्भावनमथोत्प्रेक्षा**
**प्रकृतस्य समेन यत्[1] ॥**

समेन—उपमानेन ॥ उदाहरणम्—

---

### सङ्केतः

उत्प्रेक्षेति । उपमानगतगुणक्रियाभिसम्बन्धात् उपमानत्वेन उपमेयस्य सम्भावनं उत्प्रेक्षा । अन्यधर्माणां स्वाधर्मिभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणां ईक्षणं उत्प्रेक्षा । तस्याश्च 'मन्ये शङ्के ध्रुवं' इत्याद्याः व्यञ्जकाः ॥

### मधुमती

**सम्भावनमिति** । **समेन** उपमानेन । **प्रकृतं** उपमेयम् । एवं च उपमानेन उपमेयस्य **सम्भावनं उत्प्रेक्षा** इत्यर्थः ।

ननु—सम्भावनं न तावत् आहार्यस्तदारोपः, रूपकेऽतिव्याप्तेः । नापि आहार्यः उत्कटकोटिकः संशयः, उदाहरणयोः संशयविषयानवगाह-

---

1 समेनेति भावप्रधानो निर्देशः । प्रकृतस्य सद्भावस्त्वन्तरत्वेन सम्भावनमित्यर्थः । सम्भावनं च आहार्यः उत्कटकोटिकः संशयविशेषः । प्रकृतपदं च संभावनाविषयमात्रपरम् । अत्रेदमवधेयम्—सेयमुत्प्रेक्षा 'मन्ये शङ्के' इत्याद्युत्प्रेक्षाव्यञ्जकशब्दाभावे गूढोत्प्रेक्षेत्युच्यते । इमे उभे अपि स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा फलोत्प्रेक्षा इति त्रिविधे । तत्र स्वरूपोत्प्रेक्षा—धर्मस्वरूपोत्प्रेक्षा धर्मिस्वरूपोत्प्रेक्षेति द्विविधा, प्रत्येकं उक्तविषया अनुक्तविषया चेति द्विविधा च । हेतुफलोत्प्रेक्षे प्रत्येकं सिद्धविषया असिद्धविषया चेति द्विविधे इति ॥ तत्र 'उन्मेषं य' इति हेतूत्प्रेक्षा ॥ 'लिम्पतीवे'ति स्वरूपोत्प्रेक्षेति ज्ञेयम् ।

उन्मेषं यो मम न सहते जातिवैरी [1] निशायां
इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात्
लग्ना मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीः ॥४१९॥

---

## सङ्केतः

उन्मेषमिति । विकासमित्यर्थः । अत्र उपकृता उपमानम्, पद्मलक्ष्मीरूपं उपमेयम् [2] । हर्षो गुणः शत्रूच्छेदेन उपकारिणं प्रति सर्वस्यापि स्यादिति सः पद्मलक्ष्म्यामसंभवन्नपि सम्भावितः । सिद्धरूपत्वे सति द्रव्यधर्मत्वात् हर्षस्य गुणत्वम् । हर्षगुणयोगात् पद्मलक्ष्म्याः पादलग्नत्वं उत्प्रेक्षितमिति क्रियोत्प्रेक्षा [3] ॥

## मधुमती

नात् । मैवम्—उत्कटकोटिकतया संशयस्यैव सत्त्वात् । उदाहरणयोस्तु—मन्ये इवेति पदाभ्यां संशयावगाहनात् । अत एव 'मन्ये शङ्के ध्रुवं प्रायः' इत्यादिशब्दैरेव उत्प्रेक्षा प्रतीयते । यथोक्तम्—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैः इवशब्दोऽपि तादृशः ॥'

इति सन्देहालङ्कारे तु कोट्योः तुल्यबलत्वात् ततो भेदः ॥

उन्मेषमिति । जातिवैरी स्वभाववैरी । 'जातवैर' इति पाठः सुगमः ।

---

1 'जातुवैरी'–क. 2 अत्र उपकृतेत्यादि नास्ति–ग. 3 सिद्धरूपत्वे इत्यादि नास्ति–ग.

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं[1] नभः।
असत्पुरुषसेवेव दृष्टिः विफलतां[2] गता[3] ॥४२०॥

इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्।

इति उत्प्रेक्षालङ्कारः[4]

---

## सङ्केतः

**लिम्पतीति** । अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां **व्यापनादि**क्रियानिमित्तं गम्यम्। व्यापनादौ तु उत्प्रेक्षाविषये निमित्तमन्यत् अन्वेष्यं स्यात्। न च विषयस्य गम्यत्वं युक्तम्। तस्य उत्प्रेक्षिताधारत्वेन

## मधुमती

'लिम्पतीव तमोऽङ्गानी'त्यत्र लेपन-वर्षणकर्तृत्वं तमो-नभसोरुत्प्रेक्ष्यम्, व्यापनादि तन्निमित्तं गम्यमानं, न तु उत्प्रेक्षाविषयः इति अलङ्कारसर्वस्व-कारमतं दूषयितुमाह—**लिम्पतीवेत्यादि** ।

---

1 किरतीवाञ्जनं'–ख. 2 'निष्फलतां'–क. 'निष्ठुरतां–ख. 3 (चारुदत्ते १-१९, मृच्छकटिके १-३४)। 4 संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना। उक्तानुक्तास्पदाऽऽद्यात्र सिद्धासिद्धास्पदे परे॥ धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्। लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः॥ रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम्। त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी॥

## सङ्केतः

प्रस्तुतस्याभिधातुमुचितत्वात् । यत्तु—व्यापनाद्युत्प्रेक्षाविषयं अत्रोचे, तत् चिन्त्यम् ॥

व्याख्याविशेषोऽलङ्काराणां अलङ्कारसर्वस्वात् ज्ञेयः ।

'अकालसन्ध्यामिव धातुमत्ताम् ।'
'स्थितः पृथिव्या इव मानदण्डः ।'
'भूगतामिव कौमुदीम् ।'
'रम्भामिव भुवं गताम् ।'

इत्यादि तु उत्प्रेक्षैव । धातुमत्तादेर्हि प्रत्यक्षेणैव अकालसन्ध्यादिसादृश्यमुपलभ्य 'अकाले सन्ध्या न स्यात्' इति असम्भाव्यवस्त्वध्यवसायस्य सम्भावना

## सङ्केतः

अयमभिसन्धिः—इह तमःकर्तृकं अङ्गकर्मकं लेपनम्, नभःकर्तृकं अञ्जनकर्मकं वर्षणं च प्रतीयते । तत्र तावत्—तमोनभसोः न लेपनवर्षणकर्तृकत्वं उत्प्रेक्ष्यम् । तदुत्प्रेक्षायाः संशयविशेषतया तस्यात्र साधारणधर्मदर्शनजत्वेन उपमाविषय एव अन्तर्भावात्, न च तमोलेपनकर्तुर्वा सादृश्यप्रतीतिरस्ति साधारणधर्माप्रतीतेः । व्यापनस्य लेपनकर्तृनिष्ठतया, प्रसरणस्य नभोवृत्तितया वा अप्रतीतेः । नापि लेपनवर्षणयोः तद्रूपकर्तृत्वं उत्प्रेक्ष्यम् । तद्वाचकेवशब्दासमभिव्याहृतत्वात् । तस्मात् तमःकर्तृकाङ्गकर्मकत्वेन प्रतीते व्यापने लेपनत्वम्, नभःकर्तृकाञ्जनकर्मकत्वेन ज्ञाते अधःप्रसरणे[1] वर्षणत्वं च उत्प्रेक्ष्यमिति वक्तव्यम् । गत्यन्तराभावात् । व्यापनलेपनयोः तिर्यक्संयोग-

---

1 'अन्धकारप्रसरणे'–ज.

## सङ्केतः

क्रियते—'अकालसन्ध्यामिवे'ति। प्रत्यक्षोपलम्भे च न युक्त्यन्तराकाङ्क्षा। उपमानस्यासम्भवात् न तूपमा।

'रवेरिवान्धकारश्रीः कालधर्म इवामृतात्।
अनीतिः पुरुषादस्मात् अहो! कौतूहलं महत्॥'

इतिवत् असम्भाव्योपमेयदर्शनाभावात् असम्भवोपमाऽपि न।

'भारं वहतीव पुङ्गवः'
'पयो ददातीव स्त्री'

इत्यादौ तु हृद्यत्वाभावात् नोत्प्रेक्षा। क्वापि क्विब्विधौ आमुखे उपमाच्छाया। निर्वाहे तु—उपमानस्य प्रकृते सम्भवौचित्यात् सम्भावनोत्थाने उत्प्रेक्षैव॥ स्वं यथा—

'यस्याज्ञया समं पादपद्मद्वयनखद्युतिः।
मालतीमाल्यतितरां नमद्भूपालमौलिषु॥' इति॥

## मधुमती

जनकक्रियात्वेन वर्षणाधःप्रसरणयोः अधसंयोगजनकक्रियात्वेन च साम्यप्रतीतेः।

इयांस्तु विशेषः—व्यापने निरुक्तं रूपं स्वतस्सम्भवि, अधःप्रसरणे तु कविनिबद्धप्रौढोक्तिसिद्धम्। तत्र च बाधितेऽप्यन्वयबोधाङ्गीकारात्,

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि।'

इति मतावलम्बनात् इति ध्येयम्॥

## ५. ससन्देहालङ्कारः

**ससन्देहस्तु भेदोक्तौ**
**तदनुक्तौ च संशयः[1] ॥९२॥**

**भेदोक्तौ[2] यथा—**

---

### सङ्केतः

**संशय इति।** यत्र अप्रस्तुतेन संशयवता वचसा प्रस्तुतं उत्कर्ष्यते[3] स ससन्देहोऽलङ्कारः। अयं च प्रतिभोत्थापितः[4]चमत्कारीति 'स्थाणुर्वा नरो वा' इत्यादौ नालङ्कारता। तत्र उपमेयं उपमानादभित्त्वा भित्त्वा वोच्यते। स च निश्चयगर्भो निश्चयान्तः शुद्धश्चेति त्रिधा।

### मधुमती

**ससन्देहस्त्विति।** **सन्देहः** इति लक्ष्यनिर्देशः। **संशयः** इति लक्षणम्। **भेदोक्तौ** इत्यादिः विभागः।

---

1 ननु किमिदमिह संशयत्वम्? न तावत् अनवधारणज्ञानत्वम्, उत्कट-कोटिकसंशयात्मिकायां उत्प्रेक्षायां अतिव्याप्तेः। नापि एकस्मिन् धर्मिणि विरुद्धानेक-कोट्यवगाहिज्ञानत्वम्, 'मुखचन्द्रः' इति रूपकातिव्याप्तेः। नापि अनाहार्यत्व-विशेषितं तत्, 'अङ्कं केऽपि शशङ्किरे' इत्यपह्नुतौ अतिव्याप्तेः। नापि तादृशैक-ज्ञानत्वम्। 'सौधेषु यस्यां सुदतीमुखेन्दुः' इत्यादौ अव्याप्तेः। तत्र हि चन्द्रमुखयोः संशयधर्मिणोरेवानेकत्वम्, प्रकारस्तु शीतांशुरूप एक एवेति अनेककोटिकत्वाभावात् इति चेत्—न। हृद्यसादृश्यहेतुकविरुद्धनानार्थविषयकानाहार्यानवधारणज्ञानं सससन्देहः इत्यत्र लक्षणतात्पर्यात्॥ 2 भेदो नाम वैधर्म्यम्। तस्योक्तावित्यर्थः।
3 'उत्कृष्यते'—ग. 4 'पितकायः'—घ.

अयं मार्तण्डः किम्? स खलु तुरगैः सप्तभिरितः,
कृशानुः किम्? सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किम्? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्[1] प्रतिभटाः[2] ॥४२१॥

'भेदोक्तौ' इत्यनेन, न केवलमयं निश्चयगर्भः ।
यावत् निश्चयान्तोऽपि सन्देहः स्वीकृतः । यथा—

---

### सङ्केतः

तत्र भेदोक्तौ निश्चयगर्भो यथा—अयमिति । अत्र आदावन्ते च संशयः, मध्ये तु 'तुरगै'रित्यादिना भेदोक्तौ निश्चयः ॥

### मधुमती

अयमिति । अत्र तत्तद्वैधर्म्याभिधानेन भेदस्य प्रतीयमानतया निश्चयगर्भत्वं स्फुटम् ।

भेदोक्तावितीत्यादि । तथा च भेदः प्रतीयमानः शाब्दो वा भवतु । उभयथाऽपि भेदप्रतीतिः । तत्र प्रथमे निश्चयगर्भत्वम्, द्वितीये निश्चयान्तत्वमिति[3] ।

---

1 'वितर्कान्'—क. 2 अत्र प्रकृष्टप्रतापवत्त्वं मार्ताण्डत्वविकल्पे, दुर्ग्रहत्वं कृशानुत्वविकल्पे, क्षणेनसकलहन्तृत्वं च कृतान्तत्वविकल्पे हेतुरिति ज्ञेयम् । 3 'निश्चयान्तगर्भत्वमिति'—च.

इन्दुः किम्? क्व कलङ्कः?
　　सरसिजमेतत् किम्? अम्बु कुत्र गतम्?।
ललितसविलासवचनैः
　　मुखमिति हरिणाक्षि! निश्चितं परतः[1] ॥४२२॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमानः इति उपेक्षितो भट्टोद्भटेन। तदनुक्तौ यथा—

---

### सङ्केतः

इन्दुरिति। अत्र क्व कलङ्कः इत्यादि भेदकोक्तिः। आदौ संशयः, अन्ते च निश्चयः॥

किन्त्विति। अयं भावः—निश्चितं इत्युक्त्या निश्चयस्य न व्यङ्ग्यत्वम्, किन्तु वाच्यत्वम्। व्यङ्ग्यत्वे च आश्चर्यमिति[2]॥

### मधुमती

किन्त्विति। प्रतीयमानः व्यङ्ग्य इत्यर्थः।

---

1 अयं भावः—भेदो नाम वैधर्म्यम्। तदुक्तिश्च द्वेधा-उपमाननिष्ठवैधर्म्यस्योक्तिः, उपमेयनिष्ठवैधर्म्यस्योक्तिश्चेति। तत्र उपमाननिष्ठस्योक्तौ निश्चयस्य मध्यवर्तित्वात् गर्भता। असति तस्मिन् निश्चये पूर्वपूर्वसंशये विद्यमाने संशयान्तरानुत्पत्तेः। उपमेयनिष्ठस्य वचनादिरूपस्योक्तौ तु वास्तवमुखत्वनिश्चये सति संशयान्तराभावात् न निश्चयगर्भता, किन्तु निश्चयान्ततैव इति॥ (सु). 2 'चायमिति'–ग.

अस्याः सर्गविधौ[1] प्रजापतिरभूत् चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनः ? मासो नु पुष्पाकरः ? ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलः
निर्मातुं प्रभवेत् मनोहरमिदं रूपं पुराणो मुनिः[2] ? ।।४२३।।

इति ससन्देहालङ्कारः[3]

---

## सङ्केतः

भेदोक्तेरभावात् सन्देहनिर्वाहे शुद्धो यथा—अस्याः इति । अत्र 'कान्तद्युतिः' इति युक्तः पाठः । निर्वाहे निर्माणस्यैव श्रूयमाणत्वात् न कान्तिप्रदानस्य विधिः । विधिश्च स्वस्वविशेषणविशिष्टचन्द्रादिरूपो भूत्वा एनां चक्रे । यद्वा—नैनां पुराणः प्रजापतिरकार्षीत्, किन्तु—चन्द्रादिः । कान्तिमत्त्व-सरसत्व-सुकुमारत्वादिधर्मदर्शनात् । यो हि स्वयं कान्तद्युतिः शृङ्गारैकरसः पुष्पाकरश्च स एव कान्तिमद्रसवत्सौकुमार्यवद्वस्तु कर्तुं समर्थः । अत एवायमर्थः पूर्वोक्तविशेषणत्रयस्य उत्तरार्धविशेषणत्रयेण यथासंख्यं व्यतिरेकोक्त्या उपोद्बलितः । स्रष्टुः सृष्टिसम्बन्धेऽप्यसम्बन्धः उक्तः इति अतिशयोक्तिरपि ।

## मधुमती

अस्या इति । कान्तिप्रदश्चन्द्रः, शृङ्गारैकरसो मदनः, पुष्पाकरो मासः इत्यन्वयः । तथा च—पुराणमुनिनिर्माणाभावे निश्चितेऽपि,

---

1 'सृष्टिविधौ'–क. 2 ऊर्वश्यनुरक्तमनसः पुरूरवसो वचनमिदम् । अयं च चन्द्राद्यनेकधर्मिकः ऊर्वशीस्रष्टृत्वरूपैककोटिकः संशयः । अत्र च पुराणमुनेः चन्द्रादिभ्यो वैधर्म्यस्योक्तावपि संशयधर्मिणां मिथः वैधर्म्यमनुक्तमिति ध्येयम् । (विक्रमोर्वशीये १-१०) अत्र कान्तप्रभाशालित्वम्, शृङ्गारैकप्रधानत्वं, सहजसौरभ्यमार्दवादिकं च कान्तानिष्ठं तत्तधर्मिकत्वे निमित्तम् ॥ 3 स्यात् स्मृतिभ्रान्तिसन्देहैः तदङ्कालङ्कृतित्रयम् । पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ (कु) ।

## सङ्केतः

अत्र च 'स खलु तुरगैः' इत्यादिवत् न भेदकोक्तिः[1] । चन्द्रादयो ह्येवंविधाः इत्यनुक्तेः । उत्तरार्धेन सन्देहनिर्वाहाच्च शुद्धत्वम् ॥ तथा—

'रञ्जिता नु विविधास्तरुशैलाः
नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥'

इत्यत्र ध्वान्ताद्यैः तर्वादि न व्याप्तम् । किन्तु—रञ्जितमित्याद्युत्प्रेक्षितम् । सन्देहद्वारेणेति उत्प्रेक्षाश्रयेण । सन्देहद्योती 'नु' शब्दः । अन्ये तु 'नु' शब्दस्य सम्भावनोत्थापकत्वात्[2] उत्प्रेक्षामेवाहेत्याहुः ॥

'अयं मार्तण्डः किं स खलु तुरगैः'

इत्यत्र उपमेयस्य उपमानेनाभेदे पश्चाद्भेदे प्रोच्यमाने यद्यप्यादौ रूपकव्यतिरेकावभासः । तथापि सङ्करधीः न कार्या । सन्देहस्यैव निर्वाहात् । इतरौ तु छायामात्रेण सन्तावप्यसत्कल्पाविति । यद्वा—रूपकव्यतिरेकयोः उत्कटतया भेदेन भासनात् अत्र न सङ्करः । उत्कटभेदे हि स स्यात् । तर्हि संसृष्टिः ? न । उपकार्योपकारकत्वेन नैरपेक्ष्याभावात् इति ॥ इति ससन्देहः ॥

## मधुमती

चन्द्रादिनिर्मितत्वे सन्देहतादवस्थ्यात् भेदानुक्तिरित्यर्थः ।

"गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः[3] ॥"

इत्यत्र तु सन्देहस्य असाधारणधर्मजत्वेन आक्षिप्तौपम्यव्यतिरेकालङ्कार इति बोध्यम् ॥ इति ससन्देहः ॥

---

1 'भेदोक्तिः'–ग. 2 'सम्भावनाद्योतकत्वात्'–ग. 3 (शिशुपालवधे १-२) ।

## ६. रूपकालङ्कारः

**तद्रूपकं अभेदो यः**
**उपमानोपमेययोः ॥**

**अतिसाम्यात् अनपह्नुतभेदयोः अभेदः**[1] ।

---

### सङ्केतः

**तद्रूपकमिति** । रूपयति—एकतां नयति इति **रूपकम्** । **अभेदः** इति भणनात् अभेदप्राधान्ये रूपकं स्यादिति लब्धम् । 'मुखचन्द्रः' इत्यादिरूपके हि चन्द्रेण स्वगुणाः लक्ष्यन्ते, तैः मुखगुणाः, तैरपि मुखम् । ततश्च सामानाधिकरण्यं मुखचन्द्रयोः गुणद्वारेण ताद्रूप्यादिप्रतीत्या उपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिः । **अतिसाम्यादिति** । साम्यमात्रे उपमा, अतिसाम्ये तु रूपकम्, सर्वथाऽतिसाम्ये पुनः अप्रस्तुतप्रशंसाऽतिशयोक्ती । अत एव सूत्रे 'तद्रूपकमभेद एव यः' इत्यवधारणं न कृतम् ॥

इदं तत्त्वम्—भेदे ज्ञातेऽपि यत्र अभेदप्रतीतिरेव, तत्र क्रमेण उपमा-रूपक-अतिशयोक्त्याद्याः ज्ञेयाः । यत्र तु अज्ञाते भेदे किल अभेद-प्रतीतिरेव, तत् मिथ्याज्ञानम् । तत्र न कोऽप्यलङ्कारः इति ॥

**अनपह्नुतेति** । अपह्नुतभेदयोः उपमानोपमेययोस्तु अप्रस्तुतप्रशंसाऽति-

### मधुमती

**तद्रूपकमिति** । **अभेदः** अभेदप्रत्ययः । वास्तविकाभेदस्य बाधात् । अत एवात्र उपमानवाचकपदे गौणसाध्यवसानाऽपि ॥ एतदेवाह—**अति-साम्यादिति** । **अनपह्नुतभेदयोः** इति अतिशयोक्तिविशेषात् व्यवच्छि-

---

1 न च मुखचन्द्रयोः भेदज्ञाने जाग्रति सति कथमभेदधीरिति चेन्न । चन्द्र-पदस्य मुखे लक्षणया चन्द्रत्वप्रकारकप्रतीतेः आहार्यरूपाया एव फलान्यथानुपपत्त्या अङ्गीकारात् । आहार्यज्ञाने च विशेषदर्शनस्य अप्रतिबन्धकत्वात् ॥

समस्तवस्तुविषयं
श्रौताः आरोपिताः यदा ॥९३॥

आरोपविषयाः इव आरोप्यमाणाः यदा शब्दोपात्ताः, तदा—समस्तानि वस्तूनि विषयः अस्येति[1] समस्तवस्तुविषयम्। आरोपिताः इति बहुवचनं अविवक्षितम्[2] ॥ यथा—

---

## सङ्केतः

शयोक्ती स्याताम् ॥

आरोपविषयः ज्योत्स्नादिः, आरोप्यमाणः भस्मादिः ॥

अविवक्षितमिति। तेन आरोपितौ इति, आरोपितः इति च सिद्धम्।

## मधुमती

नत्ति। तत्र उपमेयस्य निगीर्णत्वात् ॥

एतद्विभजते—समस्तेति। तथाच–आरोप्यारोपविषययोः शाब्दत्वे समस्तवस्तुविषयनामकं रूपकमित्यर्थः। एकमात्रारोप्यत्वे आरोपिताः—आरोपविषयाः इति बहुवचनं अनन्वितम्, अत आह—आरोपिताः इति।

---

1 अस्य–आरोपस्य। 2 तथाच 'फणिभैणे'त्यादौ द्वयोरेवारोप्यमाणत्वेऽपि नाव्याप्तिः।

ज्योत्स्नाभस्मच्छुरण[1]धवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपात् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४२४ ॥

अत्र पादत्रये अन्तर्धानव्यसनरसिकत्वं आरोपित-

---

## सङ्केतः

**ज्योत्स्नेति** । **चन्द्र एव मुद्राकपालम्** । अत्र पादत्रये **समस्त-वस्तुविषयं** रूपकम् । चतुर्थे तु पादे अपह्नुतिः । **परिमलशब्दः** स्वरूपार्थः । **रसिकत्वमिति** । **रात्रिरेव कापालिकी** इति रूपकसमासे कापालिक्याः प्राधान्ये तस्याः सचेतनत्वात् **अन्तर्धानव्यसनरसिकत्वं** युक्तमेव । **रात्रिः कापालिकीव** इति उपमासमासे तु रात्रेः प्राधान्यं स्यात्, ततश्च तस्याः अचेतनत्वात् **अन्तर्धानव्यसनरसिकत्वं** न[2] घटत इति भावः ।

## मधुमती

**ज्योत्स्नाभस्मेति** । **परिमलः** गाढसम्बन्धः । **अत्रेति** । **लाञ्छनस्य च्छलेन** इत्यत्र अपह्नुतेः स्फुटत्वात् पादत्रये इत्युक्तम् । ननु— **ज्योत्स्ना भस्मेव, ज्योत्स्नैव** वा भस्म ; **तारकाः अस्थीनीव, तारका** एव वा **अस्थीनि ; रात्रिः** कापालिकीव, **रात्रिरेव** वा **कापालिकी ; चन्द्रमुद्रा कपालमिव, चन्द्रमुद्रैव** वा **कपालम् ;** इति उपमारूपकयोः साधकबाधकमानाभावात् संशयात्मकालङ्कारसङ्करोदाहरणमिदम्, न रूपकोदाहरणं इत्याशङ्क्याह—**अन्तर्धानेति** । उपमितसमासे हि रात्रेः प्राधान्यम्,[3] तस्यां च **अन्तर्धानव्यसनरसिकत्वं** बाधितम्, रूपके च कापालिक्याः

---

1 छुरणं–उद्धूलनम् । 2 युक्तमेवेत्यादि नास्ति–ग. 3 'अप्राधान्यम्'–च.

धर्म एवेति, रूपकपरिग्रहे साधकमस्तीति, तत्सङ्कराशङ्का न कार्या[1] ॥

**श्रौताः आर्थाश्च ते यस्मिन्**
**एकदेशविवर्ति तत् ।**

केचित् आरोप्यमाणाः शब्दोपात्ताः, केचित् अर्थसामर्थ्यात् अवसेयाः, इति एकदेशे विवर्तनात् एकदेशविवर्ति ॥ यथा—

---

### सङ्केतः

**एकदेशेति ।** एकदा एकस्मिन् काले **ईशः** शाब्दत्वात् समर्थः **विवर्तः** रूपणविधिः यत्र तत् तथा इति वा व्युत्पत्तिः ॥

### मधुमती

प्राधान्यम्, तत्र च तदविरुद्धमिति **रूपकसाधक**सत्त्वात् न संशयात्मकसङ्करः, किन्तु रूपकमेवेति भावः ॥

**श्रौता इति ।** शाब्दा इत्यर्थः । **आर्थाः** अर्थलभ्याः[2] व्यञ्जनागम्याः इति यावत् । तद्व्यञ्जनं च[3] श्लिष्टविशेषणमाहात्म्यात् ॥ अत एव एतादृशि रूपके यद्यपि समासोक्तिरप्यस्ति, तथापि- –रूपकादेव कविप्रतिभासंरम्भगोचरात् चमत्कारः इति, तदङ्गत्वेन सा अन्यथासिद्धा, उपमावत् इति द्रष्टव्यम् ॥

---

1 'कार्या । एवं रूपकेणैव निर्वाहः । '–क. 2 'अर्थलक्ष्याः '–ज. 3 'तद्व्यञ्जक '–च.

जस्स रणन्तेउरए
करे कुणंतस्स मण्डलग्गलअं ।
रससंमुही वि सहसा
परंमुही होइ रिउसेणा [1] ॥ ४२५ ॥

[यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥]

अत्र रणस्य अन्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् । मण्डलाग्रलतायाः नायिकात्वम्, रिपुसेनायाश्च प्रतिनायिकात्वं अर्थसामर्थ्यादवसीयते इति, एकदेशे विशेषेण वर्तनात् [2] एकदेशविवर्ति ॥

**साङ्गमेतत् ।**

उक्तद्विभेदं सावयवम् ॥

**निरङ्गं तु शुद्धम् ।**

---

### सङ्केतः

**साङ्गमेतदिति ।** न केवलं यत्र तस्यैव [3] रूपणम्, अपि तु तदङ्गस्यापि ॥ **द्विभेदमिति ।** पूर्वोदाहरणयोः समस्तवस्त्वेकदेशविवर्तिविषयतयेत्यर्थः ॥

**निरङ्गमिति ।** निरवयवमित्यर्थः । यत्र केवल एवाङ्गी रूप्यते

### मधुमती

**साङ्ग**मित्यस्य विवरणं **सावयव**मिति । तथाच यत्र धर्मधर्मिणोः उभयोरपि रूपणं, तत्र साङ्गम् । यत्र तु धर्मिमात्रस्य रूपणं तत्र **निरङ्ग** इत्यर्थः । अत एवाह—**निरङ्गं तु शुद्धं** इति । धर्मि [4] मात्रस्यैव रूपणादित्यर्थः ।

---

1 (गाथासप्तशती–९८०) । 2 'एकदेशविवर्तनात्'–ख. 3 'न केवलं मुख्यस्यैव'–ग. 4 'धर्म'–च.

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो! वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्[1]॥ ४२६॥

## सङ्केतः

नाङ्गानि, तत् निरङ्गम्। यथा—प्रेमलतिकामिति। अत्र केवलोऽङ्ग्येव लतालक्षणः रूपितः,[2] न तु तदङ्गं पत्रादि इति शुद्धम्। प्रेमैव लतिका इत्यत्रान्यत्रापि रूपकसमासे मयूरव्यंसकादित्वात् एवशब्दलोपः। उपमा-समासे तु सर्वत्र व्याघ्रादित्वात् इवशब्दलोपः। यत्र अन्यतरपरिग्रहे साधक-प्रमाणाभावः, तदितरस्य वा परिहारे न स्याद्बाधकं प्रमाणम्, तत्रैव सन्देह-सङ्करप्रसङ्गः, प्रकृते लतायाः सेचनं आनुकूल्यात् आरोपितधर्म एवेति रूपक-परिग्रहे साधकं प्रमाणमस्तीति न सन्देहसङ्करः[3]॥

## मधुमती

कुरङ्गीवेति। स्तिमितयति स्तिमितं[4] करोति। प्रश्नयति प्रश्न-वन्तं=प्रश्नविषयं करोति। णिचः इष्ठवद्भावात् 'विन्मतुपोर्लुक्' इति मतुपो लुक्। 'कृतपूर्वी कटं' इति न्यायेन द्वितीया। अत्र लतिकाधर्माणामेवा-रोपात् निरङ्गता द्रष्टव्या॥

---

1 स्तिमितयति—स्तम्भाख्यं सात्त्विकभावं अभिव्यञ्जयति। नायकगुणानुविद्ध-गीतध्वनिषु मृगीव सौख्यात् शिथिलीभवतीत्यर्थः। अन्तः—अनिद्रं यथा तथा। ध्याननिमीलितनयनेत्यर्थः। अत्र प्रेम्णः लतिकात्वेन सकृदेव रूपणात् केवलं निरवयवम्॥ 2 'अत्र लता अङ्गिनी'–घ. 3 'नोपमा'–ग. 4 'वेति। प्रसवन्ती'–ज.

## माला तु पूर्ववत् ॥ ९४ ॥

मालोपमायामिव इहैकस्मिन्[1] बहवः आरोपिताः । यथा—

सौन्दर्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्मणकर्म, नर्मरहसां[2] उल्लासनावासभूः ।
विद्या वक्रगिरां, विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः[3] पञ्चशिलीमुखस्य, ललनाचूडामणिः सा प्रिया[4] ॥
॥ ४२७ ॥

---

### सङ्केतः

एवं केवलं शुद्धरूपकमुक्त्वा मालारूपकमाह—मालेति । सौन्दर्यस्येति । रहांसि रहस्यानि । अत्र प्रियारूपः एक एव आरोपविषयः मुखाद्यङ्गैर्विना तनुगुणैः[5] तरङ्गिण्याद्यैः रूपितः इति निरङ्गम् ॥

### मधुमती

**माला तु पूर्ववदिति** । एकत्र अनेकोपमानोपमेयोपादानात् मालोपमेव, अत्रापि एकत्र अनेकारोपात् मालारूपकमित्यर्थः ॥

---

1 इह इति नास्ति–क. 2 'नर्मवचसां'–ख. 3 'प्राणाः'–ख. 4 कश्चित् विरही प्रेयसीं एवं परामृशति । कार्मणकर्म—वशीकरणमन्त्रप्रयोगः । नर्मरहसां—क्रीडारहस्यानाम् । विद्या—उपदेशरूपा । 'उन्मादनः तापनश्च शोषणः स्तम्भनस्तथा । संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥' अत्र एकस्यां प्रियायां सौन्दर्यतरङ्गिण्यादयः बहवः आरोप्यन्ते । 5 'तनुगुणैः' इति नास्ति–ग.

**नियतारोपणोपायः**
**स्यादारोपः परस्य यः[1]।**
**तत् परम्परितं श्लिष्टे**
**वाचके भेदभाजि वा ॥९५॥**

---

### सङ्केतः

**नियतेति ।** नियतं ध्रुवं तडागादेः **आरोपणं उपायः** यस्य स तथा । यद्वा—**नियतस्य आरोपणं उपायः** यस्य स तथा । **परस्येति ।** हंसादेः **आरोपः** इत्यर्थः ॥

### मधुमती

निरङ्गस्यैव भेदान्तरमाह—**नियतेति ।** तथाच रूपकहेतुकं रूपकं परम्परितमित्यर्थः । **श्लिष्टे वाचक इति ।** अनेन शब्दश्लेषवत्त्वमभिप्रैति । तच्च—श्लिष्टयोः समानाकारतया, समानाकारयोः श्लिष्टतया वा । एतच्च उदाहरणे एव स्फुटम् । **भेदभाजि** अश्लिष्टे । अन्यथा श्लेषेऽपि भेदसत्त्वात् भेदो न स्यात् । इयांस्तु विशेषः—श्लिष्टवाचके एकपदादेव उभयोपस्थितिः, अश्लिष्टे तु भिन्नपदादिति ॥

---

1 यत्र परस्यारोपः नियमेन अन्यारोपणहेतुर्भवति तत्र रूपकपरम्परा संजायत इति भावः ।

यथा—

विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४२८ ॥

अत्र मानसमेव मानसं, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गायाः मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः ; एवं आरोपणनिमित्तः हंसादेरारोपः[1]॥

---

## सङ्केतः

विद्वदिति । सती गौरी, तत्पिता दक्षः प्रजापतिः । विजयस्य अर्जुनस्य प्राग्भावे अग्रजत्वे, भीमसेनः सन् भीमः, न तु भीम इव भीमः। उपमात्वप्रसङ्गात् । वैरिञ्चं ब्राह्मम् । अत्र मानसाद्याः वाचकाः श्लिष्टाः । एवमारोपणेति । एवं आरोपणं निमित्तं यस्य आरोपस्येति । पूर्वं मानसादीनां मानसत्वादिकं आरोप्यते, ततश्च हंसाद्यारोपः इति परम्परित-शब्दार्थः ॥

## मधुमती

विद्वन्मानसेति । नीललोहितः हरः । दक्षः प्रजापतिरपि । प्राग्भावः प्रागुत्पत्तिः । अत्र श्लिष्टपरम्परितत्वं दर्शयति—अत्र मानस-मेवेत्यादि ॥

---

1 कमलादिपदानां अत्र श्लिष्टता चेति श्लिष्टपरम्परितं मालारूपमिदम् ।

**यद्यपि—शब्दार्थालङ्कारोऽयमित्युक्तम्, वक्ष्यते च। तथापि—प्रसिद्ध्यनुरोधात् अत्रोक्तः। एकदेशविवर्ति हि इदं अन्यैरभिधीयते [1] ॥**

---

## सङ्केतः

**यद्यपीति**। अयं भावः—मानसादीनां अन्वयव्यतिरेकाभ्यां अपरावृत्तिसहत्वेन, हंसादीनां तत्सहत्वेन च उभयालङ्कारः परम्परितरूपकमिति। **उक्तम्**—पूर्वं शब्दश्लेष-पुनरुक्ताभासयोः। **वक्ष्यते** सङ्करालङ्कारे। **अन्यैः** उद्भटाद्यैः। परम्परितमेव हि तैः एकदेशविवर्तिनाम्ना ऊचे। तथा—'त्वमेव हंसः' इत्याद्यारोपणपूर्वकः 'मानसमेव मानसः' इत्याद्यारोपः इत्यन्ये ॥

## मधुमती

ननु श्लिष्टपरम्परितस्य उभयालङ्कारतया, पुनरुक्तवदाभासवत् शब्दालङ्कारप्रस्ताव एवाभिधातुमुचितम्, न तु अर्थालङ्कारप्रस्तावे इति शङ्कते—**यद्यपीति**। तदुक्तं—'इह दोषगुणालङ्काराणाम्' इत्यादिना नवमोल्लासे। वक्ष्यते चात्रैव सङ्करप्रस्तावे इत्यर्थः। **तथापीति**। तथाच—द्वयोरुभयालङ्कारत्वेऽपि पुनरुक्तवदाभासस्य शब्दालङ्कारतया अस्य च अर्थालङ्कारतया प्रसिद्धिरिति तथैवोक्तमित्यर्थः ॥ इह—येषु शब्दान्वयव्यतिरेकानुविधानं आवश्यकम्, तत्र शब्दालङ्कारत्वप्रसिद्धिः, 'तनुवपु'रित्यादौ तस्यावश्यकत्वात्। तदतिरिक्ते तु अर्थालङ्कारत्वप्रसिद्धिः इति द्रष्टव्यम् ॥

---

1 'एकदेशविवर्तीदमन्यैरप्यभिधीयते'—क. वस्तुतस्तु—श्लिष्टनिबन्धनाभेदारोपरूपवैचित्र्यनैयत्यात् ततो भिन्नमेवेति ध्येयम्।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य, दृषदां सेतुर्विपद्वारिधेः,
पूर्वाद्रिः करवालचण्डमहसः, लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरः
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः[1] ॥४२९॥

अत्र जयादेः भिन्नशब्दवाच्यस्य कुञ्जर[2]त्वाद्यारोपे भुजस्य आलानत्वाद्यारोपः युज्यते ॥

अलौकिकमहालोकप्रकाशितजगत्त्रयः[3] ।
स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान्? ॥ ४३० ॥

---

## सङ्केतः

**भेदभाजीति** । अश्लिष्टे वाचके इत्यर्थः । **आलानमिति** । अत्र **लीलोपधानं श्रियः** इति परम्परितमपि एकदेशविवर्ति । **श्रियः** स्त्रीत्वानुक्तेः । अत्र दृष्टान्तद्वये श्लिष्टाश्लिष्टशब्दमालया परम्परितरूपकम् ।

इदानीं श्लिष्टाश्लिष्टशब्दं केवलत्वेन परम्परितरूपकं दृष्टान्तद्वयेनाह— **अलौकिकेत्यादि** । **आलोकः** ज्ञानं तेजश्च । **वंशः** वेणुः अन्वयश्च । अत्र वंशस्य वंशत्वारोपः राज्ञो रत्नत्वारोपणोपायः ।

## मधुमती

**आलानमिति** । **लीलोपधानं श्रियः** रूपकमात्रम्, न तु परम्परितम् । रूपकहेतुकस्य रूपकस्याप्रतीतेः ॥

श्लिष्टरूपकं उपमारूपकं रशनारूपकं च ग्रन्थान्तरोक्तं इह कस्मान्नोक्तम्? इत्यत्र समाधिं वक्तुं उदाहरणानि तावदयं दर्शयति—**अलौकिकेत्यादि** । तत्र वंशपदस्य श्लिष्टत्वेन श्लिष्टरूपकत्वम् ॥

---

1 भट्टश्यामलस्य पद्यमिदम् । 2 'वाच्यकुञ्जर'–क. 3 'प्रसादितजगत्त्रयम्'–ख.

निरवधि च निराश्रयं च यस्य
स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्तिः
जयति चतुर्दशलोकवल्लिकन्दः ॥ ४३१ ॥

इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ॥

---

## सङ्केतः

निरवधीति । इह भवान् पूज्यः कूर्ममूर्तिः विष्णुः इति अतिशयोक्तिः । लोका एव वल्ली, तस्याः कन्दः । अत्र लोकानां वल्लीत्वारोपः कृष्णस्य कन्दत्वारोपणोपायः । वाचकश्चात्र न श्लिष्टः वल्लिकन्दः इति । पूर्वत्र तु श्लिष्टः सद्वंशः इति । एवं श्लिष्टाश्लिष्टशब्दं मालया द्विधा, केवलत्वेन द्विधा इति चतुर्धा परम्परितम् । साङ्गनिरङ्गयोः मालाकेवलत्वेन प्रत्येकं द्विभेदत्वे चतुर्भेदत्वम् । तदेवं अष्टधा रूपकम् । अन्येऽपि प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः सन्ति । ते अन्यतो ज्ञेयाः ॥

## मधुमती

निरवधीति । अत्र कूर्ममूर्तिरिव इत्युपमा चतुर्दशलोकवल्लीकन्दत्वरूपणे हेतुः इति उपमारूपकम् ॥ इति चेति । यत्र एकरूपकस्य रूपकान्तरहेतुत्वं तत्र रशनारूपकम् । एतच्च सर्वं परम्परितरूपकमेव, न तु अधिकम् । अतो नोक्तमित्यर्थः ॥

किसलयकरैर्लतानां
करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैः
मुखेन्दुभिः योषितां मदनः ॥ ४३२ ॥

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ॥

इति रूपकालङ्कारः[1]

---

## सङ्केतः

**किसलयेति** । अत्र किसलयान्येव कराः, करा एव कमलानि इत्यादिक्रमेण मिथः सङ्घटनात् रशनासादृश्यम् ॥

'सत्कीर्तिमालतीक्षारमासः पिशुनसङ्गमः ।'

इत्यादौ वैधर्म्येण रूपकम् । तथा—आरोपविषयाणां बहुत्वात् आरोप्यस्यापि बहुत्वम् ।

'सत्यं कुवलयकुलोल्लासिनोऽमी नखेन्दवः ।'

इत्यादौ इन्दोरेकत्वेऽपि नखेषु प्रत्येकमारोपात् बहुत्वम् ॥ इति रूपकम् ॥

## मधुमती

**किसलयेति**। अत्र किसलय–करकमल–मुखशब्दानां रशनाक्रमेण विन्यासात् रशनारूपक[2]मित्यर्थः ॥ अनभिधाने हेतुमाह—**न वैचित्र्यवदिति** ॥ इति रूपकम् ॥

---

1 विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्त्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः ॥ अयं हि धूर्जटिः साक्षात् येन दग्धाः पुरः क्षणात् । अयमास्ते विना शम्भुः तार्तीयीकं विलोचनम् । शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् । अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना । साध्वीयमपरा लक्ष्मीः असुधासागरोदिता । अयं कलङ्किनश्चन्द्रात् मुखचन्द्रोऽतिरिच्यते ॥ (कु) । 2 'सात् नानारूप'–च.

## ७. अपह्नुत्यलङ्कारः

**प्रकृतं यन्निषिध्यान्यत्**
**साध्यते[1] सा त्वपह्नुतिः ।**

उपमेयं असत्यं कृत्वा उपमानं यत् सत्यतया स्थाप्यते, सा त्वपह्नुतिः । उदाहरणम्—

---

### सङ्केतः

**प्रकृतमिति** । **अन्यत्** उपमानम् । तच्च **प्रकृतं** अप्रकृतं वा । रूपके हि आरोप्यारोपविषययोः अनपह्नवे स्फुटेन रूपेण आदावेव सादृश्यं प्रतीयते । अत्र तु उपमेयस्य अपह्नुत्या मुखे पारमार्थिकस्य असत्यत्वं, तदितरस्य सत्यत्वम् । प्रतीत्यनिर्वाहे आरोप्यारोपविषययोः सादृश्यं प्रतीयते, स्थूलतया अपह्नवे विश्रान्तिः, तात्पर्येण तु सादृश्ये एवेति भावः ॥

### मधुमती

**प्रकृतमिति** । रूपके तु न **प्रकृतनिषेधः**[2] इति ततो भेदः । वस्तुतस्तु—प्राकरणिकं निषिध्य अप्राकरणिकं यत् साध्यते सा अपह्नुतिः इति ज्ञेयम् । अत एव—

'केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुराः तस्य दृढं कण्ठे स्थापिताः ॥'

इत्यत्र 'स्वयं वनं न प्रपलाय्य गताः तद्वैरिणः, अपितु ततः पराभवं सम्भाव्य तान् कन्दराः न त्यजन्ति इति अपह्नुतिः व्यज्यते' (४ उल्लासे) इत्यादिना

---

1 'स्थाप्यते'–क. 2 'प्रकृतविषयः'–च.

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि[1] ॥ ४३३ ॥

इत्थं वा—

बत ! सखि ![2] कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ ४३४ ॥

---

## सङ्केतः

अवाप्त इति । अत्र कलङ्कनिशे प्रकृते । द्वयोरपि वर्ण्यत्वेन प्रस्तुतत्वात् ॥

बतेति । अत्र भृङ्गेति प्रकृतम्, अपरं तु अप्रकृतम् । मन्ये–छलाद्याः शब्दाः असत्यत्ववाचकाः ॥

## मधुमती

औपम्याभावेऽपि अपह्नुतिरुक्ता ॥ न च तत्र व्याजोक्तिरेव । 'न प्रपलाय्य गताः' इति अपह्नवप्रतीतेः, तदुदाहरण इव व्याजाप्रतीतेश्च ॥

अवाप्त इति । अत्र नैवायं इति उपमेयनिषेधः शाब्दः ॥

बतेति । अत्र छलशब्दोपादानात् उपमेयनिषेधः न शाब्दः, किन्तु प्रतीयमानः इति द्रष्टव्यम् ॥

---

1 परिणतरुचः–परिपूर्णस्य प्रागल्भ्यं–साकल्यम् । 2 'वद सखि !'–ख.

अत्र हि—'न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शराः' इति प्रतीतिः।

एवं वा[1]—

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः॥४३५॥

## सङ्केतः

अमुष्मिन्निति। अत्र रोमावलिवपुः इति शब्दः वस्त्वन्तराभिधायी

## मधुमती

अमुष्मिन्निति। अत्र परिणमतीत्युक्तः परिणामः यद्यपि धर्मिणि सत्येव रूपान्तरापत्तिरिति, अपह्नवो न प्रतीयते। तथापि—**परिणमति** इत्यस्य प्रतीयते इत्यर्थः। एवं च अत्रापि उपमेयनिषेधः सिद्धः प्रतीयमानः। अतिशयोक्तिविशेषयोः प्रथमे प्राकरणिकनिषेधानुपादानात्, द्वितीये प्रकृति-

1 विषयासत्यत्वप्रतिपादकछल–छद्म–व्याज–अपदेश–मिषनिभ–मुधा–कपट–कुहना–कैतवादिपदप्रयोगे यथा पूर्वोक्तं, तथा तत्पर्यवसायित्रपुरादिशब्दप्रयोगेऽपि भवति यथा इत्यर्थः।

**अत्र—'न रोमावलिः, धूमशिखेयम्' इति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या[1] ॥**

**इति अपह्नुत्यलङ्कारः[2]**

---

## सङ्केतः

अपह्नवस्य कारणम्। **भङ्ग्यन्तरैरिति**। स्वं यथा—

आरुरोह चितामेषः मालतीविरहादलिः।
न किंशुकस्य कुसुमे वर्तते जीवितेश्वरि! ॥

इति। अत्र प्रागारोपः, पश्चादपह्नवः[3]।

'इदं ते केनोक्तं कथय कमलातङ्कवदने!'

इत्यत्र तु अपह्नवपूर्वकः आरोपः। स्थानद्वयेऽप्यत्र 'नेदं कुसुमं कटकं वा, किन्तु चिता स्मरचक्रं वा इत्यादिप्रतीतिः। **भङ्ग्यन्तराणि** भणितिविशेषाः कदाचित् कथंचित् किमपि किमपि काव्ये निवेश्यते[4] एवेति भावः ॥ इत्यपह्नुतिः ॥

## मधुमती

निषेधेऽपि अन्यस्य साधनाभावात् अस्याः तयोर्भेदः ॥ **एवमिति**।

'इदं ते केनोक्तं कथय कमलातङ्कवदने!'

इत्यादौ प्रागुदाहृते इति बोध्यम् ॥ इत्यपह्नुतिः ॥

---

1 केवलपरपक्षोपन्यासादिनाऽप्यू ह्येत्यर्थः। 2 शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः। नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ स एव युक्तिपूर्वश्चेत् उच्यते हेत्वपह्नुतिः। नेन्दुतीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥ अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः। नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे। तापंकरोति सोत्कम्पं ज्वरः किं न सखि! स्मरः ॥ छेकापह्नुतिरन्यस्य शङ्कातः तथ्यनिह्नवे। प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥ कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैः निह्नुतेः पदैः। निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ (कु). 3 'अत्र तु आरोपपूर्वोऽपह्नवः'—ग. 'अत्र अन्तरारोपोऽपह्नवः'—घ. 4 'निविशन्ते'—घ.

## ८. श्लेषालङ्कारः

**श्लेषः स वाक्य एकस्मिन्**
**यत्रानेकार्थता भवेत् ॥९६॥**

एकार्थप्रतिपादकानामेव[1] शब्दानां यत्रानेकोऽर्थः स श्लेषः। उदाहरणम्—

उदयमयते, दिङ्मालिन्यं निराकुरुतेतरां,
नयति निधनं निद्रामुद्रां, प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत ! बत ! लसत्तेजःपुञ्जो विभाति विभाकरः ॥४३६॥

---

### सङ्केतः

**एकार्थेति**। न गोशब्दवदनेकार्थानाम् ॥

**उदयमिति**। **उदयः** पर्वतः समृद्धिरपि। **दिक्** न्यायमार्गः तत्स्थाः प्रजा वा। **मालिन्यं** कलङ्कोऽपि। **निद्रा** आलस्यमपि। **क्रियाः** धर्माद्याः[2] अपि। **स्वैराः** अन्यायिनोऽपि। **तेजः** प्रतापोऽपि। **विभाकरो**

### मधुमती

**श्लेषः इति**। तथा च **एकस्मिन् वाक्ये** न तु पदे। एवं च समानासमानाकारयोः शब्दयोः यत्र श्लेषः तत्र नायम्। किन्तुश्लिष्ट-विशेषण[3]वाचकपदमहिम्ना श्लिष्टैर्विशेषणैरेव यत्र परार्थप्रतीतिः स अर्थश्लेषस्य

---

1 तथाच 'सर्वदोमाधवः पायात् स योगंगामदीधरत्' इत्यादौ शब्दालङ्कार-भूते शब्दश्लेषे नातिव्याप्तिः। तत्रत्यानां शब्दानां अनेकार्थकत्वात् ॥ 2 'धर्मिण्या-द्याः'—ग. 3 'विशेष्य'—च.

अत्र अभिधायाः अनियन्त्रणात् द्वावपि अर्कभूपौ वाच्यौ ।

इति श्लेषालङ्कारः[2]

---

## सङ्केतः

नाम राजा ॥ वक्ष्यमाणार्थसूचनाभिप्रायेणोक्तौ न श्लेषः । द्वयोरप्यर्थयोः प्रकृतत्वे वक्तुमनिष्टत्वात् । किन्तु वस्तुध्वनिरेव । यथा—

'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥'

## मधुमती

विषयः शब्दपरिवृत्तिसहत्वात्,[1] अर्थान्वयव्यतिरेकित्वाच्च ॥ अत एव समासोक्तेरस्य भेदः, तत्र विशेष्यस्याप्युपादानात् ॥

उदाहरणे श्लेषताप्रयोजकं रूपमाह—**अत्राभिधाया इति**। एवं च—

'रुधिरविसरप्रसाधित-
करवालकरालरुचिरभुजपरिघः ।'

इत्यादावपि अभिधानियमने अर्थश्लेषत्वमेवेति द्रष्टव्यम् ॥ यद्यपि प्रकृते **विभाकर**पदे शब्दश्लेषत्वमप्यस्ति, तथापि—'भूम्ना व्यपदेशः' इति न्यायेन अर्थश्लेषत्वमुक्तम् ॥ इति श्लेषः ॥

---

1 नानार्थसंशयः श्लेषः वर्ण्यावर्ण्योभयाश्रितः । सर्वदोमाधवः पायात् स योगंगामदीधरत् । अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना । उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ अस्य शब्दार्थालङ्कारत्वविवेचनं चित्रमीमांसायां कृतम् ॥ (कु)

2 'श्लिष्टविशेषेणैव पदार्थप्रतीतिः स न श्लेषविषयः शब्दपरिवृत्तिसहत्वात्'—घ.

## ९. समासोक्त्यलङ्कारः

### परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः ॥

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि यदप्रकृतार्थस्याभिधानं सा समासेन संक्षेपेण अर्थद्वयकथनात् समासोक्तिः।

उदाहरणम्—

---

### सङ्केतः

इति। अत्र प्रकृतत्वेनार्थः न्यायनिष्ठपुंवृत्तिः। सूचनाद्यभिप्रायेण तु राम-सुग्रीवादिवृत्तिः ॥ इति श्लेषः ॥

परोक्तिरिति। **श्लिष्टैः** श्लेषवद्भिः समानैः **भेदकैः** उपमेयविशेषणैः **परस्य** उपमानस्य **उक्तिः समासोक्तिः**। **विशेष्यस्य** उपमेयस्य। तस्य श्लिष्टत्वे श्लेषप्राप्तेः।

### मधुमती

**परोक्तिरिति**। अप्रस्तुतप्रतिपादनमित्यर्थः। **भेदकैः** विशेषणैः। **श्लिष्टैः** उभया[1]न्वययोग्यैः। **भेदकैरिति** बहुवचनं अविवक्षितम्। तेन प्रस्तुतवर्णनेन अप्रस्तुतप्रतिपादनं **समासोक्तिः**, अप्रस्तुतवर्णनेन प्रस्तुतप्रति-पादनं तु अप्रस्तुतप्रशंसा इति द्रष्टव्यम् ॥ अन्वर्थतामाह—**समासेनेति** ॥

---

1 'श्लिष्टैकक्रिया'–ग.

लहिऊण तुज्झ बाहुप्फंसं
तीए स कोवि उल्लासो ।
जयलच्छी तुह विरहे
ण हुज्जला दुब्बला णं सा ॥ ४३७ ॥

[लब्ध्वा[1] तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला[2] दुर्बला ननु सा ॥]

अत्र जयलक्ष्मीशब्दस्य केवल कान्तावाचकत्वं नास्ति ॥

इति समासोक्त्यलङ्कारः[3]

---

## सङ्केतः

लहिऊणेति । तव विरहेण हेतुना सा दुर्बला भूयात् । णं नन्वर्थे[4] अत्र विशेषणानि कान्तया सह तुल्यानि । न तु विशेष्यं जयलक्ष्मीः इति रूपम् । अस्यां विशेषणसाम्यात् अप्रस्तुतया प्रस्तुतविशेषकत्वेन प्रतीतिः । अतो विशेषकत्वात् व्यवहारसमारोपः । रूपसमारोपे तु रूपकं स्यात् ।

'उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः ।'

इति तु वामनः । तन्मते अप्रस्तुतप्रशंसा अन्यथा ज्ञेया ॥ इति समासोक्तिः ॥

## मधुमती

लहिऊण इति । इयं च समरे पतितं स्वामिनमवेत्य वीरपत्न्याः उक्तिः । अत्र समासोक्तित्वमुपपादयति अत्रेति । श्लिष्टविशेषणमात्रादेवात्र परार्थप्रतीतिरित्यर्थः ॥

अस्याश्च बहवो भेदाः दृश्यन्ते कविवर्त्मसु ।
ते ग्रन्थविस्तरभयान्नेह सर्वे प्रदर्शिताः ॥

इति समासोक्तिः ॥

---

1 'लब्धा'–क. 2 'न भवतूज्ज्वला'–ख. 3 समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ (कु). 4 'णं त्वर्थे'–घ.

## १०. निदर्शनालङ्कारः

**निदर्शना । अभवन् वस्तु-**
**सम्बन्धः उपमापरिकल्पकः ॥९७॥**

निदर्शनं—दृष्टान्तकरणम् । उदाहरणम्—

क्व सूर्यप्रभवो वंशः ? क्व चाल्पविषया मतिः ? ।
तितीर्षुः दुस्तरं मोहात् उडुपेनास्मि सागरम्[1] ॥४३८॥

अत्र 'उडुपेन सागरतरणमिव, मन्मत्या सूर्यवंश-वर्णनम्' इति उपमायां पर्यवस्यति । यथावा—

---

### सङ्केतः

क्व सूर्येति । अल्पमत्या अर्कवंशवर्णनं असम्भवद्दार्ष्टान्तिकदृष्टान्त-वस्तुनोः औपम्यं कल्पयति । निरपेक्षवाक्यार्थयोः बिम्बप्रतिबिम्बत्वे दृष्टान्तस्य लक्षणात् । अत्र—प्रकृतवाक्यार्थे वाक्यार्थान्तरारोपात् सापेक्षत्वे सम्बन्धानुपपत्तिमूला निदर्शना ।

### मधुमती

**अभवन्निति** । असम्भविनोऽर्थस्याभिधानं **उपमाकल्पकं निदर्शना** ॥ विषमालङ्कारे अतिव्याप्तिवारणाय **उपमाकल्पकत्वं** उक्तम् । अपह्नुतौ तद्वारणाय पूर्वप्रतीकम् । यद्यपि—अपह्नुतावपि असम्भविनोऽर्थस्याभिधानं अस्त्येव । तथापि—नासम्भवित्वेनेति नातिव्याप्तिः । पदव्युत्पत्तिमाह—**निदर्शनमिति** ॥

**क्व सूर्येति** । अत्र पूर्वार्धे विषमालङ्कारः स्थितोऽपि निदर्शनायाः पोषकतया गुणीभूतः इति सः नोपदर्शितः ॥ **अत्रेति** । **अल्पविषयकमत्या सूर्यवंशवर्णनं** पूर्वार्धार्थः । **उडुपेन सागरतरणं** उत्तरार्धार्थः । अनयोश्च

---

1 (रघुवंशे १-२) ।

उदयति विततोर्ध्वरश्मिरज्जौ
अहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम्[1] ॥ ४३९ ॥

अत्र 'कथमन्यस्य लीलां अन्यो वहति?' इति, तत्सदृशीमित्युपमायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गं
आदातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष[2] देव !
यस्ते[3] गुणान् गदितुमुद्यममादधाति ॥ ४४० ॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ॥

---

## सङ्केतः

पदार्थेन सा यथा—**उदयतीति** । **तत्सदृशीं** गजलीलातुल्याम् । **दोर्भ्यामिति** । **तरङ्गवती** नदी, तद्भुजङ्गः अब्धिः ॥

## मधुमती

उपमानोपमेयभावः प्रतीयते । असंभवित्वं च साधारणो धर्मः अर्थादेवावभासते इति भावः ॥

**अत्र कथमिति** । **वारणेन्द्रलीलायाः** तन्मात्राश्रितायाः **गिरौ** असम्भवात् पूर्ववत् उपमायामेव तात्पर्यमित्यर्थः ॥

**इत्यादावित** । एकत्रैव अनेकेषां असम्भवदर्थानां असम्भवित्वेनाभिधानात् मालात्व[4]मित्यर्थः ।

---

1 'विततोष्ण'–क. गिरिः रैवतकपर्वतः । (माघे ४-२०) । 2 'ध्रुवमत्र'–क, 3 'यत्ते'–ख. 4 'नानात्व'–च.

स्वस्वहेत्वन्वयस्योक्तिः
क्रिययैव च साऽपरा ॥

क्रिययैव स्वस्वरूप[1]स्वकारणयोः सम्बन्धो यदवगम्यते, सा अपरा निदर्शना । यथा—

उन्नतं पदमवाप्य यो लघुः
हेलयैव स पतेदिति ब्रुवन्[2] ।
शैलशेखरगतः पृषद्गणः
चारुमारुतधुतः पतत्यधः ॥ ४४१ ॥

---

## सङ्केतः

स्वस्वेति । स्वश्च पतनलक्षण[3]क्रियायाः स्वभावः, स्वहेतुश्च तस्या एव कारणं उन्नतपदावाप्तिरूपम्, तयोः अन्वयः कार्यकारणत्वेन घटना । अपरा उद्भटोक्ता[4] ॥

उन्नतमिति । अत्र 'ममेव अन्यस्यापि लघोः उच्चैःपदप्राप्तिः पातान्ता' इति कार्यकारणयोः अन्वयेन उपमानोपमेयत्वाक्षेपे सम्भवद्वस्तुसम्बन्धा निदर्शना । स्वसिद्धये वाच्येन उपमानोपमेयभावरूपार्थान्तरं

## मधुमती

स्वस्वेति । स्वस्य स्वहेतोश्च अन्वयः यत्र क्रिययैव[5] प्रतिपाद्यते सा अपरा निदर्शनेत्यर्थः ।

---

1 'यैवस्वरूप'–ख. 2 'ब्रुवन्'–क. 3 'स्वं-स्वपतनात्मक'–ग.
4 अपरेत्यादि नास्ति–घ. 5 'स्वहेतोः स्वार्थो योऽन्वयः प्रक्रियैव'–ज.

अत्र पातक्रियया पतनस्य,[1] लाघवे सति उन्नतपद-
प्राप्तिरूपस्य च सम्बन्धः ख्याप्यते ॥

इति निदर्शनालङ्कारः[2]

---

---

## सङ्केतः

आक्षिप्यत इति ॥ **पातक्रियया** पततीतिरूपया । पतनस्येति । **पतेत्** इत्येवमुल्लिखितस्य उच्चैः पदाप्तिरूपकारणकार्यस्वरूपस्येत्यर्थः । **कारणस्य** उच्चैःपदाप्तिरूपस्य ॥ इति निदर्शना ॥

## मधुमती

**अत्र पातेति** । अत्र पतति इत्यनेन निर्दिष्टया पातरूपक्रियया **पतनस्य,** तत्कारणस्य लघोरुन्नतपदप्राप्तेश्च **अन्वयः**—सम्बन्धः प्रतिपाद्यते इत्यर्थः ॥ इति निदर्शना ॥

---

1 'क्रियया निर्दिष्टस्य पतनस्य'–क. अत्र 'ब्रुवन्' इतिपाठे अचेतनस्य दृष्टद्रूणस्य वक्तृत्वासम्भवात् मुख्यार्थबाधात् लक्षणया कथंचिदपि बोधयन्नित्यर्थपरतया अभ्युपगन्तव्यतया सम्भवद्वस्तुसम्बन्धनिबन्धनत्वमिति ध्येयम् ।

2 वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना । यदाहुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥ पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् । त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ अपरां बोधनं प्राहुः क्रियया ऽसत्सदर्थयोः । नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन् समृद्धीनां फलं सुहृदनुग्रहः ॥ (कु)

## ११. अप्रस्तुतप्रशंसालङ्कारः

**अप्रस्तुतप्रशंसा या**
**सा सैव प्रस्तुताश्रया ॥९८॥**

अप्राकरणिकस्यार्थस्य [1] अभिधानेन प्राकरणिकस्याक्षेपः अप्रस्तुतप्रशंसा ॥ सा च—

**कार्ये निमित्ते सामान्ये**
**विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये**
**तुल्यस्येति च पञ्चधा ॥९९॥**

तदन्यस्य कारणादेः । क्रमेणोदाहरणानि—

---

### सङ्केतः

अप्रस्तुतेति । इह अप्रस्तुतस्य स्तुतिनिन्दासाम्यैः वर्णना दृष्टा । अत्र प्रशंसा वर्णनम्,[2] न स्तुतिः । तच्च अप्रस्तुतम् । अप्रस्तुतत्वादेव वक्तुमयुक्तं सत् प्रस्तुतपरतया उच्यमानं युक्तं स्यात् । प्रस्तुतपरता च कार्यकारणभाव-सामन्यविशेषभाव-सारूप्यसम्बन्धे स्यात् । सैवेति । या प्रशंसा कविभिः अप्रस्तुतस्य क्रियते, सा प्रस्तुतपरा, सैव=अप्रस्तुत[3]प्रशंसैवेत्यर्थः । तदन्यस्येति । 'कार्ये प्रस्तुते तदन्यस्य कारणस्य' इत्यादिक्रमेण च चतुष्टयस्य, तथा—तुल्ये राजादौ प्रस्तुते तदन्यस्य तुल्यस्य यत्[4] वचः

### मधुमती

अप्राकरणिकस्येति । अप्रस्तुतस्येत्यर्थः । आक्षेपः व्यञ्जनम् ।

विभजते—सा चेति । कार्ये प्रस्तुते कारणस्य, कारणे प्रस्तुते कार्यस्य, सामान्ये प्रस्तुते विशेषस्य, विशेषे प्रस्तुते सामान्यस्य, तुल्ये प्रस्तुते तुल्यान्तरस्य च अभिधानं इति पञ्चप्रकाराः इत्यर्थः ॥

---

1 अर्थस्येति नास्ति–क. 2 'वर्णनादृष्टौ प्रशंसा । अत्र वर्णनम्,'–ग. 3 'प्रस्तुत'–ग. 4 'वत्'–घ.

'याताः किं न मिलन्ति? सुन्दरि!,
पुनश्चिन्ता त्वया मत्कृते
नो कार्या, नितरां[1] कृशाऽसि,'
कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा[2] चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः[3] ॥४४२॥

अत्र—'प्रस्थानात् किमिति निवृत्तोऽसि?' इति कार्ये पृष्टे, कारणं अभिहितम् ॥

---

## सङ्केतः

भणनम् इति पञ्चधात्वम् । अत्र वाच्यस्य 'परार्थं स्वसमर्पणम्' इति लक्षणेन लक्षणा ॥

नितरामिति । 'अग्रेऽपि त्वं कृशा चिन्तया भृशं भवसि यतः । हसितेनेति । तथा तया हसितम्, यथा—अहं त्वया त्यक्ता मरिष्यामीति कारणं सूचितम् ॥

## मधुमती

अत्र प्रस्थानादिति । प्रस्थाननिवृत्तिरूपे कार्ये प्रस्तुते, प्रिया-मरणं कारणं उपन्यस्तम् । तेन च 'प्रियामरणभिया न गतं' इति कार्यं व्यज्यते । अत्र उत्तरवाक्यात् प्रश्नोन्नयनेन उत्तरालङ्कारोऽपि । न चोभयो-रैक्यं शङ्कनीयम्; उत्तरे प्रश्नवाक्यस्य, अप्रस्तुतप्रशंसायां कार्यादेश्चोन्नयनेन उभयोर्भेदात् ॥

---

1 'अविरतं'-क. 2 'निपतत्पीताश्रुणा'-ख. 3 (अमरुशतके १०) ।

"राजन्! राजसुता न पाठयति मां, देव्योऽपि तूष्णीं स्थिताः
कुब्जे! भोजय मां, कुमारसचिवैः नाद्यापि किं भुज्यते?।"
इत्थं राजशुकः तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैक[1]माभाषते ॥ ४४३ ॥

अत्र—'प्रस्थानोद्यतं भवन्तं[2] ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः' इति कारणे प्रस्तुते कार्यमुक्तम् ॥

---

## सङ्केतः

राजन्निति। कुमारसचिवैः कुमारप्रधानैः। राजशुकः वरशुकः। 'त्वां यात्रोद्यतं ज्ञात्वा द्विषस्ते नष्टाः' इति प्रस्तुतो हेतुरूपोऽर्थः। शुकवृत्तान्तस्तु अप्रस्तुतः कार्यरूपः प्रस्तुतार्थं स्वात्मानमर्पयतीत्यर्थः। यद्वा[3]—कारणवत् कीरवृत्तान्तरूपकार्यस्यापि वर्ण्यत्वेन प्रस्तुते कार्यद्वारात्मभङ्ग्यन्तरेण कारणस्योक्तौ अत्र पर्यायोक्त्यलङ्कारः। कारणापेक्षया कार्यस्य अतिचारुत्वमिति कार्यमेवोच्यते। कारणकार्ययोः, प्रस्तुताप्रस्तुतत्वे अप्रस्तुतप्रशंसा।

## मधुमती

अत्र प्रस्थानोद्यतमिति। त्वया प्रस्थानोद्यमः कृतः इति कारणे प्रस्तुते, तादृशवैरिनगरावस्थया तत्कार्यभूतया अत्र निर्दिष्टया राजप्रस्थानोद्यमलक्षणं कारणमाक्षिप्यत इत्यर्थः।

---

1 'शून्यभवनेष्वेकैक'—क. 'शून्यवलभीष्वेकैक'—ख.　2 भवन्तमिति नास्ति—ख.　3 'यद्वा' इति नास्ति—घ.

एतत् तस्य मुखात् कियत् ?, कमलिनीपत्रे कणं वारिणः
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्, यदस्मादपि[1] ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तश्शुचा[2] ॥४४४॥

अत्र—'अस्थाने जडानां ममत्व[3]सम्भावना भवती'ति सामान्ये प्रस्तुते विशेषः कथितः ॥

---

## सङ्केतः

एतदिति । मुखं आकृतिः, लोकात्[4] । एतस्याः आकृतेः इदं अल्पमित्यर्थः । 'मुखात्' इति अपेक्षिताक्रियं अपादानम् । अत्र च अम्भोबिन्दौ मणिधीः विशेषः ॥

## मधुमती

एतदिति । स जडः कमलिनीपत्रे वारिणः कणं अस्मासु मुखात् शृण्वन्नपि मुक्तामणिरिति यदमंस्त तस्य कियदेतत् ? इत्यन्वयः ॥ विशेषः जलबिन्दौ मुक्ताभ्रमरूपः ॥

---

1 'श्रृणु अन्यद'–क. 'स्मात्त्वपि'–क. 2 (भल्लटशतके ९४) ।
3 'महत्त्व'–ख. 4 'लोकात्' इति नास्ति–ग.

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान्[1]
सुजीवितं तस्य स भाजनं श्रियः ॥ ४४५ ॥

अत्र—'कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि,[2] तत् त्वमेव[3] श्लाघ्यः' इति विशेषे प्रकृते सामान्यं उदितम् ॥

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः समासोक्तिः सादृश्यमात्रं वा, तुल्यात् तुल्यस्य[4] ह्याक्षेपे हेतुः ॥ क्रमेणोदाहरणम्—

---

## सङ्केतः

कृष्णमिति । कृष्णेन नरकासुरे हते तन्मन्त्रिणः तन्मित्रं प्रत्युक्तिः ॥

## मधुमती

श्लेषः इति । अत्र श्लेषसमासोक्तिपदाभ्यां श्लिष्टशब्द-श्लिष्ट-विशेषणयोः परिग्रहः । तेन—श्लिष्टशब्देन यत्र अप्रस्तुतवर्णनं, यत्र वा तद्वर्णने श्लिष्टपदान्युपादीयन्ते तदुभयं लभ्यते, न तु तदुभयालङ्कारावेव विवक्षितौ । एतद्विषये तयोरप्रवृत्तेः[5] । अभिधेयोपस्थितौ श्लेषस्य, प्रस्तुत-वर्णनेन अप्रस्तुतव्यञ्जने समासोक्तेर्वा अवतारात् ॥

---

1 'पुमांश्च जीवितं'–क. 2 'दुःखं शमयसि'–ख. 3 'तदा त्वमेव'–क.
4 'तुल्यान्तरस्य'–क. 5 'एतद्विषयतया वृत्तेः–घ.

पुंस्त्वादपि प्रविचलेद्यदि, यद्यधोऽपि
याया‍त्, यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन [1] ॥ ४४६ ॥

---

## सङ्केतः

**पुंस्त्वादिति** । पुंस्त्वं विक्रमः पुम्भावो वा[2] । **अधः** पातालं, नीचतया चलनं च । **प्रणयनं** याच्ञा, तन्निमित्तम् । **न महानपि** वामनः स्वल्पोऽपि । **पुरुषोत्तमः** विष्णुः सन्नरोऽपि ॥ अत्र साधुवृत्तं वाच्यत्वात् प्रस्तुतम् । तत्र च अभिधायाः नियन्त्रणात् नात्र श्लेषः ॥ विष्णुप्रतिपत्तिस्तु शब्दोत्थात् ध्वनेरेवेति नेहाप्रस्तुतप्रशंसा इति चेन्न । साधुवृत्तस्य वाच्यत्वासम्भवात् । न ह्युत्कृष्टोऽपि विष्णुवत् वस्तुतया विश्वमुद्धर्तुमीष्टे । आक्षिप्यमाणस्य तु तस्य गुणवृत्त्या तद्वर्णनं अविरुद्धम्, गुणभूतत्वादिति अप्रस्तुतप्रशंसैवेयम्[3] । अत्र च विष्णुवृत्तं वाच्यं अप्रस्तुतं च । तेन च प्रस्तुतं साधुवृत्तं आक्षिप्यते इति न ध्वनिः । स हि अप्रस्तुताक्षेपरूपः स्यात् ॥

## मधुमती

**पुंस्त्वादपीति** । अमृताहरणे विष्णोः स्त्रीवेषपरिग्रहात्, वसुधोद्धरणे पातालप्रवेशात्, **प्रणयने** बलियाचने वामनरूपपरिग्रहात् इत्यर्थः । अत्र **पुंस्त्वादयः पुरुषोत्तमेति** च शब्दाः श्लिष्टाः ॥

---

1 अत्र सर्वत्र यदिशब्दः यद्यप्यर्थे वर्तते । (भल्लटशतके ७९) । 2 'विक्रमपुम्भावौ'–घ. 3 गुणेत्यादि नास्ति–ग.

येनास्यभ्युदितेन चन्द्र! गमितः क्लान्तिं, रवौ तत्र ते
युज्येत प्रतिकर्तुमेव, न पुनस्तस्यैव पादग्रहः।
क्षीणेनैतदनुष्ठितं यदि, ततः किं लज्जसे[1] नो मनाक् ?
अस्त्वेवं,[2] जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे[3] ॥
॥ ४४७ ॥

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ?
क्षारीकृतं च, बडबादहने[4] हुतं च,
पातालकुक्षिकुहरे विनिवेशितं च[5] ॥ ४४८ ॥

---

## सङ्केतः

येनासीति । पादाः रश्मयः चरणौ च । जडधामता शीतलतेजस्ता, मूर्खास्पदता[6] च । अत्र—पूर्वश्लोके पुरुषोत्तमवत् विशेष्यं अर्केन्दुरूपं न श्लिष्टम् । विशेषणश्लिष्टत्वे तु समासोक्तिः तुल्यान्तराक्षेपहेतुः । पूर्वत्र तु श्लेषः,[7] द्वयोरपि श्लिष्टत्वात् ॥

## मधुमती

येनासीति । अत्र विशेषणानि श्लिष्टानि ॥

आदायेति । अत्र दुष्टत्वनिबन्धनसादृश्येन प्रस्तुतः कश्चित दुरीश्वरः प्रतीयते इति । सादृश्यनिबन्धना चेयम् ।

---

1 'लज्ज्यचे'–क. 2 'अस्त्येवं'–ख. 3 'विस्फूर्ज्यते'–क.
4 'वदने'–क. 5 (भट्टेन्दुराजस्येदम्)। 6 'मूर्खाश्रयता'–ग. 7 'श्लेषे'–घ.

इयं च काचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—

अब्धेरम्भः[1]स्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया[2] इह हि बहवः लङ्घनेऽपि क्रमन्ते[3] ।
आहो[4] रिक्तः कथमपि भवेदेष दैवात् तदानीं
को नामस्यादवटकुहरालोकनेऽप्यस्य कल्पः ? ॥ ४४९ ॥

---

## सङ्केतः

**इयं चेति** । सादृश्यहेतुकाऽप्रस्तुतप्रशंसेत्यर्थः ॥

**अब्धेरिति** । **आहो** इति यद्यर्थे । **कल्पः** प्रौढः शक्तः । अत्र अब्धावपि ईदृशस्यार्थस्य सम्भवात् नैकान्तेन कस्यापीश्वरस्य आक्षेपाकाङ्क्षा । एवं **पुंस्त्वादि**त्यत्र **आदाये**त्यत्र च गम्यार्थानध्यारोपः । **येनासी**त्यत्र तु चन्द्रे सम्बोधनोपालम्भादेरर्थस्यासम्भवात् अपकारिभ्योऽप्यर्थेच्छोः दरिद्रस्य अध्यारोपः ॥

## मधुमती

पुनः प्रकारत्रयवतीत्याह—**इयं चेति** । **अर्णः** जलम् । **अंहो रिक्तः** इत्यत्र 'आहो रिक्तः' इति क्वचित् पाठः । तत्र 'आहो' शब्दः यद्यर्थे । अव्ययानां अनेकार्थत्वात् । **अवटः** गर्तः । **कल्पः** समर्थः । **पोतापायात्** पोतरूपोपायात् । यदि तु 'पोतोपायाः' इति पाठः, तदा **बहवः** इत्यस्य विशेषणम् । अत्र—'बहवः (प्रभवः) सम्पदि सुखसेव्याः विपदि कष्टसेव्याः' इति ध्वन्यते ॥

---

1 'र्णः'–क. 2 'पोतोपायात्'–ख. 3 'प्रक्रमन्ते'–क. 'क्षमन्ते'–ख. 4 'अंहो'–क.

क्वचित् अध्यारोपेणैव । यथा—

कस्त्वं भोः ? कथयामि, दैवहतकं मां विद्धि शाखोटकं,
वैराग्यादिव वक्षि ? साधु विदितम्, कस्मादिदं कथ्यते[1] ?।
वामेनात्र वटः तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणी[2] मार्गस्थितस्यापि मे ॥४५०॥

---

## सङ्केतः

कस्त्वमिति । अत्र कथयामि इत्यादिप्रत्युक्त्या एतदाह— 'अकथनीयमेतत्, श्रूयमाणं हि निर्वेदकृदिति, अथापि तवानुबन्धात् कथ्यते' इति । कस्मात् इति वैराग्यहेतुप्रश्नः । कथ्यते इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूप्यते—वामेनेति । अनुचितेन कुकुलादिना[3] उपलक्षितः इत्यर्थः । वटः इति । फलदानशून्यः छायामात्रकरणादेव गर्विष्ठः इत्यर्थः । छायाऽपीति । श्मशानाग्निदग्धपल्लवादिः तरुविशेषो हि शाखोटकः[4] । मार्गः सतां पन्था अपि । अत्र अचेतनत्वात् वृक्षेण सह उक्तिप्रत्युक्त्यसम्भवेन वाच्ये असम्भवति श्रीमत्पुरुषसेवया खेदवान् दरिद्रो मनस्वी कश्चित् पुमान् प्रतीयमानतया अध्यारोप्यते ॥

## मधुमती

कस्त्वमिति । अत्र साधुः असाधुश्च प्रतीयमानोऽर्थः शाखोटक-वटपदाभ्यां निगीर्याध्यवसितः । 'धनवान् पूज्यः, निर्धनश्च निन्द्यः' इति प्रस्तुतव्यञ्जनम् । अत्र अतिशयोक्तिविशेषः सन्नपि प्रकृतालङ्काराङ्गमेवेति नोपदर्शितः ॥

---

1 'बोध्यते'–क. 2 'करणे'–क. 3 'कुकूलादिना'–ग. 4 कश्चन भूतावासो वृक्षः ।

क्वचित् अंशेष्वध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्ययविधिः, तत् कर्णयोश्चापलं,[1]
दृष्टिः सा मदविस्मृतस्वपरदिक्, किं भूयसोक्तेन वा ? ।
सर्वं विस्मृतवानसि[2] भ्रमर ! हे ! यद्वारणोऽप्यसौ[3]
अन्तश्शून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ? ॥४५१॥

अत्र रसनाविपर्ययः शून्यकरत्वं च भ्रमरस्य

---

## सङ्केतः

सोऽपूर्व इति । रसनाविपर्ययः गजानां शापजः,[4] अलीकवचो[5]ऽपि । चापलं खलवचश्श्रवणे सांमुख्यमपि । शून्यकरत्वं अदातृत्व-

## मधुमती

सोऽपूर्वः इति । रसनाविपर्ययः पूर्वापरविरुद्धाभिधानम्, जिह्वापरिवृत्तिश्च । कर्णचापलं परापराधश्रवणरसिकता, कर्णचाञ्चल्यं च । मदः ऐश्वर्यमदः, दानजलं च । अन्तश्शून्यकरः धनशून्यहस्तः, अस्थिमांसादिशून्यध्वस्तमध्यशुण्डादण्डश्च । वारणः अनुगतसेवकवारकः, गजश्च । अत्र अध्यारोपानध्यारोपौ दर्शयति—अत्र रसनेति । तथाच—रसनाविपर्ययशून्यकरत्व–मदविस्मृतस्वपरदिक्त्वानि भ्रमरस्य

---

1 'कर्मणश्चापलम्'–ख. 2 'निश्चितवानसि'–ख. 3 'णोऽथाप्यसौ'–क. 4 महाभारते अनुशासनपर्वणि १३१ अध्याये गजानां शापनिदानं उक्तम् । यथा—तारकनामासुरः चतुर्मुखदत्तवरात् बलगर्वितः देवान् अतीव क्लेशयामास । ते चतुर्मुखं शरणं गत्वा प्रार्थयामासुः । तदा ब्रह्मापि 'अग्नेः सकाशात् कार्त्तिकेयो नाम पुत्रो भविता, सः तमसुरं हन्यात् । अतोऽग्निं अन्वेषयन्तु भवन्तः' इत्युवाच तान् । ते च कंचन गजं 'अग्निः कुत्र निलीनः' इति पप्रच्छुः । स च 'अश्वत्थे' इति प्रत्यब्रवीत् । कुपितस्तेनाग्निः सर्वान् गजान् शशाप—'प्रतीपा भवतां जिह्वा भवित्री' इति—इति ॥ 5 'अलीकजोऽपि'–ग.

असेवने न हेतुः, कर्णचापलं तु हेतुः। मदः प्रत्युत सेवने निमित्तम् ॥

इति अप्रस्तुतप्रशंसालङ्कारः [1]

---

## १२. अतिशयोक्त्यलङ्कारः

**निगीर्याध्यवसानं तु**
**प्रकृतस्य परेण [2] यत्।**
**प्रस्तुतस्य यदन्यत्वं**
**यद्यर्थोक्तौ च कल्पनम् ॥१००॥**
**कार्यकारणयोर्यश्च [3]**
**पौर्वापर्यविपर्ययः।**
**विज्ञेयाऽतिशयोक्तिः सा ॥**

---

### सङ्केतः

मपि। **न हेतुरिति**। तेन वाच्येऽर्थे प्रतीयमानस्य कस्यापि कुस्वामिसेवकस्य अध्यारोपः कार्यः। **चापलं असेवने मदश्च सेवने हेतुः**। प्रस्तुताप्रस्तु-

### मधुमती

**असेवने न हेतवः**। किन्तु सेवकान्तरस्य इति भ्रमरपदेन सेवकाध्यवसानम्। **कर्णचापल्यं असेवने हेतुः** इति तदंशे भ्रमरपदं द्विरेफपरमेव। एवं वारणपदेऽपि अध्यारोपानध्यारोपौ द्रष्टव्यौ ॥ अत्र सेव्यसेवकयोः गजभ्रमरयोश्च सादृश्यं श्लिष्टशब्दघटितसाधारणधर्मनिबन्धनम् ॥ इत्यप्रस्तुतप्रशंसा ॥

**निगीर्येति**। प्रकृत-परशब्दौ उपमानोपमेयवाचकौ। तथाचात्र

---

1 अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया। एक कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥ (कु) 2 'समेन'–क. 3 'योश्चैव'–क.

उपमानेन अन्तर्निगीर्णस्य उपमेयस्य यदध्यवसानं सैका । यथा—

कमलमनम्भसि, कमले च
कुवलये, तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगे-
त्युत्पातपरम्परा केयम् ? [1] ॥ ४५२ ॥

अत्र—मुखादि कमलादिरूपतया अध्यवसितम् ॥

---

## सङ्केतः

तयोर्वाच्यत्वे, विशेष्यस्यापि श्लिष्टत्वे अर्थश्लेषः । विशेषणानां श्लिष्टत्वे, प्रस्तुतस्य वाच्यत्वे, अन्यस्य तु गम्यत्वे समासोक्तिः । अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वे अप्रस्तुतप्रशंसेति विवेकः ॥ इत्यप्रस्तुतप्रशंसा ॥

**कमलमिति** । अत्र भेदे अतिशयोक्तिरित्येको भेदः । मुखादेः कमलादिरूपतया अध्यवसाने चायं प्रथमो भेदः । **कमलमनम्भसि** इत्यादियोगे तु असम्बन्धे सम्बन्धरूपातिशयोक्तिः । तथा विरोधालङ्कारोऽपि ॥

## मधुमती

गौणसाध्यवसानलक्षणामूलं **अध्यवसानं** अध्यवसेयम् । यच्च प्रकृतमेव अप्रकृतत्वेन ज्ञाप्यते, सा अपरा । एवं च—भिन्नयोः अभेदाध्यवसाने रूपकम्, तत्रैव आरोपविषयनिगरणे प्रथमातिशयोक्तिः, अभिन्ने एव भेदाध्यवसाने द्वितीयातिशयोक्तिरित्यर्थः ॥ अपह्नुतिभेदकं तत्रैवोक्तम् । न च द्वितीयस्य भ्रान्तिमत्त्वम्; (तत्र अन्यस्य प्रकृतत्वेन भानम्, अत्र तु प्रकृतस्यान्यत्वेन भानमिति भेदात् ।) किञ्चिदंशे भ्रान्तित्वेन तदभावाच्च ॥

---

1 'चेयम्'–ख.

यच्च तदेव अन्यत्वेनाध्यवसीयते [1] साऽपरा। यथा—

अण्णं लडहत्तणअं
अण्णा व्विअ कावि वत्तणच्छाआ।
सामा सामण्णपआवइणो
रेहच्चिअ ण होइ ॥ ४५३ ॥

[अन्यत् सौकुमार्यं [2] अन्यैव च काऽपि वर्तनच्छाया।
श्यामा सामान्यप्रजापतेः रेखैव न भवति ॥]

---

## सङ्केतः

तदेवेति। तदेव प्रस्तुतं अभिन्नमेव अन्यत्वेन भेदेन **अध्यवसीयते** इत्यर्थः ॥

**अण्णमिति।** रेखा मर्यादा। वत्तणं वक्त्रं वर्तनं वा। अत्र अन्यत् लटभत्वं इति अभेदेऽपि अन्यत्वेन भेदोक्तिरिति द्वितीयः। अत्र अभेदे भेदः इति वाक्योपपत्तये वास्तवलटभत्वस्य सातिशयं कविकल्पितं द्वितीयं लटभत्वं कल्पनीयम्। उत्तरार्धे सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्तिः ॥

## मधुमती

**अण्णमिति।** लडहत्तणअं मनोहरत्वम् लावण्यम्। **रेखा** निर्मितिः। इह श्यामायाः सामान्यप्रजापतेः रेखात्वेऽपि तदन्यत्वाध्यवसानात् अतिशयोक्तिरित्यर्थः। इदं च व्यतिरेकालङ्कारगर्भमिति ध्येयम्।

---

1 'त्वेनानुमीयते'–क. 2 'अन्यल्लटभत्वं'–ख.

यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम्, अर्थादसम्भविनोऽर्थस्य, सा तृतीया ।
यथा—

राकायां अकलङ्कं चेत् अमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ४५४ ॥

---

## सङ्केतः

**राकेति** । राकेन्दोः निर्लक्ष्मत्वस्य बहिरसम्भवेऽपि कविना सम्भवद्रूपतया उक्तम् । आस्यं निरुपममित्यर्थः । 'एषा उत्पाद्योपमा'[1] इति

## मधुमती

**यद्यर्थस्येति** । यदिशब्दार्थस्येत्यर्थः । यदि चेच्छब्दयोः पर्यायत्वादुक्तम्—**यदिशब्देन चेच्छब्देन वा इति** । अर्थ एवात्र कल्पकः न शब्दः इत्याह—**अर्थादिति** । अन्यथा यद्युक्तिनिबन्धनार्थापत्तेरिति भावः । **यद्यर्थोक्तौ** इत्यत्र सूचितं असम्भवित्वं च स्वाभाविकम् । तच्च तथाविधरूपाभावः । स च कदाचित् सम्भवे, सर्वथैवासम्भवे च अविशिष्टम् । तेन 'पुष्पं प्रवालोपहितम्' इत्यादौ नाव्याप्तिः । तथाच अस्वाभाविकरूपासञ्जननेन अन्यसञ्जननरूपेयमिति ध्येयम् ॥

**राकायामिति** । यद्यपि 'पुष्पं प्रवालोपहितम्' इत्यादौ आपाद्या-

---

1 'एषा अन्या आद्योपमा'–व.

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा—

---

## सङ्केतः

रुद्रटः । अद्भुतोपमा इति दण्डिमुख्याः । अयं सम्बन्धेऽप्यसम्बन्धरूपः तृतीयः ।

क्वचित् असम्बन्धे सम्बन्धो यथा—

पुष्पं प्रवालोपहितं यदि स्यात्
　मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्यात् विशदस्य तस्य
　ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥

अत्र असम्बन्धेऽपि सम्भावनया सम्बन्धः ।

## मधुमती

पादकयोः सामानाधिकरण्यं अभिधातुमुचितम् । अन्यथा अप्रसञ्जनमेवास्याः । तथापि 'तदाननसदृशः चन्द्रः तदा स्यात्' इत्यत्रैव तात्पर्यमिति विभाव्यम् ॥ इयमपि व्यतिरेकालङ्कारगर्भा ॥

पूर्वमुक्तौ इत्युपलक्षणम् । युगपदुक्तौ इत्यपि द्रष्टव्यम् । **कारण-शीघ्रकारितारूपप्रयोजनस्य** उभयत्राप्यविशेषात् ॥

हृदयमधिष्ठितमादौ
मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ !
लोचनविषयं त्वया भजता ॥ ४५५ ॥

इति अतिशयोक्त्यलङ्कारः [1]

---

## सङ्केतः

**हृदयमिति** । अत्र कुसुमशराधिष्ठानं कार्यम् । नायकाधिष्ठानं [2] तु कारणम् । तयोः विपर्यासः कृतः, प्राक् कार्यं, पश्चात् कारणं इति ॥ **विपर्ययो**ऽयं तुल्यकालत्वेनापि [3] स्यात् । यद्वा—'यथौचित्यं औचिती' इतिवत् पौर्वापर्यं **पौर्वापरी,** तस्याः **अविपर्ययः** [4] ईषद्विपर्ययः, तुल्य-

## मधुमती

उदाहरति—**हृदयमिति** । **अधिष्ठितं** आक्रान्तम् । **चरमं** पश्चात ।

---

1 रूपकातिशयोक्तिः स्यात् निगीर्याध्यवसानतः । पश्य नीलोत्पलद्वन्द्वात् निःसरन्ति शिताः शराः ॥ यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता । त्वत्सूक्तिषु सुधा राजन् ! भ्रान्ताः पश्यन्ति तां विधौ ॥ भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् । अन्यदेवास्य गाम्भीर्यं अन्यद्धैर्यं महीपतेः ॥ सम्बन्धातिशयोक्तिः स्यादयोगे योग-कल्पनम् । सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥ योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्यते । त्वयि दातरि राजेन्द्र ! स्वर्द्रुमान्नाद्रियामहे ॥ अक्रमातिशयोक्तिः स्यात् सहत्वे हेतुकार्ययोः । आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥ चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे । यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥ अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे । अग्रे मानो गतः पश्चात् अनुनीता प्रियेण सा ॥ (कु) 2 'त्वद्दर्शनं'–ग. 3 'कारणत्वेनापि'–घ. 4 'तस्याः अ'–ग.

## १३. प्रतिवस्तूपमालङ्कारः

**प्रतिवस्तूपमा तु सा ॥१०१॥**
**सामान्यस्य द्विरेकस्य**
**यत्र वाक्यद्वये स्थितिः ।**

---

### सङ्केतः

कालत्वम् । तत्र अतिशयोक्तिः यथा—

अविरलविलोलजलदः
कुटजार्जुननीपसुरभिवनवातः ।
अयमायातः कालः
हन्त ! हताः पथिकगेहिन्यः ॥

इति ॥ इत्यतिशयोक्तिः ॥

**प्रतीति** । वस्तुशब्दस्य वाक्यार्थवाचित्वे '**प्रतिवाक्यार्थं उपमा-साम्यम्**' इति अन्वर्थताश्रवणात्, केवलं काव्यसमयात् पृथङ्निर्देशः ।

### मधुमती

युगपदुक्तौ यथा ममैव—

चन्द्रेण दिशि पूर्वस्यां स्मरेण हृदि योषिताम् ।
विलासेन तदङ्गेषु सममेव समुद्गतम् ॥

इति । अत्र चन्द्रोदयः स्मराविर्भावे, स च विलासोदये कारणमिति वस्तु-स्थितिः । इह च तदुपयुक्ता शीघ्रकारिता प्रतीयते ॥ न च—समुच्चयेनैव गतार्थता । तत्र क्रियादेः, अत्र तु कार्यकारणयोः यौगपद्यमिति भेदात् ॥ इत्यतिशयोक्तिः ॥

**सामान्यस्येति** । **एकस्य सामान्यस्य वाक्यद्वये स्थितिः**

साधारणो धर्मः उपमेयवाक्ये उपमानवाक्ये च कथितपद(त्व)स्य दुष्टतया अभिहितत्वात् शब्दभेदेन यदुपादीयते, सा वस्तुनः वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा—

देवीभावं गमिता
परिवारपदं कथं भजत्येषा [1] ।
न खलु परिभोगयोग्यं
दैवतरूपाङ्कितं रत्नम् ॥ ४५६ ॥

---

## सङ्केतः

अयं भावः—सामान्यधर्मस्य इवाद्यनुक्तौ सकृन्निर्देशे दीपकतुल्ययोगिते, असकृन्निर्देशे शुद्धसामान्यरूपत्वे प्रतिवस्तूपमा । समान्यधर्मस्य बिम्बप्रतिबिम्बे तु दृष्टान्तः इति ॥

**देवीति** । अत्र **परिवारपदत्वं** साधारणो धर्मः, '**परिभोगयोग्यं**' इति पर्यायेण भिन्नशब्देनोक्तः । परिवारपदत्वपरिभोगयोग्यत्वयोः एकार्थत्वात् ॥

## मधुमती

इत्यन्वयः । द्विरभिधाने हेतुमाह—**कथितेति** । पदव्युत्पत्तिमाह—**सा वस्तुन इति** । न च—निदर्शनशङ्कासङ्करः । तत्र साधारणधर्मवस्त्वोपपादनात्; तत्र असम्भवमुखेन, अत्र अनौचित्यमुखेन अभिधानाच्च । उक्तेर्भेदादलङ्कारभेदस्य व्यवस्थाप्यत्वात् ॥

**देवीभावमिति** । अत्र परिवारभाजनतानौचित्यं उपभोगानौचित्यं चेत्येक एव समानोऽर्थः उपमेयवाक्ये '**परिवारपदं कथं भजत्येषा**' इत्यनया उक्त्या, उपमानवाक्ये '**न खलु परिभोगयोग्यम्**' इत्यनया उक्त्या च प्रकारद्वयेनाभिहितः इति प्रतिवस्तूपमात्वमस्य ॥

---

1 'भजत्येषा'—क.

यदि दहत्यनलोऽत्र किमद्भुतं ?
यदि च गौरवमद्रिषु किं ततः ? ।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतां अविषादिता ॥ ४५७ ॥

---

## सङ्केतः

**यदि दहतीति** । अत्र **प्रकृतिरेव सतां** इतीदमेकं प्रकृतम् । शेषं तु त्रयं उपमानभूतं अप्राकरणिकम् ॥

**एवमिति** । यथा—

हरवन्न विषमदृष्टिः
हरिवन्न विभो ! विधूतविततवृषः ।
रविवन्न चातिदुःसह-
करतापितभूः कदाचिदसि ॥

इत्यादौ व्यतिरेके व्यतिरेकमाला । अत्र च एकस्य बहुभ्यो भेदेनोक्तिः । अस्यां इवाद्यभावेऽपि प्राकरणिकत्वालोचनया औपम्यावगतिः ॥ इति प्रतिवस्तूपमा ॥

## मधुमती

**यदि दहतीति** । अत्र—**प्रकृतिरेव सतामविषादिता** इत्युपमेयवाक्यम्, सतामविषादित्वस्य उपमेयत्वात् । स्वाभाविकत्वं च समानो धर्मः प्रकृतिपदेनोपात्तः । **अनलदहन-अद्रिगौरवमहोदधिसलिललवणत्वादीनि** उपमानानीति तत्तद्वाक्यानि उपमानवाक्यानि । **किमद्भुतम्, किं ततः, सदैव** इत्याद्युक्तिभिः स्वाभाविकत्वरूपसमानधर्मोपादानात्, एकत्रैव बहूपादा-

इत्यादिः [1] मालाप्रतिवस्तूपमा द्रष्टव्या ।
एवं अन्यत्राप्यनुसर्तव्यम् ॥

इति प्रतिवस्तूपमालङ्कारः [2]

---

### १४. दृष्टान्तालङ्कारः

**दृष्टान्तः पुनरेतेषां**
**सर्वेषां प्रतिबिम्बनम् ।**

**एतेषां—साधारणधर्मादीनाम् । दृष्टः अन्तः—**
**निश्चयः यत्र सः दृष्टान्तः । यथा—**

---

### सङ्केतः

**दृष्टान्त इति ।** अत्र पुन शब्दः पूर्वस्माद्विशेषकः । विशेषश्च बिम्बप्रतिबिम्बभाव एव । **सर्वेषामिति ।** न तु प्रतिवस्तूपमायामिव साधारणधर्मस्यैव द्विः प्रयोगः, किन्तु उपमेयादेरपि । **निश्चयः यत्र** इति भणनात्—यत्र विशेषेण विशेषः बिम्बप्रतिबिम्बभावे सति समर्थ्यते सः **दृष्टान्तः ।**

### मधुमती

नाच मालाप्रतिवस्तूपमात्वम् ॥

**एवमिति ।** अन्यत्रापि विरुद्धधर्मसम्बन्धवर्णनस्थलेऽपि । यथा—

"मानुषीषु कथं वा स्यात् अस्य रूपस्य सम्भवः ? ।
न प्रभातरलं ज्योतिः उदेति वसुधातलात् ।"

इत्यादावित्यर्थः ॥ इति प्रतिवस्तूपमा ॥

**दृष्टान्तः इति ।** साधारणधर्मादीनां इत्यादिपदेन उपमानोपमेययोः परिग्रहः । पदव्युत्पत्तिमाह—**दृष्ट इति ।** तथाच उपमानोपमेयसाधारण-

---

1 'इत्यादिका'- क. 2 वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता । तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ (कु)

त्वयि दृष्ट एव तस्याः
निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोः
विकसति कुसुमं[1] कुमुद्वत्याः ॥ ४५८ ॥

---

## सङ्केतः

निश्चयस्य विशेषादेव सम्भवात् । विशेषरूपतयैवं दृष्टान्ते बिम्बप्रतिबिम्ब-भावयोगात्[2] । यत्र तु विशेषस्य सामान्येन समर्थनं तत्र अर्थान्त-रन्यासः ॥

त्वयीति । यथा कुमुदिन्याः चन्द्रालोके चन्द्रगुणपक्षपातित्वेन कुमुदं विकसति, तथा त्वद्दर्शने त्वद्गुणपक्षपातित्वेन तस्याः मनः कामाग्निज्वलितमुप-शाम्यति इति सर्वप्रतिबिम्बनम् ॥

## मधुमती

धर्मनिश्चयस्थानत्वं दृष्टान्तलक्षणम् । न च प्रतिवस्तूपमासङ्करः । तत्र अनौचित्यमुखेनाभिधानात् । किञ्च—तत्र उत्प्रेक्षामुखेनाभिधानात् अत्र निश्चयमुखेनाभिधानाच्च । सामान्यविशेषभावाच्च न अर्थान्तरन्यास-सङ्करः ॥

---

1 'कुमुदं'–क. 2 निश्चयो यत्रेत्यादि नास्ति–क.

एषः साधर्म्येण । वैधर्म्येण तु—

तवाहवे साहसकर्मशर्मणः
करं[1] कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुः
दधत्यवाते स्थिरतां हि पांसवः ॥ ४५९ ॥

इति दृष्टान्तालङ्कारः[2]

---

## सङ्केतः

तवेति । अत्र विशरारुतागमनादेः स्थिरत्वाधानादिवैधर्म्येण प्रतिबिम्बनम् । दृष्टान्ते साधारणधर्माणां वस्तुवृत्त्या ह्यभेद एव । परं शब्दान्तरेणोक्तत्वात् प्रतिबिम्बने भेदाभासः इति, 'प्रतिबिम्बने नियतनिष्ठतया तेषां साधारणता न स्यात्' इति नाशङ्कनीयम् ॥ इति दृष्टान्तः ॥

## मधुमती

तवाहव इति । दधत्यवाते स्थिरतां हि पांसवः इति व्यतिरेकमुखेनाभिधानात्[3] व्यतिरेकदृष्टान्तत्वम् ॥ इति दृष्टान्तः ॥

---

1 'पाणिं'–ख. 2 चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः । त्वमेव कीर्तिमान् राजन्! विधुरेव हि कान्तिमान् ॥ (कु) 3 तत्रोत्प्रेक्षामुखेनेत्यादि नास्ति-ज.

## १५. दीपकालङ्कारः

सकृद्वृत्तिस्तु धर्मस्य
　　प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु
　　कारकस्येति दीपकम् ॥ १०३ ॥

प्राकरणिकाप्राकरणिकानां, अर्थात्—उपमानोपमेयानां धर्मः—क्रियादिः एकवारमेव यत् उपादीयते, तत् एकस्यैव[1] समस्तवाक्यदीपनात् दीपकम् । यथा—

---

### सङ्केतः

एकस्थस्यैवेति । अयं भावः—एकत्र स्थितः क्रियादिः समानो धर्मः प्रसङ्गेन अन्यत्रोपकारात् दीपनाख्यात् [2] दीपसाम्येन **दीपकम्** ॥ अत्र प्रकृताप्रकृतत्वयोः वास्तवत्वात् अर्थानामौपम्यं सत्यम् । परं गम्यं, न

### मधुमती

**सकृदिति । प्रकृताप्रकृतात्मनां धर्मस्य सकृद्वृत्तिः** इत्येकं **दीपकम्, बह्वीषु क्रियासु कारकस्य सैव** सकृद्वृत्तिरेव अपरं **दीपकं** इत्यन्वयः । व्याचष्टे—**प्राकरणिकेति । अर्थादिति ।** साधारणधर्मोपादानेन औपम्य एव विश्रान्तेः । अत एव प्रथमा औपम्यगर्भा । द्वितीया तु न तथा । अत एव—'बहुषु कारकेषु एकक्रियोपादानमपि तुल्यन्यायतया दीपकान्तरमित्यपदेश्यम्' इत्यपास्तम् । क्रियाया अपि साधारणधर्मत्वात् । यथोदाहरिष्यते ॥ पदव्युत्पत्तिमाह—**एकस्यैवेति ।** एवं च सकल-

---

1 'एकस्थस्यैव'—क.　2 'अन्यत्रोपकरोतीति दीपसाम्यात्'—ग.

किविणाणं[1] धणं णाआणं
 फणमणी केसराइं सीहाणं ।
कुलवालिआणं अ थणआ
 कुतो छिप्पंति अमुआणं ॥ ४६० ॥
[कृपणानां धनं, नागानां
 फणमणिः, केसराश्च सिंहानाम् ।
कुलबालिकानां[2] च स्तनाः
 कुतः स्पृश्यन्तेऽमृतानाम् ॥]

---

सङ्केतः

श्रौतम्। अतो नोपमा तुल्ययोगितायां तु काल्पनिकं औपम्यम्। शुद्धानामेव प्रकृतानां अप्रकृतानां वा तत्र ग्रहणात् । न पुनः युगपत् उभयग्रहणमिति ॥

**किविणाणेति** । अत्र कुलबालिकाः प्रकृताः, शेषं अप्रकृतम् । अत्र **छिप्पन्ति** इति क्रिया समानो धर्मः । स च अन्ते निर्दिष्ट इति अन्तक्रियादीपकम् । आदिमध्यक्रियादीपके स्वेनोह्ये ।

मधुमती

वाक्योपकारकत्वं दीपकसामान्यलक्षणम् ॥

प्रथममुदाहरति—**किविणाणमिति** । अत्र वर्णनीयतया **कुलपालिकानां स्तनाः** प्राकरणिकाः **कृपणधनादयः** अप्राकरणिकाः । एषां च स्पर्शक्रिया साधारणो धर्मः । सा च एकत्रैवोपात्तेति दीपकम् । औपम्यप्रतीतिः अत्र स्फुटैव ॥

---

1 'किविणाणं'–ख. 2 'कुलपालिकानां'–ख,

एवं—कारकस्य बह्वीषु क्रियासु सकृद्वृत्तिः दीपकम्। यथा—

स्विद्यति कूणति वेल्लति विवलति[1]
निमिषति विलोकयति तिर्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति
नवपरिणया वधूः शयने ॥ ४६१ ॥

**मालादीपकमाद्यं चेत्**
**यथोत्तरगुणावहम्।**

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते तत् मालादीपकम्। यथा—

---

### सङ्केतः

**स्विद्यतीति**। अत्र वधूरूपं कारकं अन्तस्थं बहुषु क्रियासु वर्तते इति अन्तकारकदीपकम्। आदिमध्यकारकदीपके ज्ञेये। तथा क्रियायाः सर्वत्र वाक्ये प्रयोगात् तद्दीपकत्वे सर्वं वाक्यं सालङ्कारं स्यात्, अतः न

### मधुमती

द्वितीयमुदाहरति—**स्विद्यतीति**। अत्र **नववधूलक्षणकारकेण** एकदेशस्थितेनापि अनेकक्रियान्वयात् दीपकम्॥ औपम्यप्रतीतिस्तु नास्त्येव। अत्र आदिमध्यान्तदीपकं अन्यत्रोक्तं अनेतिवैचित्र्याधायकत्वात् नोक्तम्॥

मालादीपकमाह—**मालेति**। उत्तरोत्तरवाक्यार्थं प्रति **पूर्वपूर्व-वाक्यार्थस्य उपकारकत्वे मालादीपकं** इत्यर्थः॥

---

1 'विचलति'–क.

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय, येन येन सहसा यद्यत् समासादितम्[1] ।
कोदण्डेन शराः, शरैररिशिरः, तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्तिरतुला, कीर्त्या च लोकत्रयम्[2] ॥
॥ ४६२ ॥

इति दीपकालङ्कारः[3]

---

### सङ्केतः

क्रियामात्रं दीपकम्, किन्तु भूयोभिः सजातीयैः कारकैः सम्बध्यमानम् । तस्य च अनेकेष्वर्थेषु साधारणतया सम्बध्यमानस्य बलात् औपम्यगर्भत्वम् ॥

**सङ्ग्रामेति** । अत्र आसादनक्रियानिमित्तं दीपनं दीपनविषयाणां उत्तरोत्तरोम्भितत्वेन[4] कृतम् । तथा—कोदण्डाद्यैः शरादीनां क्रमेण उत्कर्षः विहितः । एकावली तु पूर्वस्य उत्तरोत्तरेण उत्कर्षहेतुत्वे स्यादिति विवेकः ॥ इति दीपकम् ॥

### मधुमती

उदाहरति **सङ्ग्रामेति** । अत्र उत्तरार्धे—पूर्वपूर्ववाक्यार्थस्य उत्तरोत्तरवाक्यार्थं प्रति प्रकर्षाधायकत्वस्य स्फुटत्वात् मालादीपकम् । अस्य अभवन्मतयोगाख्यपूर्वोक्तदोषवत्त्वेऽपि अलङ्कारोदाहरणत्वं अविरुद्धम् । अलङ्कारस्य दोषाभावाव्याप्यत्वात् । अन्यथा तेन गतार्थस्य दोषाभावस्य काव्ये पृथगुपादानं न स्यात् । इदमेव एकावलीमन्ये वदन्ति ॥ इति दीपकम् ॥

---

1 ‘सं प्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम् ।’-क. 2 ‘तेन त्वं नृपते त्वया सितयशः तेनापि लोकत्रयम्’-क. 3 वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः । मदेन भाति कलभः प्रतापेन महीपतिः ॥ (कु) 4 ‘राञ्चितत्वेन’-घ.

## १६. तुल्ययोगितालङ्कारः

**नियतानां सकृद्धर्मः**
**सा पुनः तुल्ययोगिता ॥१०४॥**

**नियतानां प्राकरणिकानां अप्राकरणिकानामेव वा[1]॥**

**क्रमेणोदाहरणम्—**

**पाण्डु क्षामं वदनं**
**हृदयं सरसं तवालसं च वपुः ।**
**आवेदयति नितान्तं**
**क्षेत्रियरोगं सखि! हृदन्तः ॥४६३॥**

---

### सङ्केतः

पाण्डुक्षाममिति । अत्र वदनादीनि सर्वाण्यपि प्रकृतानि **क्षेत्रियरोगः** राजयक्ष्मा, अन्यस्मिन् क्षेत्रे=देहान्तरे चिकित्स्यः । पक्षे तु—उपपतिविषयः अनुरागः । **आवेदयति** इति **सकृत् धर्मः** निबद्धः ॥

### मधुमती

नियतानामिति । तेन दीपकव्युदासः ।

पाण्डुक्षाममिति । अत्र साम्यमात्रविवक्षया क्षामादिपद[2]प्रयोगात्, **रोग**शृङ्गारयोः उभयोरपि प्राकरणिकतया **क्षेत्रियत्वरूपसाधारणधर्मस्य सकृदुपादानात्** तुल्ययोगितेत्यर्थः ।

---

1 अप्राकरणिकानामेव वा इति नास्ति–क, 2 'साम्यविवक्षया'–च,

कुमुदकमलनीलनीरजालिः
ललितविलासजुषोः दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म
प्रतिहतमेकपदे तवाऽऽननस्य[1] ॥४६४॥

इति तुल्ययोगितालङ्कारः[2]

---

## सङ्केतः

**कुमुदेति** । अत्र कुमुदादीनि सर्वाणि अप्रकृतानि । **दृशोः** मुखस्य च वर्ण्यत्वात् प्रकृतत्वम् । **का** इति निन्दारूपः पूर्वार्थे । **प्रतिहतत्व-**[3] **रूपश्च** उत्तरार्धे सकृद्धर्मः निबद्धः । कुमुदादीनां तुल्ययोगिता हेतुः ॥ इति तुल्ययोगितालङ्कारः ॥

## मधुमती

**कुमुदेति** । अत्र अधर्मत्वं साधारणो धर्मः, कुमुदादीनां अप्राकरणिकानामेव सकृदुपादानात् प्रतीयते इत्यर्थः । अस्यां उभयरूपायामपि औपम्यप्रतीतिः इति द्रष्टव्यम् ॥ इति तुल्ययोगिता ॥

---

1 'तदाननस्य'–क. 2 वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता । सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च । त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते । मालतीशशभृल्लेखाकदलीनां कठोरता ॥ हिताहिते वृत्तितौल्यं अपरा तुल्ययोगिता । प्रदीयते पराभूतिः मित्रशात्रवयोरिव ॥ गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता । लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥ (कु) । 3 'प्रतिहत'–ग.

## १७. व्यतिरेकालङ्कारः

उपमानाद्यदन्यस्य
व्यतिरेकः स एव सः ।

अन्यस्य—उपमेयस्य । व्यतिरेकः—आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी
भूयो भूयो विवर्धते नित्यम्[1] ।
विरम, प्रसीद, सुन्दरि !
यौवनमनिवर्ति यातं तु ॥४६५॥

---

### सङ्केतः

आधिक्यमिति । अर्थात् उपमानात् । तदयं सूत्रार्थः—**यत्**[2] उपमानात् उपमेयस्य व्यतिरेकः स एव=व्यतिरेक एव[3] सः व्यतिरेकोऽलङ्कारः इति ॥

क्षीणः इति । 'यथा इन्दुः क्षीणोऽपि वर्धते, तथा तारुण्यमपि' इति चित्ते कृत्वा काऽपि रुष्टा सती प्रियेण ज्ञाताशयेनोच्यते—प्रिये ! **यातं** क्षीणं **यौवनं** भूयः न **निवर्तते**[4] इति मा कुप्यः[5] इति ।

### मधुमती

उपमानादिति । अर्थात् उपमेयस्येति भावः ।

नन्विदं लक्षणं 'क्षीणः क्षीणोऽपि शशी' इत्यादौ अव्याप्तम्, तत्र उपमानस्य चन्द्रस्य पुनः पूर्णतया अधिकगुणत्वम्, यौवनस्य उपमेयस्य तु[6] गतस्यानिवृत्त्या हीनगुणत्वं इति अलङ्कारसर्वस्वकारमतं दूषयितुं तदुदाहरति—क्षीणः इत्यादि । न हि चन्द्रयौवनयोः उपमानोपमेयभावः विवक्षितः,

1 'भूयो भूयोऽपि वर्धते नितराम्'–ख. विवर्धते सत्यम्'–ङ. 2 'यः'–घ. 3 व्यतिरेक एव इतिनास्ति–ग. 4 'न वर्धते'–घ. 5 'मा कुपः'–ग. 6 'भू'–ज.

इत्यादौ उपमानस्य उपमेयादाधिक्यमिति यत् केनचिदुक्तं, तदयुक्तम् । अत्र यौवनगतास्थैर्यस्य आधिक्यं हि विवक्षितम् ॥

---

## सङ्केतः

**केनचिदिति ।** रुद्रटेनेत्यर्थः । तन्मताशयेन अत्र चन्द्रात् यौवनं न्यूनगुणम्, शशिवैलक्षण्येन गतस्य तस्य अपुनरागमनात् । अलङ्कारसर्वस्वेऽपि इत्थमेवोक्तम् । **विवक्षितमिति ।** यौवने यादृशं अस्थैर्याधिक्यं न चन्द्रे

## मधुमती

किन्तु चन्द्रक्षय-यौवनक्षययोः । तत्र पुनर्निवृत्त्या[1] चन्द्रक्षयो हीयते । पुनरनि[2]वृत्त्या यौवनक्षयः प्रकृष्यते इति नाव्याप्तिरिति भावः ॥

यद्यपि उपमानस्य उपमेयाधिक्येऽपि उपमाप्रतीतौ नाधिकगुणत्वं विषयः इति, यत्र उपमानप्रकर्षोपमेयापकर्षयोः हेत्वभिधानं, तत्रापि व्यतिरेकाङ्गीकारे न दूषणम् । तथापि वर्णनीयत्वेन उपमेयस्य प्राधान्यात्, तस्य प्रकृततया, अप्रकृतस्य उपमानस्यैव[3] वैलक्षण्याभिधाने असंबद्धार्थाभिधायकत्वं स्यात् । यदि तु द्वयोः साम्यं, उपमेयस्याधिक्यं वा अभिधीयते तदा उक्तदोषो न भवतीति तदुभयं अलङ्कारः । तत्र आद्ये उपमा, द्वितीये च व्यतिरेकः इति ॥

यद्यपि उपमाने[4] वैलक्षण्यप्रतीतौ सादृश्यप्रतीतिरेव नास्ति । तथापि निषेध्यत्वेनैव सादृश्यप्रतीतेः, यथाकथञ्चित् तत्प्रतीतेरेव विवक्षितत्वात् ॥

---

1 'त्या न गुणो'–च. 2 'पुनरपि'–ज. 3 'प्रकृतस्योपमान'–ज. 4 'उपमेय'–ज.

हेत्वोरुक्तावनुक्तीनां
त्रये साम्ये निवेदिते ॥१०५॥
शब्दार्थाभ्यामथाक्षिप्ते
श्लिष्टे[1] तद्वत् त्रिरष्ट तत्[2] ।

व्यतिरेकस्य हेतुः—उपमेयगतं उत्कर्षनिमित्तम्, उपमानगतं अपकर्ष[3]कारणम्; तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् । एतद्भेद-चतुष्टयं उपमानोपमेयभावे शब्देन प्रतिपादिते

---

## सङ्केतः

तादृक् इति भावः । विपरीतः अतिरेकः—अधिकत्वं **व्यतिरेकः** । अधिकत्वे वैपरीत्यं च हीनत्वम् । अ आधिक्यं **आधिक्यम्**[4] । अनाधिक्य-मित्यर्थः । एवं च रुद्रटोऽपि मानितः । इत्थमभणनं च 'ऊहकानामेवा-त्राधिकारः' इति ज्ञापनार्थम् ॥

तयोर्द्वयोरिति । युगपदिति शेषः । **एकतरस्य** क्रमेणा**नुक्तौ अनुक्तिद्वयम्** । **द्वयोः** उपमानयोः उत्कर्षापकर्षहेत्वोः युगपदनुक्तौ एका अनुक्तिः । मिलितं **अनुक्तित्रयम्** । **शब्देनेति** । इववायथादिना इवार्थ-

## मधुमती

विभजते—**हेत्वोरिति** । **हेत्वोरुक्तौ** प्रकर्षनिकर्षयोः शाब्दत्वम्, **अनुक्तिद्वये** च एकस्य शाब्दत्वं, अन्यस्य आर्थत्वम्, तृतीयानुक्तौ च द्वयोरप्यार्थत्वमिति ध्येयम् ॥

---

1 'श्लेषे'–ख. 2 'त्रिरष्टसः'–क. 3 'निकर्ष'–क. 4 अ इत्यादि नास्ति–घ,

आर्थेन च क्रमेणोक्तौ[1] चत्वार एव भेदाः। आक्षिप्ते चौपम्ये तावन्त एव। एवं द्वादश। एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः॥

क्रमेणोदाहरणम्—

असिमात्रसहायस्य प्रभूतारिपराभवे।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ ४६६॥

---

सङ्केतः

वतिरूपेण चेत्यर्थः। **आर्थेनेति**[2]। तुल्यार्थशब्द-तुल्यार्थवतिप्रतिपादितेनेत्यर्थः। **क्रमेणेति**। यदा अर्थशब्दः सामर्थ्यार्थः तदा आर्थेन सामर्थ्यरूपेण क्रमेण इति व्याख्या। **आक्षिप्ते इति**। इवतुल्याद्यभावे[3] इत्यर्थः। **एते चेति**। तद्वत् श्लेषेऽपि द्वादशभेदाः इत्यर्थः। मूले त्रिरष्टेति। त्रीन् वारान् अष्ट=चतुर्विंशतिः इत्यर्थः॥

**असीति**। अत्र तुच्छत्वं उपमानगं गर्वहेतुः निकर्षकारणम्, महाधृतित्वं उपमेयगतं उत्कर्षकारणं स्मयाभावहेतुः। अतः

मधुमती

**असिमात्रेति**। अत्र तुच्छत्वं निकर्षकारणं उपमानस्य, महाधृतित्वं

---

1 'क्रमेणोक्ताः'–ख. 2 'अर्थेनेति'–ग. 3 'तुल्यार्थाभावे'–ग.

अत्रैव—तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वा अनुपादाने अन्यत् भेदत्रयम्। एवं अन्येष्वपि द्रष्टव्यम् । अत्र इवशब्दस्य सद्भावात् शाब्दं औपम्यम् ॥

### सङ्केतः

युगपत् हेत्वोरनुक्तिः । तथा अत्रैव—

'इतरस्य जनस्येव न समयोऽस्य महाधृतेः।'

इति पाठे महाधृतित्वस्य उपमेयोत्कर्षहेतोरुक्तिः ।

'तुच्छस्यान्यजनस्येव न समयोऽस्य विभाव्यते।'

इति पाठे तुच्छत्वस्य उपमानापकर्षहेतोः उक्तिः । तथा—

'इतरस्य जनस्येव न समयोऽस्य विभाव्यते।'

इति कृते तु उत्कर्षापकर्षहेत्वोः युगपदनुक्तिः । तदाह—अत्रैवेति । एवं शाब्दौपम्ये चतुर्भेदी । एवमन्येष्विति । आर्थादावपि चतुष्कपञ्चके दर्शितदृष्टान्तादन्या त्रिभेदी स्वेनोह्या ॥

### सङ्केतः

उत्कर्षकारणं उपमेयस्य । एवं च तदुभयोपादानात् इवशब्दस्य श्रुतेश्च शाब्दोपम्ये हेतुद्वयोपनिबन्धतः व्यतिरेकः ॥

उदाहरणगौरवेण ग्रन्थगौरवमाशङ्कमानः[1] अत्रैव अनुक्तित्रयनिबन्धनं व्यतिरेकं हेतुवाचकपदा[2]वापोद्वापाभ्यां कथयति—अत्रैवेति। पर्यायेणेति। अयुगपदित्यर्थः ॥

---

1 'माना'–च. 2 'चकं पदमा'–ज.

असिमात्रसहायोऽपि[1] प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत् सगर्वोऽयं महाधृतिः[2] ॥ ४६७ ॥

अत्र तुल्यार्थे वतिरिति आर्थमौपम्यम् ॥

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं[3] कलङ्किनम् ॥ ४६८ ॥

अत्र इवादि-तुल्यादिपदविरहेण[4] आक्षिप्तैवोपमा ॥

---

सङ्केतः

आर्थसाम्ये यथा—असीति । अत्रापि उत्कर्षापकर्षहेत्वोः द्वयोरुक्तिः । इह अर्थौपम्ये, पूर्वत्र च शाब्दौपमम्ये व्यतिरेकस्य आद्यो भेदः । शेषत्रिभेदी स्वेनोह्या ॥

इयमिति । अत्र उपमानोपमेययगं अकलङ्ककलङ्कित्वरूपं उत्कर्षापकर्षकारणं उक्तम् । अयं आक्षिप्तौपम्ये व्यतिरेकस्य आद्यो भेदः यथावा—'क्षीणः क्षीणोऽपि शशी' इति । अत्र यौवने उपमेये चन्द्रे चोपमाने क्रमेण अस्थैर्या[5]धिक्यहानी उत्कर्षापकर्षकारणे उक्ते । अयं आद्यो भेदः । अनुक्ता[6] त्रिभेदी स्वा यथा—

नित्योदितप्रतापस्य तपनेन तुला न ते ।

इति । अत्र नित्योदितप्रतापत्वं उपमेयोत्कर्षहेतुः । यथा वा—

'नियतिकृतनियमरहितां
ह्लादैकमयीं अनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिं
आदधती भारती कवेर्जयति ॥ '

---

1 'योयं'—क. 2 'धृतेर्निधिः'—ख. 3 'निन्दतीन्दुं'—क. 4 'विरहे'—क. 5 'क्रमेण स्थैर्या'—ग. 6 'अनुक्तौ'—घ.

जितेन्द्रियतया सम्यग् विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवत् भङ्गुराः गुणाः ।। ४६९ ।।

अत्र इवार्थे वतिः गुणशब्दः श्लिष्टः शाब्दमौपम्यम् ।।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ।। ४७० ।।

अत्र तुल्यार्थे वतिः कलाशब्दः श्लिष्टः ।।

---

## सङ्केतः

इति । अत्र उपमेयोत्कर्षहेतुः । पूर्वत्र 'क्षणोदितप्रतापेन' इति पाठे उपमानापकर्षहेतुः । तत्रैव—

'महीमण्डलमाणिक्य ! तपनेन [1] तुला न ते ।'

इति पाठे तु उत्कर्षापकर्षहेत्वोः द्वयोरप्यनुक्तिः इति आक्षिप्तौपम्ये चतुर्भेदी ।

जितेन्द्रियतयेति । अत्र विद्यावृद्धनिषेवा गाढगुणत्वो[2]त्कर्षे हेतुः । भङ्गुरगुणत्वनिकर्षे हेतुः नोपात्तः इति उपमानगतनिकर्षहेत्वनुक्तौ शाब्दौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदः ।।

अखण्डेति । अयं उपमानगतनिकर्षहेत्वनुक्तौ[3] आर्थौपम्ये तृतीयो भेदः ।।

## मधुमती

श्लिष्टभेदानुदाहरति—जितेन्द्रियतयेत्यादि ।।

---

1 'प्रतापेन'–ग. 2 'निषेवो गाढगुणो'–ग. 3 'हेतूक्तौ'–ग.

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति । तस्यापि भेदाः एवमूह्याः ॥ दिङ्मात्रं च उदाह्रियते[1] । यथा—

हरवन्न विषमदृष्टिः
हरिवन्न विभो! विधूतविततवृषः ।
रविवन्न चाति[2]दुस्सह-
करतापितभूः कदाचिदसि ॥ ४७१ ॥

अत्र तुल्यार्थे वतिः । विषमादयश्च शब्दाः श्लिष्टाः ॥

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वनाऽनेन भूपेन भास्वानेष[3] विनिर्जितः ॥ ४७२ ॥

---

## सङ्केतः

हरेति । वृषः धर्मो दानवश्च । अत्र हरेण तुल्यं वर्तते इत्यादिक्रमेण तुल्यार्थे वतिः । तेन आर्थौपम्यम् । अयं उभयानुक्तौ श्लेषव्यतिरेकस्य अन्त्यो भेदः । शेषं द्वयं स्वयं ज्ञेयम् ॥

नित्योदितेति । अत्र उदितप्रतापत्व-मीलितप्रभत्वात्मनोः उपमेयोपमानगतोत्कर्षापकर्षहेत्वोः उक्तिरिति उभयोपादाने श्लेषव्यतिरेकान्त्य-

## मधुमती

मालाव्यतिरेकमुदाहरति—हरवदिति । पूर्वं तस्यापीति । एवं च मालाव्यतिरेकेऽपि हेत्वनभिधानादिचतुष्टयं भवतीति द्रष्टव्यम् ॥

---

1 मालेत्यादि नास्ति—क. 2 'चापि'—क. 3 'भास्वानेव'—ख.

अत्र हि आक्षिप्तैवोपमा। भास्वतेति श्लिष्टः ॥

यथावा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम्।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाऽऽननमङ्गनानाम् ॥ ४७३ ॥

---

## सङ्केतः

चतुष्कस्य आद्यो भेदः। भास्वतैव भास्वता इति भास्वरत्वारोपात् अर्कत्व[1]-प्रतिपत्तिरिति श्लिष्टता ॥

**स्वच्छेति।** समुल्लसितं प्रतिबिम्बितं **इन्दुबिम्बं** यत्रेति तत् तथा। **मधु** कर्तृ **तृष्णां जहार न** मुखम् इति योगः। अत्र तृष्णायाः हरणाहरणयोः कारणे नोपात्ते इति द्वयानुक्तिरिति उभयानुक्तौ श्लेषव्यतिरेकान्त्यचतुष्कस्य अन्त्यो भेदः। द्विभेदी स्वेनोह्या। **एवं अन्येष्वपि द्रष्टव्यम्** इत्युक्त्या प्रतिचतुष्कं एकः कश्चिद्भेदो वाच्यः इति स्थितेऽपि यत् ग्रन्थकृता **हरवत्** इति **स्वच्छात्मता** इति च दृष्टान्तद्वयमूचे, तत् एकत्र व्यतिरेकमालात्वं, अन्यत्र अर्थश्लिष्टत्वं च विशेषं ज्ञापयितुम्। अत एव **यथावा** इत्युक्तम् ॥

## मधुमती

**भास्वतेति श्लिष्टः इति।** अत्र अभिधानियमाभावात् अर्कभूपौ द्वावपि भास्वत्पदाभिधेयौ। ततश्च—भास्वानेव भास्वान् इति श्लिष्टरूपकेण अवरत्वं भास्वतो लभ्यत इति भावः ॥

न केवलं जयत्वादिपदैरेव उपमाऽऽक्षेपः अभिमतः। अपि तु यथा-कथञ्चिदपि इति विभावयितुं उदाहरणान्तरमाह—**स्वच्छेति।** अत्र श्लेष-

---

1 'एकत्व'–ग.

अत्र इवादीनां तुल्यादीनां च पदानां अभावेऽपि श्लिष्टविशेषणैः आक्षिप्तैवोपमा प्रतीयते । एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादाने अन्येऽपि भेदाः संभवन्ति । तेऽपि अनयैव दिशा द्रष्टव्याः ॥

इति व्यतिरेकालङ्कारः [1]

---

## सङ्केतः

पृथगुपादान इति । यथा उद्भटकुमारसम्भवे गौरीस्तुतौ—

'या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता [2] ।
तपसा तां सुदीर्घेण दूरात् विदधतीमधः ॥'

इति । तपाः माघमासोऽपि । एकेनेति सुदीर्घेणेति हेतुद्वयोक्तिः । अत्र 'तपसा' इति श्लिष्टोक्तियोग्यं पदं पृथगूचे ॥ एवं यथा—

सच्चक्रानन्दनोऽप्येषः न तुल्यः तपनस्तव ।
ससूर[3]स्संज्ञया येन ससूरः[4] सुभटैर्भयात् ॥

इति । अत्रापि हेत्वोरुक्तिः । इवाद्यभावात् अत्र पूर्वत्रापि आक्षिप्तौपम्ये, द्वयोक्तौ श्लेषव्यतिरेकस्य आद्यो[5] भेदः । अत्रापि श्लिष्टोक्तियोग्यपदस्य पृथग्भावः । अन्येऽपि इति एकादश भेदाः ।

## मधुमती

महिम्ना साम्यप्रतीतावपि—

'तृष्णां जहार मधु नाननमङ्गनानाम्'

इत्यतो वैलक्षण्यप्रतीतिरिति आर्थ[6]व्यतिरेकः इत्यर्थः ॥ इति व्यतिरेकः ॥

---

1 व्यतिरेको विशेषश्चेत् उपमानोपमेययोः । शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ॥ (कु) 2 'बिभ्रती'–घ. 3 'सशूरः'–ग. 4 'सशूरः'–ग. 5 'काद्यो'–घ. 6 अर्थ इति नास्ति–ज.

## १८. आक्षेपालङ्कारः

निषेधो वक्तुमिष्टस्य
यो विशेषाभिधित्सया ॥ १०६ ॥
वक्ष्यमाणोक्तविषयः
स आक्षेपो द्विधा मतः ।

विवक्षितस्य प्राकरणिकत्वात्, अनुपसर्जनीयकार्यस्य अशक्यवक्तव्यत्वं अतिप्रसिद्धत्वं वा विशेषं वक्तुं

---

### सङ्केतः

नन्वत्र श्लेषोपकारात् चमत्कारी व्यतिरेकः इति, तयोः अङ्गाङ्गिभावे सङ्करः स्यात्, न । द्वययोगे हि सङ्करः, न चात्र द्वयमस्ति । एवंविध-श्लेषस्यैव व्यतिरेकापरनामत्वात् । परं व्यतिरेकरूपं अंशमाश्रित्य व्यतिरेक-प्रभेदतया श्लेषव्यतिरेकरूपतया उक्तम् । ये तु श्लिष्टोक्तियोग्यपदस्य पृथ-गुपादाने भेदाः, तत्र श्लेषगन्धोऽपि नास्ति । एकस्य पदस्य द्विरुपादानात् ॥ इति व्यतिरेकः ॥

निषेध इति । ननु उक्तविषयत्वे वक्तुमिष्टत्वं कथम्? सत्यम् । उक्तमप्यादौ वक्तुमिष्टमेव । अशक्येति वक्ष्यमाणविषयस्य लक्षणम्, अतिप्रसिद्धत्वमिति उक्तविषयस्य लक्षणम्[1] । प्रस्तुतोऽर्थः प्रस्तुतत्वादेव

### मधुमती

निषेधः इति । विशेषाभिधित्सया विशेषप्रतिपिपादयिषया वक्तुमिष्टस्य यः निषेधः सः आक्षेपः इत्यन्वयः । वक्ष्यमाणोक्तविषयः इति तु विभागः । तदेतत् व्याचष्टे—विवक्षितस्येति । वक्तुमिष्टस्याप्य-नभिधानं अशक्यवक्तव्यत्वात् अतिप्रसिद्धत्वाद्वा भवतीति तदुभयं प्रकाश-

---

1 'द्वमुक्तविषयं'–ग.

निषेधः—निषेध इव[1] यः, सः वक्ष्यमाणविषयः उक्तविषयश्चेति द्विधा[2] आक्षेपः ।। क्रमेणोदाहरणम्—

ए एहि[3] किंपि कीएवि कएण
णिक्किव! भणामि अलमह वा ।
अविआरिअकज्जारंभआरिणी
मरउ ण भणिस्सं ।। ४७४ ।।

---

## सङ्केतः

विधानार्हः, न निषेधार्हः इति स्थिते, निषेधो यः सः नोपपद्यते इति, निषेधः निषेधाभासः सम्पन्नः । तस्यैतस्य करणं प्रकृतत्वेन विशेषोक्त्यर्थम् । अन्यथा गजस्नानतुल्यता स्यात् इत्याह—**निषेध इवेति** । **द्विविध इति** । **उक्तविषयत्वेन** कैमर्थक्यपरं आलोचनं आक्षेपः, **वक्ष्यमाणविषयत्वेन** आनयनरूपं आगूरणं आक्षेपः इति अर्थभेदात् आक्षेपौ द्वौ । विशेषश्चात्र शब्दानुपात्तत्वात् गम्यः । तत्राद्ये भेदे कथनस्यैव निषेधः । द्वितीये तु—क्वचिद्वस्तुनः क्वचिद्वस्तुकथनस्य च[4] निषेधः ।।

**अविआरियेति** । कार्यं अन्यासक्तेऽपि त्वय्यनुरागरूपम् । अत्र **ण भणिस्सं** इति भणननिषेधात्—'यत् तस्याः त्वद्वियोगे सा सा अवस्था

## मधुमती

यितुमित्यर्थः । **निषेध इवेति** । न खलु वक्तव्यनिषेधः अत्र प्रतीयते, किन्तु—वचननिषेधः । तथाच—तदभाव एव तत्त्वेन व्यपदिश्यते । अत एव—अनभिधानं[5] अलङ्कारः, न तु वक्तव्यस्याभावः । अभिधानाभावात् उक्तविशेषद्वयप्रतीत्या चमत्कारोदयात् । **वक्ष्यमाणेति** । वर्तमानस्य निषेधानुपपत्तेः[6] इति भावः ।।

---

1 'निषेध इव निषेधः'–क. 2 'द्विविधः'–ख. 3 एहिं वि इति पाठे इदानीमपि इति छाया । 4 'वा'–ग. 5 'अभिधानं'–च. 6 'वक्ष्यमाणस्यनिषेधोपपत्तेः'–ज.

[ए[1] एहि किमपि कस्या अपि कृते
निष्कृप ! भणामि, अलमथवा ।
अविचारितकार्यारम्भकारिणी
म्रियतां न भणिष्यामि ॥ ]

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता[2] तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त ! किमनेनोक्तेन ? न ब्रूमहे ॥४७५॥

इत्याक्षेपालङ्कारः [3]

---

## सङ्केतः

जायते, या या वक्तुमप्यशक्या '—इति लभ्यते । इष्टोऽर्थः निषेधमिषेणोत्कर्षितः इति भावः । कामावस्थाविशेषाणां[4] च वक्ष्यमाणतया सूचनमिति आद्यो भेदः ॥

**किमनेनोक्तेन** इति कैमर्थ्यपरं आलोचनम् । **न ब्रूमहे** इति

## मधुमती

इदं त्ववधातव्यम्—यत्र सामान्यतो वर्णनमुपक्रम्य तन्निषेधोऽभिधीयते तत्र अशक्यवक्तव्यत्वप्रतीतिः । यत्र च एकदेशतो लक्षित्वाऽपि एकदेशान्तर-

---

1 'अयि '–क.   2 'प्रवसता '–क.   3 आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् । चन्द्र मन्दर्शयास्मानं अथवाऽस्ति प्रियामुखम् ॥ निषेधाभासमाक्षेपं बुधाः केचन मन्वते । नाहं दूती तनोस्तापः तस्याः कालानलोपमः ॥ आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते । गच्छ गच्छसि चेत् कान्त तत्रैव स्याज्जनिर्मम ॥ (कु)
4 'शेषेण '–घ.

## सङ्केतः

निषेधः । तद्द्वारेण[1] तस्याः- –'त्वद्वियोगे ज्योत्स्नादिः स्फुलिङ्गव्यापारहेतुः स्यात्' इति स्फुटोऽयमर्थः । अन्यत्रापि दृष्टत्वात् । स्फुलिङ्गव्यापाराणां आनन्त्यात्मको विशेषः 'किमनेनोक्तेने'ति सामान्येनोपक्रान्तः, 'न ब्रूमहे' इति असंवि[2]ज्ञानपदनिबन्धनतया निर्वाहितः इति उक्तविषयता । अत्र च वस्तुनिषेधः॥

"प्रसीदेति ब्रूयादिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥"

इत्यादौ तु वस्तुकथननिषेधः । तथाहि—भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेन अवश्य[3]स्वीकार्यत्वं विशेषः । तदेवमाक्षेपे— इष्टोऽर्थः, तस्य निषेधः, निषेधस्यानुपपत्त्या अलीकत्वम्, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते ।

न केवलं इष्टनिषेधाभासः आक्षेपः, किन्तु अनिष्टविध्याभासश्च । यथा–

'गच्छ गच्छसि चेत् कान्त! तत्रैव स्याज्जनिर्मम ।
ममापि जन्म तत्रैव भूयात् यत्र गतो भवान् ॥'

इति । अत्र कान्तप्रस्थानं अनिष्टमपि अनिराकरणमुखेन विहितम् । न चास्य विधिर्युक्तः, अनिष्टत्वात् । तेन अयं विधिः विध्याभासो निषेध एव ॥ इत्याक्षेपः ॥

## मधुमती

निषेधः कृतः तत्र अति[4]प्रसिद्धत्वप्रतीतिः इति ॥ एतच्च उदाहरणद्वये व्यक्तमिति ध्येयम् ॥ इत्याक्षेपः ॥

---

1 'निषेधनद्वारेण'–ग. 2 'इति संवि'–ग. 3 'नावश्य'–घ.
4 'यत्र च विशेषतो लक्षित्वाऽपि (भावत्वेऽपि) तन्निषिध्येत तत्रापि'–ज,

## १९. विभावनालङ्कारः

**क्रियायाः प्रतिषेधेऽपि**
**फलव्यक्तिर्विभावना ॥१०७॥**

**हेतुरूपक्रियायाः निषेधेऽपि तत्फलप्रकाशनं विभावना ॥ यथा—**

---

### सङ्केतः

**हेतुरूपेति** । हेतवोऽपि क्रियामुखेन[1] कार्यं कुर्वन्तीति सा क्रियैव अव्यवहितो हेतुः । 'कार्यं क्रियायाः फलम्' इति वैयाकरणा एव मन्यन्ते, नान्ये । **फलेति** । कार्यस्य कविना प्रतिपादनम्, न तु भवनम् । हेतुं विना कार्योत्पत्त्यसम्भवात् । अत्र प्रसिद्धतरहेत्वनुपलब्धेः[2] हेत्वभावः इति, अप्रसिद्धस्तु हेतुः वस्तुतः अस्त्येव । अत एव **विशिष्टतया** प्रसिद्धतरहेत्वनुपलब्धिरूपया कार्यस्य **भावना** पर्यालोचना विभावना । हेतुनिषेधेन च इह उपक्रान्तत्वात् बलवता कार्यमेव बाध्यत्वेन प्रतीयते, न तु तेन[3] हेतुनिषेधः इति, अन्योन्यबाधकत्वानुप्राणितात् विरोधालङ्कारात् भेदः । हेतुनिषेधबाधप्रतीतिस्तु ज्ञप्त्यपेक्षा । ज्ञप्तिस्तु उत्पत्त्यपेक्षया अत्र नासन्ना इति न विभावनाप्रयोजिका ॥

### मधुमती

क्रियायाः इतीदं व्याचष्टे—**हेत्विति** । तथाच क्रियापदं हेतुपरम् । यत्तु क्रियापदं कारकव्यापारपरम्, तदपि भङ्ग्या हेतावेव पर्यवसन्नम् ।

---

1 'मुखेण'–ग. 2 'लब्धिः'–घ. 3 तु तेन इति नास्ति–ग.

कुसुमितलताभिरहताऽप्यधत्त
रुजमलिकुलैरदष्टाऽपि ।
परिपर्तते स्म नलिनी-
लहरीभिरलोलिताऽप्यघूर्णत सा ॥ ४७६ ॥

इति विभावनालङ्कारः [1]

---

## सङ्केतः

अयं भावः—यथा कार्यं भवदेव [2] हेतुनिषेधेन बाध्यत इति, भवति तत्र भवनापेक्षो बाधः । तथा न भवन्नेव हेतुनिषेधः कार्योद्भवनेनापि बाध्यते, किन्तु भूतस्य तस्य बाधः तया ज्ञाप्यते इति हेतुनिषेधबाधः ज्ञप्त्यपेक्ष एवेति, ज्ञप्तिर्भवनापेक्षया पश्चाद्भावित्वेन अनासन्नेति । यद्वा सामान्येन मिथो बाधे सत्यपि हेतुफलभावविशेषेण अस्याः विरोधाद्भेदः ॥

कुसुमितेति । अत्र नलिनी अब्जिनी पद्मिन्याख्या स्त्री च । तथा घातादिहेत्वभावेऽपि रुगादिकार्यं उक्तम् । तत्र वियोगित्वं कारणं

## मधुमती

कुसुमितेति । नलिनी नदी ।

'नलिनीनिगूढ[3]सलिला च यत्र सा [4] ।'

इति माघकाव्यप्रयोगात् । शेषं प्रतीतम् ॥ इति विभावना ॥

---

1 विभावना विनाऽपि स्यात् कारणं कार्यजन्म चेत् । अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता । अस्त्रैरतीक्ष्णकठिनैः जगज्जयति मन्मथः ॥ कार्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके । नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः ॥ अकारणात् कार्यजन्म चतुर्थी स्याद्विभावना । शङ्खाद्वीणानिनादोऽयं उदेति महदद्भुतम् ॥ विरुद्धात् कार्यसम्पत्तिः दृष्टा काचिद्विभावना । शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम् ॥ कार्यात् कारणजन्मापि दृष्टा काचिद्विभावना यशःपयोराशिरभूत् करकल्पतरोस्तव ॥ 2 'कार्यं भवो भव'–ग. 3 'निरूढ'–च. 4 'यद्रसा'–ज.

## २०. विशेषोक्त्यलङ्कारः

**विशेषोक्तिरखण्डेषु**
**कारणेषु फलावचः ।**

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः। सा अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च। क्रमेणोदाहरणम्—

---

### सङ्केतः

गम्यम् । अतः अनुक्तनिमित्तेयम् ।

उक्तनिमित्ताऽप्येषा । यथा—

"असम्भृतं मण्डनमङ्गयष्टेः
अनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साऽथ वयः प्रपेदे ॥"

इति । अत्र यौवनं निमित्तम् । मदस्य मत्तता–हर्षवाचकत्वात् द्वैविध्येऽपि अतिशयोक्त्या ह्यभेदः । अतिशयोक्त्यनुप्राणिता चैषा विभावना ज्ञेया । "एकगुणहानौ विशेषोक्तिः" इति एके वामनीयाः ॥ आरोपितवैशिष्ट्यं रूपकमेवान्ये इमां मन्यन्ते ॥ इति विभावना ॥

एतद्विपर्यये विशेषोक्तिरिति तामाह—**विशेषोक्तिरिति** ।

### मधुमती

**मिलितेषु** इति **अखण्डेषु** इत्यस्य व्याख्यानम् । तथाच **कारण**-सम्पत्त्यभिधानेऽपि **कार्या**नभिधानं **विशेषोक्तिः** इत्यर्थः ॥

विभजते—**अनुक्तनिमित्तेति** । न च **अचिन्त्यनिमित्तायाः अनुक्तनिमित्ताया**मेवान्तर्भावः, अनभिधानस्य तुल्यत्वात् इति वाच्यम् ।

निद्रानिवृत्तावुदिते द्युरत्ने
सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषपदे भुजङ्गे
चचाल नालिङ्गनतोऽङ्गना सा ॥ ४७७ ॥

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ४७८ ॥

---

## सङ्केतः

**निद्रेति** । द्युरत्नं रविः । भुजङ्गः पतिः । अत्र निद्रानिवृत्त्यादि-हेतुसामग्र्ये सत्यपि आश्लेषत्यागरूपकार्यस्य अवचः । प्रियस्वप्नसमागमादि-हेतुः[1] गम्यः ॥

**कर्पूर इति** । अत्र दाहरूपे सत्यपि कारणे शक्तिरूपविरुद्धधर्मेण अशक्ताख्यकार्यानुक्तिः । तत्र अवार्यवीर्यत्वं हेतुः साक्षादुक्तः ॥

## मधुमती

विशेषतो हेतुज्ञानेऽपि विवक्षावशात् अनभिधानं अनुक्तनिमित्तायाम्, विशेषतो हेत्वज्ञानात् अनभिधानं अचिन्त्यनिमित्तायां इति भेदात् ।

अत्र उदाहरणत्रये—प्रथमे अनुक्तनिमित्तत्वम् । द्वितीये तु उक्त-निमित्तत्वम्, अवार्यवीर्यत्वस्यैव हेतोः उपादानात् । तृतीये अचिन्त्य-निमित्तत्वं इति द्रष्टव्यम् ॥ इति विशेषोक्तिः ॥

---

1 'प्रियानुरागो'–ग.

स एकः त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शम्भुना न हृतं बलम् ॥ ४७९ ॥

इति विशेषोक्त्यलङ्कारः[1]

---

## सङ्केतः

हरताऽऽपीति । अत्र तनुहरणस्य हेतोः फलं **बलहरणं** परं नोक्तम् । निमित्तं चात्र[2] प्रतीत्यगोचरत्वात् अचिन्त्यम् ।

'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः'

इति यत् अन्यैः अस्याः लक्षणं कृतम्, सा अस्मन्मते रूपकभेद एव यथा—

'वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यां
अतैलदीपाः सुरतप्रदीपाः ॥'

इति । अस्यामपि फलाभावः कारणसत्तामेव बाधते । अत एव मिथोबाधजीवितात् विरोधात् भिद्यते ॥ इति विशेषोक्तिः ॥

---

1 कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि ॥ (कु) 2 'निमित्तं वा'–घ.

## २१. यथासङ्ख्यालङ्कारः

**यथासंख्यं क्रमेणैव**
**क्रमिकाणां समन्वयः ॥१०८॥**

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव ! द्विषां[1] च विदुषां च मृगीदृशां च ।
तापं च सम्मदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ४८० ॥

इति यथासङ्ख्यालङ्कारः[2]

---

### सङ्केतः

**यथासङ्ख्यमिति** । सङ्ख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वये यथार्थं यथासङ्ख्यं—यथाक्रमम्[3] । क्रमः इति यावत् । क्रमिकाः क्रमवन्तः । बहुवचनं अतन्त्रम् । तेन द्वयोरप्यर्थयोः यथासङ्ख्यं भवति ।

**एक इति** । अत्र **शौर्योष्म-विनय-लीलाः** वर्ण्यत्वेन उद्दिष्टाः । तासां यथाक्रमं **देवद्विट्-विद्वन्-मृगदृशां** अनुनिर्देशाः[4] । एकस्त्रिधेतिवाक्यात्

### मधुमती

**यथासङ्ख्यमिति** । **क्रमिकाणां** उद्देशिनां अनुद्देशिनां च[5] **क्रमेण** अयुगपत् **समन्वयः** इत्यर्थः ।

---

1 'देवद्विषां'–क. 2 यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥ (कु) 3 यथाक्रमं इति नास्ति–ग 4 'निर्देशः'–ग. 5 अनुद्देशिनां इति नास्ति–च.

## २२. अर्थान्तरन्यासालङ्कारः

**सामान्यं वा विशेषो वा**
**तदन्येन समर्थ्यते ।**
**यत्र[1] सोऽर्थान्तरन्यासः**
**साधर्म्येणेतरेण वा ॥१०९॥**

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते, विशेषो वा सामान्येन, सः अर्थान्तरन्यासः ॥

क्रमेणोदाहरणम्—

---

### सङ्केतः

व्यङ्ग्यः विरोधोऽपि । इदं क्रमिकवचनानां असमस्तत्वात् सम्बन्धस्य अतिरोहिततया[2] शाब्दम् । यत्र तु क्रमिकाणां समासः क्रियते तत्र अर्थानुगमालोचनेन अन्वयवगतक्रमसंबन्धप्रतीतौ आर्थत्वम् । तच्च स्वयमूह्यम् ॥ इति यथासङ्ख्यम् ॥

तदन्येनेति । विशेषेण सामान्येन वा इत्यर्थः । अर्थान्तरस्यैव[3] विजातीयस्यैव[4] वस्तुनः न्यासः अर्थान्तरन्यासः इति व्युत्पत्त्या इति

### मधुमती

यद्यपि—' अकलिततपस्तेजोर्वीर्ये'त्यादौ क्रमव्युत्क्रमस्य भग्नप्रक्रमत्वाभिधानात्[5] तदभावरूपोऽयं न अलङ्कारतामर्हति । तथापि—एकत्र तथाविधनाना[6]क्रमोपादाने वैचित्र्यानुभवात् अलङ्कारमध्ये गणितोऽयम्, परिकरालङ्कारवत् इति द्रष्टव्यम् ॥ इति यथासङ्ख्यम् ॥

सामान्यं वेति । सामान्यं सामान्यमुखाभिधानम्, विशेषः

---

1 ' यत्तु '–ख.　2 ' हितत्वे '–ग.　3 ' स्यैव '–घ.　4 ' स्यैव '–घ.
5 ' त्यादौ क्रमव्युत्क्रमात् '–ज.　6 ' तथाविधानां '–ज.

निजदोषावृतमनसां
अतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः
शशिशुभ्रं शङ्खमपि पीतम् ॥ ४८१ ॥

सुसितवदनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ? ॥४८२॥

---

## सङ्केतः

प्रतीयते । यत्—अत्र हेतोः हेतुमता सह व्याप्तिः गूढा, न तु स्पष्टा, कथञ्चित् प्रत्येया इत्यर्थः ॥

निजेति । अत्र एवशब्दः अप्यर्थः, व्यस्तसम्बन्धो वा । अत्र आद्येऽर्धे सामान्यं उत्तरार्धोपात्तविशेषेण समर्थितम् ॥

सुसितेति । महश्शब्दः उत्सवार्थः । क्व नासि इत्यादि सामान्यं विशेषरूपस्य समर्थकम् ॥

## मधुमती

विशेषमुखाभिधानम्, न तु सामान्यविशेषभावः स्वरूपसन्नेव प्रयोजकः । दृष्टान्तालङ्कारे तु—सामान्यं सामान्येन विशेषो विशेषेण च समर्थ्यते इति[1] ततोऽस्य भेदः ॥

निजेति । अत्र विशेषेण साधर्म्यतः[2] सामान्यसमर्थनम् ॥

सुसितेति । अत्र सामान्येन साधर्म्यतः विशेषसमर्थनम् ॥

---

1 'विशेषेण साधर्म्यादिति'—च. 'विशेषेण सामर्थ्यादिति'—ज. 2 'विशेषेण सामर्थ्यात्'—ज.

गुणानामेव दौरात्म्यात् धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः[1] ॥ ४८३ ॥

अहो ! हि मे बह्वपराद्धमायुषा
यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः[2] पराभवं
जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥ ४८४ ॥

इति अर्थान्तरन्यासालङ्कारः[3]

---

## सङ्केतः

गुणानामिति । गलिः कार्याकुशलो वृषः । अत्र **गुणानां** इति सामान्यम्, **गौर्गली** इति वैधर्म्यरूपो विशेषः । **दौरात्म्यात्** इति नियोजने हेतुः । वैधर्म्यविशेषस्तु पूर्वार्धार्थसमर्थने हेतुः ॥

**अहो इति** । मे इति विशेषः, त एव इति सामान्यम् । तयोः समर्थ्यसमर्थकभावः । **अप्रियं वाच्यं इति** । सुहृदं प्रतीति शेषः । अत्र **अपराद्धं** इति वचनात् अधन्यत्वाक्षेपः । तद्विरुद्धं धन्यत्वमिति वैधर्म्यम् । 'एतत्तस्य मुखात्' इत्यादौ अप्रस्तुतप्रशंसायां जडादि[4]वृत्तान्तेन विशेषेण वाच्येन सामान्यं गम्यं[5] समर्थ्यते । अत्र तु—सामान्यविशेषयोः द्वयोरपि वाच्यत्वं इति विवेकः । यद्वा—अन्योक्तौ विशेषः न सामान्यसमर्थनाशयेनोच्यते, किन्तु अन्यथा इति । तथा अत्र हिशब्दः क्वचित् प्रयुज्यते, क्वचिन्न । समर्थकस्य कदाचित् पूर्वं पश्चाद्वा उपन्यासः ॥ इत्यर्थान्तरन्यासः ॥

## मधुमती

**गुणानामिति** । अत्र विशेषेण वैधर्म्यतः सामान्य[6]समर्थनम् ॥

**अहो इति** । अत्र सामान्येन वैधर्म्यतः विशेषसमर्थनमिति ध्येयम् ॥ इत्यर्थान्तरन्यासः ॥

---

1 'गौर्गली'–क. 2 'सुहृदां'–क. 3 उक्तिरर्थान्तरन्यासः स्यात् सामान्यविशेषयोः । हनूमानब्धिमतरत्, दुष्करं किं महात्मनाम् ? ॥ गुणवद्वस्तुसंसर्गात् याति स्वल्पोऽपि गौरवम् । पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ (कु) 4 'जरादि'–ग. 5 गम्यं इति नास्ति–ग. 6 'तः विशेष'–ज.

## २३. विरोधालङ्कारः

विरोधः सोऽविरोधेऽपि
विरुद्धत्वेन यद्वचः ।

वस्तुवृत्तेन अविरोधेऽपि विरुद्धयोरिव यत् अभिधानं स विरोधः ॥

जातिश्चतुर्भिः जात्याद्यैः
विरुद्धा स्यात् गुणैस्त्रिभिः ॥११०॥
क्रिया द्वाभ्यामथ द्रव्यं
द्रव्येणैवेति ते दश ॥

---

### सङ्केतः

अविरोधेऽपीति । अविरोधे विरोधो न स्यादिति स्थिते, यत् विरोधेनोक्तिः, सैव अनुपपद्यमाना विरोधाभासे पर्यवस्यति । यत— 'नित्यमेव द्रव्याश्रितत्वात् जातेः न जातिद्रव्ययोः विरोधः' इति ब्रुवन् रुद्रटः नवभेदं [1] मन्यते, तत् वार्तम् । जातेः गुणाद्याश्रितत्वस्यापि भावात् ॥

### मधुमती

विरुद्धयोरिति । तथाच विरोधप्रतिभानप्रयोजकरूपेणाभिधानम्, तेन आपाततो विरोधज्ञानमिति [2] लभ्यते । अयमेव विरोधाभासः ॥

विभजते—जातिरिति ॥

---

1 'नवभेदी'–ग. 2 'विरुद्धमिति ज्ञानेन'–च.

अभिनवनलिनीकिसलय-
मृणालवलयादि दवदहनराशिः ।
सुभग ! कुरङ्गदृशोऽस्याः
विधिवशतः त्वद्वियोगपविपाते ॥ ४८५ ॥

गिरयोप्यनुन्नतियुजः
मरुदप्यबलो[1]ब्धयोऽप्यगम्भीराः ।
विश्वम्भराऽप्यतिलघुः
नरनाथ ! तवान्तिके नियतम् ॥ ४८६ ॥

---

## सङ्केतः

**अभिनवेति** । पविः वज्रम् । अत्र **नलिनी**त्वादिजातीनां **दवदहन**त्वजातेश्च वियोगवशात् विरोधः परिहृतः ॥

**गिरयोऽपीति** । **बलं** जवोऽपि । अत्र त्वमेव महान् सैन्यवान्[2] गम्भीरः विस्तीर्णश्च इति भावः । अत्र **गिरित्व-मरुत्त्वादि**जातीनां क्रमेण लघुत्वपर्यायानुन्नति-अबलपर्यायमन्दत्व-आगम्भीर्य-अतिलघुत्वरूपैः गुणैः सह विरोधः ।

## मधुमती

**अभिनवेति** । अत्र आपाततः **नलिनी**दलत्वजातेः **दवदहन**त्व-जात्या विरोधप्रतिभासेऽपि सन्तापकारित्वलक्षणसाधर्म्यपुरस्कारेण रूपकालङ्कार-प्रतीतौ आभासत्वम् ॥

**गिरयः इति** । अत्र **अनुन्नति-अबल-अगम्भीर**पदेषु अल्पार्थे नञ् । तेन अल्पोन्नतत्व-अल्पबलत्व[3]-अल्पगम्भीरत्वरूपाः गुणाः लभ्यन्ते, **विश्वम्भराऽप्यतिलघुः** इति साहचर्यात् । न तु अभावार्थे नञ्,

---

1 'प्यचलो'–क.  2 'त्वमेव बलवान्'–ग.  3 'चलत्व'–ज.

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधरः
तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां सङ्गरसङ्गसक्तमनसां राज्ञां त्वया भूपते !
पांसूनां पटलैः प्रसाधनविधिः निर्वर्त्यते कौतुकम् ॥४८७॥

सृजति च जगदिदं अवति च
संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरः
जनार्दनः सोऽपि चित्रमिदम् ॥ ४८८ ॥

---

### सङ्केतः

**येषामिति** । **धाराधरः** असिः । **स्नेहः** रुधिरार्द्रत्वमपि । अत्र **पांसुत्व**[1]जाति-मण्डनक्रिये विरुद्धे ॥

**सृजतीति** । अत्र शफरत्वजातेः जनार्दनद्रव्यस्य च विरोधः ॥

### मधुमती

गुणविरोधोदाहरणत्वविरोधात् । अत्र—गिरित्वादिजाति—अल्पोन्नतत्वादिगुणयोश्च आपाततो विरोधप्रतिसन्धानेऽपि वर्णनीयगतौन्नत्याद्यपेक्षया अल्पत्वप्रतीतौ आभासत्वम् ॥

**येषामिति** । अत्र **तीक्ष्णत्वजातेः अनुरञ्जन-स्नेहप्राप्ति**[2]क्रिययोः आपाततो विरोधप्रतिसन्धानेऽपि लौहित्यमसृणताप्राप्तिरूपार्थप्रतीतौ आभासत्वम्॥

**सृजतीति** । अत्र मत्स्यत्वजातेः **जनार्दनलक्षणद्रव्येण** विरोधोऽपि आपाततो भासमानः एव, मीनशरीरप्रतीतौ तस्या आभासत्वात् । जनार्दनपदं च अशरीरिपरमेश्वरपरम् । अन्यथा शरीरभेदेन जनार्दनत्वजातिसम्भवात्, जातिद्वयविरोधोदाहरणवैरस्यात् । जातिद्वयविरोधस्य अत्र अविवक्षितत्वाच्च ॥

---

1 'पांशुत्व'–ग. 2 'स्नेहप्रति'–च.

सततं मुसलासक्ता [1]
बहुतरगृहकर्मघटनया नृपते !
द्विजपत्नीनां कठिनाः
सति भवति कराः सरोजसुकुमाराः ॥ ४८९ ॥

पेशलमपि खलवचनं
दहतितरां मानसं सुतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं
मलयजरसवत् प्रमोदयति ॥ ४९० ॥

---

## सङ्केतः

**सततमिति** । अत्र काठिन्य[2]-सौकुमार्यगुणौ विरुद्धौ ॥

**पेशलमिति** । अत्र पेशलत्व-परुषत्वगुणौ दहन-प्रमोदक्रियाभ्यां सह विरुद्धौ ॥

## मधुमती

**सततमिति** । अत्र काठिन्य-सौकुमार्यगुणयोः आपाततो विरोध-प्रतिसन्धानेऽपि [3] कालभेदप्रतिसन्धानात् आभासत्वम् ॥

**पेशलमपीति** । अत्र पेशलतागुणस्य दाहक्रियया, परुषत्वगुणस्य मोदन[4]क्रियया च द्राग्विरोध[5]प्रतिसन्धानेऽपि ; पेशलपदस्य आपातमधुर-परतायाम्, दाहपदस्य आपाततः सन्तापजनकत्वपरतायाम् ; एवं परुषपदस्य आपातविरसता[6]परतायाम्, प्रमोदपदस्य पर्यवसानेहितपरतायां च निश्चितायां आभासत्वम् ॥

---

1 'लासङ्गात्'–क. 2 'काठिण्य'–ग. 3 'प्रतिभासेऽपि'–च.
4 'गुणस्य भेद'–ज. 5 'द्रागविरोध'–च. 6 'क्षतिविरसता'–च.

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ
यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः
स भार्गवः सत्यमपूर्वसर्गः ॥ ४९१ ॥

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन् अनुभवपदं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनः
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते[1] ॥४९२॥

---

## सङ्केतः

यन्मार्गणेति । यन्मार्गणा[2] एव अनर्गलः शातपातः[3] शातः पविः । अत्र दृढत्वरूपगुण-अम्भोजदलरूपद्रव्ययोः विरोधः ॥

परीति । जडयति शीतलयति मोहयति च । तापः खेदोऽपि । अत्र जडीकरण-तापकरणरूपे क्रिये विरुद्धे । वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन विरोधः परिह्रियते ॥

## मधुमती

क्रौञ्चाद्रीति । अत्र क्रौञ्चाद्रेः द्रव्यस्य मृदुत्वलक्षणगुणेन विरोधः द्राक् प्रतीतोऽपि भार्गवप्रभावातिशयसुखवेद्यत्वपरतायां आभासत्वम् ॥

परिच्छेदेति । अत्र जडीकरणतापनक्रिययोः आपाततो विरोध-बुद्धावपि, जडीकरणपदस्य निष्क्रियत्वपरतायां आभासत्वम् ॥

---

1 'तनुते'–ख. 2 'यन्मार्गणः'–घ. 3 शातपातः इति नास्ति–ग.

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिः तृष्णातरलित[1]मनोभिः जलनिधिः ।
क एवं[2] जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ? ॥४९३॥

समदमतङ्गजमदजल-
निष्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितलतिलक ! त्वयि तटजुषि
शङ्करचूडा[3]ऽऽपगाऽपि कालिन्दी ॥ ४९४ ॥

इति विरोधालङ्कारः[4]

---

## सङ्केतः

**अयमिति** । अत्र जलधिः पीतः इति द्रव्यक्रिये विरुद्धे । विरोधश्च मुनिप्रभावेण समाधीयते ॥

**समदेति** । अत्र गङ्गा-यमुनारूपद्रव्ययोर्विरोधः 'गङ्गा यमुना जाता' इतिरूपेण, न तु नदीत्वजातेः; विविक्तविषयत्वेन विरोधस्य दर्शनात् ।

## मधुमती

**अयमिति** । अत्र समुद्रलक्षणद्रव्यस्य पानक्रियया विरोधः द्राक् प्रतीतोऽपि, अगस्त्यतपःप्रभावातिशयपरामर्शात् निवर्तते ॥

**समदेति** । अत्र तद्देशे द्रव्ययोः गङ्गायमुनयोः विरोधे द्राक् प्रतीतेऽपि, कालिन्दीपदस्य श्यामजलपरतायां आभासत्वम् ॥ इति विरोधः ॥

---

1 'कवलित'–ख. 2 'इदं को'–ख. 3 'जूटा'–क. 4 आभासत्वे विरोधस्य विरोधाभास इष्यते । विनाऽपि तन्वि ! हारेण वक्षोजौ तव हारिणौ ॥ (कु)

## २४. स्वभावोक्त्यलङ्कारः

**स्वभावोक्तिस्तु डिम्भादेः**
**स्वक्रियारूपवर्णनम् ॥१११॥**

**स्वयोः—तदेकाश्रययोः । रूपं-वर्णः संस्थानं च[1] ॥ उदाहरणम्—**

---

### सङ्केतः

'कुपतिमपि कलत्रवल्लभम्' इत्यादौ श्लेषगर्भत्वे सङ्करः इति कश्चित् । उद्भटस्तु—श्लेषगर्भत्वे विरोधप्रतिभोत्पत्तिहेतुं श्लेषमाह । श्लेषवशादेव लब्धात्मभावत्वा[2]द्विरोधस्य न श्लेषेण सह सङ्करः । "स्वस्वहेतोः लब्धात्मभावानां[3] अलङ्काराणां मिश्रत्वे सङ्करः" इति सङ्करलक्षणात् ॥ एकविषयत्वे विरोधः, भिन्नविषयत्वे तु असङ्गत्याख्यः[4] अलङ्कारः इति ॥ इति विरोधः ॥

**स्वभावोक्तिरिति** । इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः । तथात्वे[5] सर्वमेव हि काव्यं अलङ्कारः स्यात् । तस्मात् वस्तुनः सामान्यस्वभावः लौकिकोऽर्थः अलङ्कार्यः,[6] कविप्रतिभागोचरस्य तु अत एव तन्निमित्तस्यैव[7] वस्तुस्वभावस्योक्तिः अलङ्कारः इति ध्येयम् ॥ **स्वयोः** स्वकीययोः क्रियारूपयोः । **क्रिया** व्यापारः । **संस्थानं** स्वाभाविकं रूपम् ॥

### मधुमती

**तदेकाश्रययोः डिम्भाद्याश्रययोः** । रूपपदं व्याचष्टे—**रूपमिति** । तथाच—डिम्भाद्याश्रितजातिनियतधर्माभिधानं इति पर्यवसितार्थः । एवं

---

1 'नं वा'-क. 2 'त्मलाभत्वा'-ग. 3 'त्मलाभानां'-ग.
4 'त्याद्यः'-घ. 5 'तत्त्वे'-ग. 6 'अलङ्कारः'-घ. 7 'स्येव'-ग.

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चैः
आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां[1] विधूय ।
घासग्रासाभिलाषात् अनवरतचलत्प्रोथ[2]तुण्डः तुरङ्गः
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥
॥ ४९५ ॥

इति स्वभावोक्त्यलङ्कारः[3]

---

## सङ्केतः

**पश्चादिति** । **द्राघयित्वा** दीर्घीकृत्य । **प्रोथः** अश्वस्य मुखाग्रम् । **तुण्डं** मुखम् । अत्र **धूलिधूम्रा** इति वर्णस्योक्तिः । शेषं **अङ्घ्रिप्रसारण-अङ्गदीर्घीकरणा**दिकं तु क्रियासंस्थानोक्तिः[4] ॥ इति स्वभावोक्तिः ॥

## मधुमती

च--यस्य स्वाभाविकधर्माभिधाने[5] चमत्कारः, तत् अलङ्कारः । अत एव—

'गोरपत्यं बलीवर्दः तृणान्यत्ति मुखेन तु ।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् ॥'

इत्यादौ नायमलङ्कारः । सर्वथा चमत्काराभावात् । अत एव—'घासग्रासाभिलाषात्' इत्युदाहृते केवलं तत्तद्व्यापारोपादाने न चमत्कारानुभवः इति ॥ इति स्वभावोक्तिः ॥

---

1 'जटां धूलिधूम्रो'–क. 2 'प्रोत्थ'–ख. 3 स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् । कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यते ॥ (कु). 4 सन्धानोक्तिः इति नास्ति–घ. 5 'यद्धर्माभिधानेऽपि'ग.

## २५. व्याजस्तुत्यलङ्कारः

**व्याजस्तुतिः मुखे निन्दा**
**स्तुतिर्वा रूढिरन्यथा ।**

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्—

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये[1] न मौलिः परः
लज्जावर्जन[2]मन्तरेण न रमामन्यत्र संदृश्यते[3] ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्यत्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥४९६॥

### सङ्केतः

**मुखे निन्देति** । श्रौती निन्दा, स्तुतिस्तु निर्वाहगा इत्येको भेदः । एतद्वैपरीत्ये तु द्वितीयो भेदः इत्याह—**व्याजरूपेति** । व्याजरूपा निन्दाद्वारिका । **व्याजेनेति** । वस्तुवृत्त्या निन्दैवेत्यर्थः ॥

**हित्वेति** । लज्जायाः मज्जनं ब्रुडनम्[4] । निर्लज्जत्वमित्यर्थः ।

### मधुमती

**व्याजस्तुतिरिति** । **रूढिः** पर्यवसानम् । तथाच **निन्दामुखेन स्तुति**पर्यवसानम् । स्तुतिमुखेन निन्दापर्यवसानं इत्यर्थः । पदव्युत्पत्तिं दर्शयन्नेव उभयसाधारणं रूपमाह—**व्याजरूपेति** । तथाच उपक्रान्तविपरीतपर्यवसानमित्यर्थः ॥

**हित्वेति** । **त्वां हित्वा उपरोधवन्ध्यमनसां** निरनुरोधानां[5] **अन्यः न मौलिः, लज्जामज्जनं** निर्लज्जत्वं च **रमामन्तरेण** लक्ष्मीं विना **अन्यत्र न दृश्यते** इत्यन्वयः । उभयस्य उभयरूपत्वे हेतुमाह—**यस्त्यागमिति** । तथाच—**आश्रितपरित्यागेन** तव निरनुरोधत्वम्,

1 'मनसामन्यो'–क. 2 'मज्जन'–क. 3 'संलक्ष्यते'–ख.
4 'ब्रुडनं'–ग. 5 'निरर्थनिरोधानां'–च.

हे ! हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ४९७ ॥

इति व्याजस्तुत्यलङ्कारः [1]

———

## सङ्केतः

हे नृप ! त्वद्विधः निर्दाक्षिण्यः, लक्ष्मीतुल्यं निर्लज्जं च किमपि वस्तु नास्तीति भावः ॥

**हे ! हेलेति ।** अत्र विपरीतलक्षणया वाच्याद्व्यत्यस्ता[2] प्रतीतिः । अत्र अप्रस्तुतप्रशंसासद्भावेऽपि न सङ्करत्वम् । व्याजस्तुत्यप्रस्तुतप्रशंसयोः उत्कटतया भेदेन प्रतिभासात् । उत्कटताभेदे हि स स्यात् । तर्हि संसृष्टिरिति चेन्न । अन्योन्योपकार्योपकारकत्वेन मिथो नैरपेक्ष्याभावात् । तथाच मणियुक्तहारवत् एक एवायं प्रकृतोऽलङ्कारः इति भावः ॥ इति व्याजस्तुतिः ॥

## मधुमती

त्यागानन्तरमपि त्वदाश्रयणेन लक्ष्म्याः निर्लज्जत्वं चेत्यर्थः ॥

**हे ! हेलेति ।** **हेलाजितबोधिसत्व**=परमकारुणिक ! इत्यर्थः । बुद्धस्य परमकारुणिकत्वादिति भावः ॥ इति व्याजस्तुतिः ॥

---

1 उक्तिर्व्याजस्तुतिः निन्दास्तुतिभ्यां स्तुतिनिन्दयोः । कः स्वर्धुनि ! विवेकस्ते पापिनो नयसे दिवम् ॥ साधु दूति ! पुनः साधु कर्तव्यं किमतः परम् ? । यन्मदर्थे विलूनाऽसि दन्तैरपि नखैरपि ॥ (कु) 2 'व्यत्यस्ता'–घ.

## २६. सहोक्त्यलङ्कारः

**सा सहोक्तिः सहार्थस्य**
**बलादेकं द्विवाचकम् ॥११२॥**

एकार्थाभिधायकमपि सहार्थबलात् यत् उभयस्याव[1]-गमकं सा सहोक्तिः । यथा—

सह दिअहणिसाहिं दीहरा सासदण्डा
सह मणिवलयेहिं बाहधारा गलन्ति ।
तुह सुहअ! विओए तीअ उव्विग्गिरीए[2]
सह अ तणुणदाए दुब्बला जीविदासा ॥४९८॥

---

### सङ्केतः

उव्विग्गिरीए इति । उद्वेजनशीलायाः इत्यर्थः । सहोक्तौ द्वयोरपि प्रकृतयोः अप्रकृतयोर्वा ग्रहणात् काल्पनिकं औपम्यम् । तत्र तृतीयान्तस्य गुणभावात् उपमानत्वम्; शेषस्य प्राधान्यात् उपमेयत्वम् । इयं मालया सहोक्तिः । केवलसहोक्तिस्तु—

'वसन्ते पल्लवैस्सार्धं रागोल्लासी जनो भवेत् ।'

इत्यादि । नियमेन कार्यकारणनियमविपर्ययरूपाभेदाध्यवसायरूपातिशयोक्ति-

### मधुमती

एकार्थेति । समुच्चये उभयोः प्राधान्येनान्वयः, अत्र तु एकस्य अप्राधान्येनेति विशेषः ॥ इति सहोक्तिः ॥

---

1 'स्याप्यव'–क. 2 'उव्वेविरीए'–ख.

[सह दिवसनिशाभिः दीर्घाः श्वासदण्डाः
सह मणिवलयैः बाष्पधारा गलन्ति ।
तव सुभग! वियोगे तस्याः उद्विग्नायाः
सह च तनुलतया दुर्बला जीविताशा ॥]

अत्र श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् । दिवसनिशाऽऽदिगतं तु सहार्थसामर्थ्यात् प्रतिपद्यते ॥

इति सहोक्त्यलङ्कारः [1]

---

## सङ्केतः

मूलत्वं अस्याः । यथा प्रतीयमानोपमात्वेऽपि तत्त्वारोपादिरूपविशेषभावात् रूपकाद्यलङ्काराः उपमातो भेदेनोक्ताः, तथा इयमपि सहार्थसामर्थ्यावसित-साम्ययोगरूप[2]विशेषात् तस्याः पृथगुक्ता । उपमारूपं व्यङ्ग्यं तु न चमत्कारि । रूपकादिषु गुणीभूततत्त्वारोपादिना अभिधीयमानस्यैवार्थस्य[3] चमत्कारित्वात् ॥ इति सहोक्तिः ॥

---

1 सहोक्तिः सहभावश्चेत् भासते जनरञ्जनः । दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ॥ (कु) 2 'साम्यरूप'–ग. 3 'व्यङ्ग्यं तु रूपकादिषु गुणीभूतं तत्त्वारोपाद्यर्थस्यैव'–ग.

## २७. विनोक्त्यलङ्कारः

**विनोक्तिः सा विनाऽन्येन**
**यत्रान्योऽसन्नथेतरः**[1] ॥

**क्वचित् अशोभनः, क्वचित् शोभनः । क्रमेणोदाहरणम्—**

**अरुचिः निशया विना शशी-**
**शशिना साऽपि विना महत्तमः ।**
**उभयेन विना मनोभव-**
**स्फुरितं नैव चकास्ति कामिनोः ॥ ४९९ ॥**

---

### सङ्केतः

**यत्रान्य इति** । सन् शोभनः, इतरः अशोभनः, इति सूत्रापेक्षया व्याख्येयम् । क्वचित्तु 'यत्रान्योऽसन्नथेतरः' इति पाठः । तदपेक्षया क्वचिद्वृत्तौ अशोभनः शोभनः इति व्याख्यातमस्ति ।

**अरुचिरिति** । रुचिरहितः अशोभनः इत्यर्थः ।

### मधुमती

**विनोक्तिरिति** । **अन्येन विना यत्र अन्यः सन्**=असन्नित्यर्थः । तथा **नेतरः**, इतरपदेन सन्निधानात् असदभिधीयते । तथाच सन्नित्यर्थः । पर्यवसितार्थमाह —**क्वचिदिति** । उक्तोदाहरणयोः प्रथमे असन्, द्वितीये तु सन् इति द्रष्टव्यम् ॥ इति विनोक्तिः ॥

---

1 'न्यःसन्न नेतरः'–ख.

' मृगलोचनया विना विचित्र-
व्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं
सुहृदा तेन विना नरेन्द्रसूनुः ॥ ५०० ॥

इति विनोक्त्यलङ्कारः[1]

---

## सङ्केतः

मृगेति । तया हि प्राग्मोहितः किमपि नाज्ञासीत् । सुहृदेति । कूटमित्रं हि तस्यासीत् ॥

विनाशब्दं विनाऽपि विनार्थविवक्षा दृश्यते, यथा सहोक्तौ सहार्थ-विवक्षा । तेन—

निरर्थकं जन्म गतं नलिन्याः
यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन ॥

इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनः अशोभनत्वप्रतीतेः ॥

अत्र 'अरुचिर्निशया' इत्युदाहरणं मिथो विनोक्तिभङ्ग्योक्तम् । द्वितीयं तु एकमेव[2] । यद्वा—एकत्र अशोभनत्वम्, अपरत्र शोभनत्वम् । विनोक्तिकृतवैचित्र्याभावात्, शब्दमात्रयोगेन अलङ्कारकथने 'हा धिगा'द्युक्ता-वपि अलङ्कारत्वप्राप्तेश्च, विनोक्त्यलङ्कारं न मन्यन्तेऽन्ये । सहार्थबलात् साम्यप्रतीतेः सहोक्तिस्तु युक्तैवेति ॥ इति विनोक्तिः ॥

---

1 विनोक्तिश्चेत् विना किञ्चित् प्रस्तुतं हीनमुच्यते । विद्या हृद्याऽपि साऽवद्या विना विनयसम्पदम् ॥ तच्चेत् किञ्चिद्विना रम्यं विनोक्तिः साऽपि कथ्यते । विना खलैः विभात्येषा राजेन्द्र ! भवतः सभा ॥ (कु) 2 'एवमेव'—ज.

## २८. परिवृत्त्यलङ्कारः

**परिवृत्तिर्विनिमयः**
**योऽर्थानां स्यात् समासमैः ॥११३॥**

परिवृत्तिः अलङ्कारः । उदाहरणम्—

लतानामेतासां उदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानां अहह! दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥५०१॥

अत्र[1] प्रथमेऽर्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य ॥

---

### सङ्केतः

**अर्थानामिति** । अर्थ्यन्ते अमी इति व्युत्पत्त्या **अर्थाः** उपादेयाः । बहुवचनमतन्त्रम् । तेन— एकं द्वे बहूनि वा दत्त्वा, व्युत्क्रमेण विषमसम-संख्यानां आदानं यत्र तत्रैषा स्यात् । समादन्यत् असमम् । तच्च—न्यूनं अधिकं च । समन्यूनाधिकानां समाधिकन्यूनैः **विनिमये परिवृत्तिः**त्रयी ॥

**लतानामिति** । मतं चारु । श्रयति आदत्ते । अत्र **लास्य-मोदौ**[2] समौ । एकेन एकस्य विनिमयः पूर्वार्धे । उत्तरार्धे तु अधिकेनैकेन **न्यूनस्य**[3] आध्यादिरूपस्य अनेकस्य ॥

### मधुमती

**परिवृत्तिरिति** । यः **अर्थानां विनिमयः**, सः **परिवृत्तिः** इत्यन्वयः । पौनरुक्त्यं परिहरति—**परिवृत्तिः अलङ्कारः इति** ॥ इति परिवृत्तिः ॥

---

1 'तत्र'–क. 2 'लास्यामोदौ'–ग. 3 'न्यूनेन'घ.

नानाविधप्रहरणैः नृप! संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥५०२॥

अत्र न्यूनेनोत्तमस्य ॥

इति परिवृत्त्यलङ्कारः [1]

---

## २९. भाविकालङ्कारः

### प्रत्यक्षा इव यद्भावाः[2] क्रियन्ते भूतभाविनः । तद्भाविकम् ॥

भूताश्च भाविनश्चेति द्वन्द्वः । भावः—कवेरभिप्रायः अत्रास्तीति भाविकम् ॥ उदाहरणम्—

---

### सङ्केतः

नानेति । विप्रलम्भः भ्रान्तिः अपायो वा । निर्विप्रलम्भः निश्चितः [3] निर्विघ्नो वा परिरम्भविधिः यस्याः सा तथा । अत्र न्यूनेन प्रहाररूपेण उत्तमस्य भूरूपस्य विनिमयः ॥ इति परिवृत्तिः ॥

भाविकमिति । भूतभाव्यर्थानां लोकोत्तरत्वेन उद्भूतत्वात् अत्यस्तसम्बन्धशब्दसन्दर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वम् ॥ भाव इति । कवेर्भावः

### मधुमती

प्रत्यक्षा इवेति । भूतभाविनः भावाः यत्[4] प्रत्यक्षाः इव क्रियन्ते निर्दिश्यन्ते तत् भाविकं इत्यन्वयः ॥

---

1 परिवृत्तिर्विनिमयः न्यूनाभ्यधिकयोर्मिथः । जग्राहैकं शरं मुक्त्वा कटाक्षान् स रिपुश्रियम् ॥ (कु) 2 यत्रार्थाः'–ख. 3 'निश्चिन्तः'–ग. 4 'यत्र'–ज.

30

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥ ५०३ ॥
अत्र आद्ये भूतस्य, द्वितीये भाविनः दर्शनम् ॥

इति भाविकालङ्कारः [1]

---

## सङ्केतः

आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति भावः । स्वभावोक्तौ—कविप्रतिभा-विशेषितलौकिकवस्तुस्वभाववर्णने सर्वसाधारण्येन चित्तसंवादसम्भवः । अत्र तु—लोकोत्तरवस्तूनां—स्फुटत्वेन तटस्थतया प्रतीतिः इति ॥ चारुवस्तुवर्णनात् नैषा[2] स्वभावोक्तिः । लौकिकवस्तुगतसूक्ष्मधर्मवर्णने सर्वसाधारण्येन हृदय-संवादसम्भवात् । न चेदं अद्भुतपदार्थदर्शनात् भूतभाविप्रत्यक्षत्वप्रतीतौ काव्यलिङ्गम्, लिङ्गलिङ्गिभावेन अप्रतीतेः ॥ इति भाविकम् ॥

## मधुमती

नन्वत्र षष्ठीसमासादेः अविवक्षितत्वात्, कर्मधारये भेदानुपपत्तेः, द्वन्द्वे—'भूतं च भावि च' इति विग्रहे एकवद्भावपक्षे 'भूतभावी'ति, तदभावपक्षे 'भूतभाविनौ' इति च स्यात्, अत आह—**भूताश्चेति** । भाविकपदव्युत्पत्तिमाह—**भावः इति** । कविना तन्निबन्धने भूताः भाविनोऽपि विवक्षाविषयत्वात् प्रत्यक्षविषयत्वेन निर्दिश्यन्ते इति तद्विवक्षारूपभावमूलक-त्वात् भाविकमित्युच्यते इत्यर्थः । 'अवर्तमानस्य वर्तमानतया निर्देशः' इति तु उभयानुगतं रूपम् ॥ इति भाविकम् ॥

---

1 भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् । अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ॥ (कु) 2 'वर्णनान्नैषा'-ग.

## ३०. काव्यलिङ्गालङ्कारः

**काव्यलिङ्गं हेतोः वाक्यपदार्थता ॥११४॥**

**वाक्यार्थता यथा—**

**वपुःप्रादुर्भावात् अनुमितमिदं जन्मनि पुरा**
**पुरारे न प्रायः क्वचिदपि[1] भवन्तं प्रणतवान् ।**
**नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्[2]**
**महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥५०४॥**

---

### सङ्केतः

**हेतोरिति** । अयं भावः—यत्र हेतुः कारणरूपः तत् काव्यलिङ्गम् । ज्ञापकहेतौ तु अनुमानालङ्कारः । काव्यग्रहणात् काव्यलिङ्गे व्याप्तिपक्ष-धर्मतोपसंहारादयो न स्युः । वाक्यार्थवत् पदार्थोऽपि एकः अनेकश्च ।

**वपुरिति** । अत्र पादत्रयार्थः अनेकवाक्यार्थरूपः अन्त्यपादार्थहेतुः । तथा **वपुःप्रादुर्भावात्**[3] इत्युक्त्या अनुमानमप्यत्रास्ति । परं तेन सह भिन्नदेशत्वाभावात् वाक्यार्थीभूतस्य हेतोः न संसृष्टिः । किन्तु अनुमानस्य उत्थापकतया वाक्यार्थीभूतहेतुं प्रति अङ्गभावे सङ्करः । **संप्रति** त्वां **नमन्मुक्तः** सन् **अग्रेऽपि** भाविनि काले निस्तनुः सन् **अनतिमान्** इत्यर्थः । यथा—

### मधुमती

**हेतोर्वाक्येति** । तथाच हेत्वभिधानं काव्यलिङ्गमित्यर्थः । अभिधानं च वाक्यार्थेन पदार्थेन वा व्यञ्जनम् ।

---

1 'नैवास्मि क्षणमपि'–क.　2 'सम्प्रत्यतनुरहमग्रेऽप्यनतिमान्'–क.
3 'वपुष्प्रादुर्भावात्'–ग.

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतैः

ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः

पततु[1] शिरस्यकाण्डयमदण्ड इवैष भुजः[2] ॥५०५॥

---

सङ्केतः

घटकारणं मृद्घटरूपेण परिणमति, तथा अपराधद्वयस्य जनकं अनमनं अपराधतया अत्र परिणतम् । एकवाक्यार्थतोदाहरणं तु—

'मनीषिताः सन्ति गृहेऽपि देवताः

तपः क्व वत्से ! क्व च तावकं वपुः ?

पदं सहेत भ्रमरस्य पेशलं

शिरीषपुष्पं, न पुनः पतत्रिणः ॥'

इत्यादौ ज्ञेयम् ॥

**प्रणयीति** । इयं मालतीवधोद्यतमघोरघण्टं प्रति माधवोक्तिः । इह **सन्त्रोपक्षेप**रूपो हेतुः 'शस्त्रं' इति, 'उपक्षिपतः' इति च अनेकपदार्थतया उक्तः । पूर्वत्र वाक्यार्थगत्या हेतुः लिङ्गत्वेन बद्धः । अत्र तु 'शस्त्रमुपक्षिपतः' इति विशेषणत्वेन पदार्थगत्या बद्धः इति भावः ॥

---

1 'पतति'–ख. 2 'करः'–क.

एकपदार्थता यथा—

भस्मोद्धूलन ! भद्रमस्तु भवते, रुद्राक्षमाले ! शुभम्
हा ! सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥५०६॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनं, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथा-क्रममुक्तरूपो हेतुः ॥

इति काव्यलिङ्गालङ्कारः [1]

---

## सङ्केतः

भस्मेति । अत्र महामोहे सुखालोकोच्छेदित्वं हेतुः विशेषणतया एकपदार्थम्[2] । मोक्षस्य महामोहरूपणात् रूपकमपि ॥ इति काव्यलिङ्गम् ॥

## मधुमती

उक्तोदाहरणेषु प्रकृतालङ्कारं योजयति—एष्विति । यद्यपि—पूर्वापरजन्मनोः अनमनमेव अपराधः, न च तस्यैव तद्धेतुता सम्भवति । तथापि अपराधद्वये अपराधस्य द्वित्वे इत्यर्थः । तत्र च पूर्वापरजन्मानमनं हेतुर्भवत्येव । तद्गोचरापेक्षाबुद्धेः द्वित्वहेतुत्वात् । प्रयोजकसाधारणस्यैव हेतुत्वस्य अभिधानात् । यद्यपि अनेकपदार्थतायामपि वाक्यार्थतैवेति न पार्थक्यम्[3] । तथापि वाक्यार्थपदेन महावाक्यार्थस्य अभिमतत्वेन दोषाभावात् । अवान्तरवाक्यार्थमादाय तु नानापदार्थताभिधानात् ॥ इति काव्यलिङ्गम् ॥

1 समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । जितोऽसि मन्दकन्दर्प ! मच्चित्तेऽस्ति त्रिलोचनः ॥ 2 'पदार्थः'–ग. 3 'पार्थिक्यं'–ज.

## ३१. पर्यायोक्तालङ्कारः

**पर्यायोक्तं विना वाच्य-**
**वाचकत्वेन यद्वचः[1]।**

**वाच्यवाचकभावव्यतिरिक्तेन[2] अवगमनव्यापारेण यत् प्रतिपादनम्, तत् पर्यायेण—भङ्ग्यन्तरेण कथनात् पर्यायोक्तम् ॥ उदाहरणम्—**

---

### सङ्केतः

**वाच्येति।** **वाच्यवाचकौ** अर्थशब्दौ। **विविक्तेनेति।** भिन्नेन प्रकारान्तरेण, अर्थसामर्थ्यात्मनेति यावत्। अत्र गम्योऽर्थः भङ्ग्यन्तरेणाभिधीयते। अप्रस्तुतप्रशंसायां तु—अप्रस्तुत उच्यते, गम्यस्तु आक्षिप्यते इति विवेकः।

### मधुमती

**वाच्यवाचकेति।** **अवगमनव्यापारेण** व्यञ्जनया। पदव्युत्पत्तिमाह—**तदिति।** वस्तुतोऽत्र पर्यायता नास्तीति अन्यथा व्याचष्टे—**भङ्ग्यन्तरेणेति।** एवं च यत्र अगूढं व्यङ्ग्यं तत्रायमलङ्कारः इति द्रष्टव्यम्। अस्ति हि स्वभावादेव कुतश्चिच्छब्दात् गूढा व्यङ्ग्यप्रतीतिः, कुतश्चित् अगूढा। यत्रैव अगूढा तत्रैव शब्दानां पर्यायतुल्यता, झटिति अर्थप्रत्यायकत्वसाधर्म्यात् ॥

---

1 'त्वेन वस्तु यत्'–क. 2 'विविक्तेन'–क.

यं प्रेक्ष्य चिररूढाऽपि[1] निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०७ ॥

अत्र 'ऐरावण-शक्रौ मदमानमुक्तौ जातौ' इति व्यङ्ग्यं अपि शब्देनो[2]च्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न तथोच्यते । यथा हि[3] गवि

---

## सङ्केतः

व्यङ्ग्यमपीति योग्यतया निर्देशः । शब्देनोच्यते इति । मदेन मानेन निवासप्रीतिरुज्झिता इति भङ्ग्यन्तरेणेत्यर्थः । यथेति । येन प्रकारेण शब्दसंसर्गात् सहात्मना एकघनरूपतात्मना वा व्यङ्ग्यं प्रतीयते न तथा शब्देनोच्यते । क्रमभाविविकल्पप्रभवः शब्दः तथा अभिधातुं न शक्तः इत्यर्थः । अतोऽत्र न ध्वनिः इति भावः ॥ एतदेव दृष्टान्तेनाह—यथा गवीति । दृष्टे निर्विकल्पेन गोचरीकृते । नत्विति ।

## मधुमती

यं प्रेक्ष्येति । यं हयग्रीवम् । हरेः शक्रस्य । शब्देनेति । 'यं प्रेक्ष्ये'ति शब्देनैवोच्यते=झटिति प्रतिपत्तिविषयो भवतीति यावत् । न तथोच्यते तथा शब्देन अभिधया न ज्ञाप्यते इत्यर्थः । एतदेव दृष्टान्तेन स्फुटयति—यथा हि गवीति । दृष्टे निर्विकल्पकेन विषयीकृते । विकल्पः सविकल्पकम् । यदेवेति । निर्विकल्पकविषयमेव सविकल्पकेन विषयीक्रियते इत्यर्थः । न त्विति । न च तथाशब्दश्रुतेः, थाल्प्रत्ययस्य च प्रकार-वाचितया निष्प्रकारके निर्विकल्पके कथं तदन्वयः इति वाच्यम् । 'किञ्चित्त्वादिप्रकारेण तत्रापि धर्मो भासते' इति मतेन अस्याभिधानात् । [तदुक्तं विकल्पव्यापारवत्त्वेन मनो लक्ष्यति । ?] तदुक्तं—तत्त्वकौमुद्यां

---

1 'मूढापि'–ख. 2 'अपिभङ्ग्यन्तरेणशब्देनो'–क. 3 'तथाहि'–क.

शुक्ले चलति दृष्टे 'गौः शुक्लश्चलति'[1] इति विकल्पः। यदेव दृष्टं तदेव विकल्पयति, न तु यथा दृष्टं तथा; यतः अभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति ॥

इति पर्यायोक्तालङ्कारः[2]

---

## सङ्केतः

अयं भावः—अभिन्नासंसृष्टः स्वलक्षणाकारः निरंशः निर्विकल्पकेन दृष्टः, पश्चात् अविद्यावशेन भेदसंसर्गाभ्यां विकल्पगोचरीक्रियते। भेदसंसर्गौ हि विकल्पस्यैव व्यापारः। स हि निरंशत्वात् अभिन्नमपि असंसृष्टमपि वस्तु 'गौः शुक्लः चलः' इत्येवं भिनत्ति। भिन्नमपि[3] 'अयं गौः अयं गौः' इति संसृजति ॥ इति पर्यायोक्तम् ॥

## मधुमती

वाचस्पतिमिश्रैः—

"आलोचितमपीन्द्रियेण वस्त्विदमिति संमुग्धं
इदमेवं नैवमिति सम्यगर्पयति, विशेषणविशेष्यभावेन
विवेचयतीति यावत्। यदाहुः—
'संमुग्धवस्तुमात्रं तु प्राग्गृह्णात्यविकल्पितम्।
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः॥' इति॥"

इति। तदेवाह—**अभिन्नेति**। **अभिन्नासंसृष्टत्वेन**। किञ्चित्त्वेनेत्यर्थः, भेदसंसर्गयोः अविषयत्वात्। **भेदेति**। 'गौर्गौः' इत्यनेन अगोव्यावृत्ति

---

1 'श्चलः'—ख. 2 पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्। नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ॥ पर्यायोक्तं तदप्याहुः यद्व्याजेनेष्टसाधनम्। यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह॥ (कु) 3 'इत्येवं भिन्नभिन्नमपि'—ग.

## ३२. उदात्तालङ्कारः

### उदात्तं वस्तुनः सम्पत् ।

सम्पत्—समृद्धियोगः । यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेः तत् त्याग[1]लीलायितम् ॥५०८॥

---

#### सङ्केतः

उदात्तमिति । इदं ऐश्वर्यलक्षणस्य वस्तुनो वर्णनया स्वभावोक्ति-भाविकाभ्यां भिद्यते । न हि पूर्वयोः ऐश्वर्यं वर्ण्यते । कविप्रतिभोत्थापितत्वं तु त्रिष्वप्यस्त्येव ॥

मुक्ताः इति । अतिशयोक्तिरेषेति चेन्न । अन्यस्य अन्यतया अध्यवसायाभावत्, अत्यै[2]श्वर्येऽपि अवकरवत् मुक्तादेः पुञ्जीकरणासम्भवे

#### मधुमती

भासते, वैशिष्ट्यस्य अतद्व्यावृत्तिरूपत्वात् । 'शुक्लः चलः' इत्यत्र तु गुणक्रियासंसर्गः । किञ्चित्त्वेन तु ज्ञाने न गुणादिसंसर्गः नाप्यतद्व्यावृत्तिः भासते, तदनुल्लेखात् । किञ्चित्त्वस्य केवलान्वयित्वात्, इति सर्वमनवद्यम् ॥ इति पर्यायोक्तम् ॥

उदात्तमिति । उत्कर्षेणादीयते गृह्यते इति उदात्तम् ।

मुक्ताः इत्यत्र समृद्धियोगः स्फुट एव ॥

---

1 'भोजनृपते तस्त्याग'–क. 2 'अन्यै'–घ.

## महतां चोपलक्षणम् ॥११५॥

उपलक्षणं–अङ्गभावः। अर्थात् उपलक्षणीयेऽर्थे।

उदाहरणम्—

तदिदमरण्यं यस्मिन्
दशरथवचनानुपालनव्यसनी।

---

### सङ्केतः

यदेवमुक्तिः, येयं असम्बन्धे सम्बन्धात्मिका अतिशयोक्तिः, अथ पुञ्जीकरणं सम्भवति, तदा जातिः। किञ्च—अनृद्धिमद्वस्तुवर्णने अनुदात्तमपि स्यात् इति विवक्षायां, निर्विषयमिदं उदात्तम्॥

**अर्थादिति।** अर्थात् सामर्थ्यात् उपलक्षणीये वस्त्वन्तरे अङ्गीभूते [1] इत्यर्थः।

**तदिदमिति।** अत्र दण्डकारण्ये वर्ण्यतया अङ्गिभूते रामचरितस्य अङ्गभावः। महद्भिराश्रितं ह्यरण्यं वर्ण्यं स्यादिति भावः। अरण्यं अत्र

### मधुमती

उदात्तविशेषमाह—**महतामिति।** उपलक्षणीयेऽर्थे अङ्गिनि।

**तदिदमिति।** अत्र निवसन् इत्यनेन दण्डकारण्ये अङ्गिनि

---

1 ‘वस्त्वन्तरङ्गभूते’–ग.

निवसन् बाहुसहायः
चकार रक्षःक्षयं रामः ॥ ५०९ ॥

न चात्र वीरो रसः । तस्य इह अङ्गत्वात् ॥

इत्युदात्तालङ्कारः[1]

---

## सङ्केतः

उपलक्षणीयं प्रधानीभूतमित्यर्थः । रामस्य वीरचरितं उपलक्षणं अङ्गभूतमित्यर्थः ॥

ननु वीररसे अङ्गीभूते रसध्वनिः स्यात्—इत्याशङ्क्याह—**न चेति** । **वीररसः** नाङ्गी इत्यर्थः । एतदेवाह—**तस्येति** । वीररसाश्रयो रामस्तावदिहाङ्गम्, किं पुना रसः? । ननु रसस्य अङ्गत्वे रसवदलङ्कारः स्यात् । न । अस्योदात्तालङ्कारस्य तदपवादत्वात् । तदपवादत्वाकल्पने हि निर्विषयमुदात्तं स्यादिति ॥ इत्युदात्तम् ॥

## मधुमती

**अङ्ग**भावः दाशरथेरिति प्रतीयते । **न चेति** । **अङ्गत्वात्** अप्रधानत्वात् । तथाच 'प्रधानमाश्रित्य व्यपदेशः' इति चित्रव्यवहार एवात्र, न तु ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः इति भावः ॥ इत्युदात्तम् ॥

---

1 उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् । सानौ यत्राभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ (कु)

## ३३. समुच्चयालङ्कारः

**तत्सिद्धिहेतावेकस्मिन्**
**यत्रान्यत् तत्करं भवेत् ।**
**समुच्चयोऽसौ**

तस्य—प्रस्तुतस्य कार्यस्य, एकस्मिन्—साधके स्थिते, साधकान्तराणि यत्र सम्भवन्ति[1] सः समुच्चयः ।

उदाहरणम्—

दुर्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽत्युत्सुकं,
गाढं प्रेम, नवं वयोऽतिकठिनाः प्राणाः, कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि, मन्मथसुहृत् कालः, कृतान्तोऽक्षमः,
नो सख्यः चतुराः, कथं नु विरहः सोढव्य इत्थं शठः ? ॥
॥ ५१० ॥

---

### सङ्केतः

**समुच्चय इति** । अत्र तुल्यकक्षतया हेतवः मिलिताः कार्यं साधयन्ति । समाधौ तु—एकस्य हेतोः पूर्णं साधकत्वम्, अन्यस्तु[2] काकतालीयन्यायेन आपततीति न तत्र तुल्यकक्षतेत्यनयोर्भेदः । **समुच्चयनं** हि तुल्यकक्षाणामेव स्यादिति ॥

### मधुमती

**सन्ति**[3]=अभिधीयन्ते इत्यर्थः । काव्यलिङ्गे सामग्र्येकदेशस्य, अत्र तु सामग्र्या एवाभिधानात् ततो भेदः ॥

---

1 'सन्ति'–क. 2 'पूर्णे साधकत्वेऽन्यस्तु कार्याय'–ग. 3 'सम्भवन्ति'–च.

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति। तदुपरि प्रियतमदूरस्थित्यादि उपात्तम्। एष एव समुच्चयः—सद्योगे, असद्योगे, सदसद्योगे च पर्यवस्यति इति न पृथक् लक्ष्यते। तथाहि—

कुलममलिनं, भद्रा मूर्तिः, मतिः श्रुतशालिनी,[1]
भुजबलमलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावाः, अमीभिरयं जनः
व्रजति सुतरां दर्पं राजन्! त एव तवाङ्कुशाः ॥५११॥

अत्र सतां योगः। उक्तोदाहरणे तु असतां योगः ॥

---

## सङ्केतः

न पृथगिति। रुद्रटवत् इत्यर्थः। तेन हि—'अन्यः सदसतोः योगे' इत्यादिना सद्योगासद्योगसदसद्योगैः स त्रिधा ऊचे, न तथाऽत्रेऽति भावः ॥

कुलमिति। अत्र अमलस्य कुलस्य सतः सद्भिः मूर्त्यादिभिः समुच्चयः। एकैकस्य दर्पहेतुत्वेन तुल्यकक्षत्वम्। 'दुर्वाराः स्मरमार्गणाः' इत्यत्र तु स्मरमार्गणानां दुर्वारत्वेन असतां तादृशैरेव दूरत्वात् प्रियतमादिभिः समुच्चयः। तारुण्यादेश्च[2] स्वतश्चारुत्वेऽपि विरहेण अचारुत्वम्।

## धुममती

अन्यैश्चा[3]लङ्कारिकैः अस्य त्रैविध्यमुक्तम्, तदपाकरोति—एष इति।

---

1 'श्रुतिशालिनी'-ख.　2 'कारुण्यादेश्च'-ग.　3 'श्चार्थां'-ज.

**शशी दिवसधूसरः, गलितयौवना कामिनी,**
**सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः ।**
**प्रभुर्धनपरायणः, सततदुर्गतः सज्जनः,**
**नृपाङ्गणगतः खलः, मनसि सप्तशल्यानि मे ॥५१२॥**

**अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः ॥**

---

## सङ्केतः

तथा एकमेव वस्तु सदसच्च, तादृशं तादृशेन सदसता यदा युज्यते, तदा सदसद्योगः । यथा—**शशीति** । **स्वाकृतेः** सुरूपस्य । **धनपरायणः** धनलुब्धः । **नृपाङ्गणगतः** राज्ञः प्रसादवित्तः पुमान् । सः तद्रूपः सन्, खलतया च असन् । अत्र **शशी** स्वयं सन्, **धूसरत्वेन** च असन् । **कामिनीति** सत्,[1] **गलितयौवनत्वं** असत् । एवं अग्रेऽपि विशेष्यद्वारेण सत्ता, विशेषणद्वारेण च असत्ता एकस्यैव वस्तुनः सर्वत्र ज्ञेया । **इह** विशेष्यस्य सत्त्वं, विशेषणस्य च असत्त्वं प्रक्रान्तम्, ततः नृपाङ्गणगतः इति विशेष्यतया सद्व्याख्येयम्, खलः इति विशेषणतया च असत् । **अन्य**मताभिप्रायेण विशेषणविशेष्ययोः अत्र वैपरीत्ये प्रक्रमभङ्गः । तथा नृपाङ्गणगतः खलः इति असन्,[2] अन्ये तु सन्तः इति समुच्चीयमानस्य सतः तादृशेन असता[3] योगः इति व्याख्यायां तु 'सहचरभिन्नोऽर्थः दुष्टः' इतिरूपः

## मधुमती

**अत्रेति** । **शश्यादयः सन्तः दिवसधूसरत्वादयश्च असन्तः**, अत एव अमीषां योगे **शल्यता** । अनेकशल्यानां उपा[4]दानाच्च समुच्चयत्वम् ॥

---

1 'सन्'–घ. 2 'असत्'–ग. 3 'सता'–ग. 4 'आपा'–च.

स त्वन्यो युगपद्या गुणक्रियाः ॥११६॥

गुणौ च, क्रिये च, गुणक्रिये च गुणक्रियाः ।

क्रमेणोदाहरणम्—

---

### लङ्केतः

प्रक्रमभङ्गः । तथाह्यत्र सत एव[1] सतः असत्त्वं एकस्यैव वस्तुनः इति विवक्षितम् । अत एव चारुत्वेनान्तःप्रविष्टान्यपि शश्यादीनि शल्यानीति[2] प्रकारेण व्यथाहेतुत्वेनोक्तानि । 'दुर्वाराः स्मरे'त्यत्र तु 'कथं सोढव्यः' इति सर्वथा दुष्टत्वाभिप्रायेणोपन्यासः इति विवेकः ॥

**गुणौ चेति** । एतेन इत्युक्तम्—यत् व्यस्तत्वेन समस्तत्वेन च, क्रमेण व्युत्क्रमेण च **गुणक्रियाणां** त्रिधाऽयमन्यः समुच्चय इति ॥

### मधुमती

समुच्चयान्तरमाह—**स त्वन्य** इति । **गुणाश्च क्रियाश्चेति** द्वन्द्वे बहूनां गुणानां बह्वीनां क्रियाणामेव च समुच्चयः प्रतीयेतेति[3] अन्यथा व्याचष्टे—**गुणौ चेति** । तथा च द्वयोरेव[4] समुच्चयः इति भावः । अत्र एकशेषेण सजातीययोः, द्वन्द्वबलाच्च विजातीययोः[5] समुच्चयो लभ्यते । एवं च—**गुणयोः क्रिययोः गुणक्रिययोश्च** समुच्चयः इति द्रष्टव्यम् ॥

---

1 'शोभनस्यैवेत्यर्थः । 2 शल्यानीति नास्ति–घ. 3 'प्रतीयेते इति'–च.
4 'तथा बहुयोरेव'–ज. 5 द्वन्द्वेत्यादि नास्ति–ज.

विदलितसकलारिकुलं
    तव बलमिदं अभवदाशु विमलं च ।
प्रखलमुखानि नराधिप !
    मलिनानि च तानि जातानि ॥ ५१३ ॥

अयमेकपदे[1] तया वियोगः
    प्रियया चोपनतः [2] सुदुस्सहो मे ।
नववारिधरोदयादहोभिः
    भवितव्यं च निरातपत्व[3]रम्यैः ॥ ५१४ ॥

कलुषं च तवाहितेष्वकस्मात्
    सितपङ्केरुहसोदरश्रि[4] चक्षुः ।
पतितं च महीपतीन्द्र ! तेषां
    वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ५१५ ॥

---

## सङ्केतः

**विदलितेति।** अत्र भिन्नाधारयोः वैमल्यमालिन्ययोः गुणयोः समुच्चयः ॥
**अयमिति।** अत्र तादृश्योरेव उपनतः इति भवितव्यं इति च क्रिययोः ।
**कलुषं चेति ।** अत्र कालुष्यगुण-पातक्रिययोः ।

## मधुमती

**विदलितेति ।** वैमल्य[5]-मालिन्यगुणयोः अत्र समुच्चयः ॥
**अयमिति ।** अत्र उपनति-भवनक्रिययोः समुच्चयः ॥
**कलुषं चेति[6] ।** अत्र कालुष्यगुण-पतनक्रिययोः समुच्चयः ॥

---

1 'क्रिये यथा — अयमेकपदे'—क. 2 'चोपगतः'—क. 3 'निरातपत्र'—ख.
4 'सुन्दरश्रि'—क. 5 'वैमल्य'—च. 'वैशद्य'—ज. 6 'कलुषतयेति'—च.

'धुनोति चासिं तनुते च कीर्तिम् ॥' ५१६ ॥

इत्यादेः,

'कृपाणपाणिश्च भवान् रणक्षितौ
ससाधुवादाश्च सुराः सुरालये ॥' ५१७ ॥

इत्यादेश्च दर्शनात्, 'व्यधिकरणे' इति, 'एकस्मिन् देशे' इति च न वाच्यम् ॥

इति समुच्चयालङ्कारः [1]

---

## सङ्केतः

धुनोतीतीति । अत्र ऐकाधिकरण्यं क्रिययोः । कृपाणपाणित्वसाधुवादौ[2] सिद्धरूपत्वात् गुणौ । तयोः क्षितिः स्वर्गश्च भिन्नो देशः ।

न वाच्यमिति । यथोक्तं रुद्रटेन । यथा—

'व्यधिकरणे वा यस्मिन्
गुणक्रिये चैककालमेकस्मिन् ।
उपजायेते देशे
समुच्चयः स्यात् तदाऽन्योऽसौ ॥' इति ॥

तदेवं पूर्वभेदत्रयेण सह समुच्चयः षोढा ॥ इति समुच्चयः ॥

## मधुमती

अत्र 'देशभेदेऽपि काल[3]रूपाधाराभेदमादाय[4] समुच्चयः' इति कस्यचिन्मतं निराचष्टे—धुनोतीति । धुनोतीत्यत्र सामानाधिकरण्यात्,

1 बहूनां युगपद्भावभाजां गुम्फः समुच्चयः ।
नश्यन्ति पश्चात् पश्यन्ति त्रस्यन्ति च भवद्द्विषः ॥ (कु)

2 'साधुत्वादौ'–ग. 3 'कारण'–ज. 4 'रमादाय'–ज.

## ३४. पर्यायालङ्कारः

# एकं क्रमेणानेकस्मिन् पर्यायः

एकं वस्तु क्रमेण अनेकस्मिन् भवति क्रियते वा, सः पर्यायः। क्रमेणोदाहरणम्—

श्रोणीबन्धः त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्ताः तरलगतयः संश्रिताः लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतां अद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन[1] ॥५१८॥

---

## सङ्केतः

**क्रमेणेति।** क्रमग्रहणाच्च पर्यायः इति सान्वयं नाम। युगपदेकस्य अनेकत्र वर्तने तु विशेषालङ्कारः। अत एव तत्रापि युगपदित्युक्तम् ॥

**श्रोणीबन्धः इति।** अत्र एकस्यैव तनुतादेः द्वये वृत्तिः दर्शिता। पूर्वं मुखस्य[2] उपमानसद्भावात् सद्वितीयत्वमिति विनिमयो घटते। पूर्वार्धं अत्र उदाहरणम् ॥

## मधुमती

कृपाणेत्यत्र वैयधिकरण्याच्चेत्यर्थः। न च कालरूप एवैको देशः। सामानाधिकरण्यस्य तदघटितत्वात्। एवं च सामानाधिकरण्य-वैयधिकरण्ययोः समुच्चयदर्शनात् नियमो नास्तीति तात्पर्यम् ॥ इति समुच्चयः ॥

**एकमिति।** यथासङ्ख्ये तु प्रतिनिर्देश्यानामपि बहुत्वात् ततो भेदः। **भवनं** स्वतः सम्भवित्वम्, **करणं** च कविप्रतिभोत्थापितत्वम्[3]।

---

1 इदं पद्यं क्वचिन्नास्ति, क्वचिच्च नन्वाश्रयेतिश्लोकादनन्तरं दृश्यते। 2 मुखस्य इति नास्ति–ग. 3 'त्पादितत्वं'–च.

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ५१९ ॥

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि ! लक्ष्यते[1] ॥ ५२० ॥

रागस्य वस्तुतो भेदेऽपि, एकतया अध्यवसितत्वात् एकत्वं अविरुद्धम् ।

---

## सङ्केतः

नन्वाश्रयेति । अत्र एकस्य विषस्य बहुषु अब्ध्यादिषु वृत्तिः ॥

बिम्बोष्ठे इति । अत्र पूर्वाश्रयात्यागादेव एकस्य रागस्य हृद्यपि वृत्तिः निबद्धा । यथावेति च प्रकारान्तरोपक्षेपार्थम् ॥

रागस्येति । ओष्ठे रागः ताम्बूलाख्यः, हृदि तु प्रेमाख्यः अन्यः ॥

## मधुमती

उदाहरति—नन्वाश्रयेऽति । प्रथमं हृदये ततः कण्ठे, ततो मुखे इत्यर्थः, वाचा मुखोपलक्षणात् । अत्र कालकूटस्य अर्णवहृदय-वृषलक्ष्म-कण्ठयोः निवासेऽपि खलमुखे निवासः कविप्रतिभोत्थः ॥

रागस्येति । तथाच रागशब्दवाच्यपरः रागशब्दः इति प्रकृतोदाहरणत्वम्, अत्र च स्वतःसम्भवित्वम् ।

---

1 'दृश्यते'–क.

तंताण सिरिसहोअर-
रअणाहरणम्मि हिअअमेकरसं ।
बिंब हरे पिआणं
णिवेसिअं कुसुमबाणेन ॥ ५२१ ॥
[तत्तेषां श्रीसहोदर-
रत्नाभरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां [1]
निवेशितं कुसुमबाणेन ॥]

**अन्यस्ततोऽन्यथा ।**

अनेकं एकस्मिन् क्रमेण भवति क्रियते वा, सोऽन्यः । क्रमेणोदाहरणम् ॥

---

## सङ्केतः

एवं एकस्य अनेकत्र स्थितिमुक्त्वा करणमुदाह्रियते—**तंताणेति** । **तत्** सामर्थ्यं [2] **तेषां** दैत्यानां इन्द्रस्यापि भयकृताम्, **श्रीबन्धुरत्नानां आ** सामस्त्येन **हरणे** तत्परमपि, **कुसुमबाणेन** मृदुशस्त्रेणापि सकलरत्नसारे **बिम्बाधरे** विक्रमं परित्यज्य मनः चुम्बनादिसक्तं कृतं इत्यर्थः ॥ 'बिम्बाधरः सकलरत्नेभ्योऽधिकः' इति व्यङ्ग्यव्यतिरेकोऽपि । अन्ये तु 'सकलरत्नसार-तुल्यः अधरः इति तेषां तत्र प्रीतिः वास्तवी' इति व्यङ्ग्योपमामाहुः अति-शयोक्तिगर्भता तु सर्वत्र ज्ञेया ॥

## मधुमती

**तंताणेति** । **श्रीसहोदररत्नाभरणे** कौस्तुभाभरणे श्रीहरौ इत्यर्थः ।

पर्यायान्तरमाह—**अन्य इति** । **अनेकस्य** आधेयस्य **एकस्मिन्नेव** आधारे सम्बन्धः द्वितीयः पर्यायः । अत्रापि कविप्रतिभोत्थापितत्वं, स्वत-

---

1 'प्रियायाः'–ख. 2 'सामर्थं'–घ.

मधुरिमरुचिरं वचः खलानां
अमृतमहो! प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालहलं विषं तदेव ॥ ५२२ ॥

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः,
सा धेनुर्जरती, नदन्ति करिणामेताः घनाभा घटाः।
स क्षुद्रो मुसलध्वनिः, कलमिदं सङ्गीतकं योषितां,
आश्चर्यं! दिवसैः द्विजोऽयं इयतीं भूमिं समारोपितः[1] ॥५२३॥

अत्र एकस्यैव हानोपादानयोः अविवक्षितत्वात् न परिवृत्तिः ॥

इति पर्यायालङ्कारः[2]

---

## सङ्केतः

**मधुरिमेति** । अत्र एकस्मिन् वचसि विषममृतं च अनेकं निबद्धम् । तदेव वचनमेव ॥

**तद्गेहमिति** । अत्र एकस्मिन् द्विजे अनेकं गेहादि दिनैः क्रियमाणतया निबद्धम् । तच्चात्र[3] नतभित्ति गृहादि त्यज्यत एव, न तु केनापि स्वीक्रियते । परिवृत्तौ तु यदेकेन त्यज्यते तदन्येन गृह्यते । क्रमेणेत्यधिकारात् न समुच्चयालङ्कारत्वम् ॥ इति पर्यायः ॥

## मधुमती

स्सम्भवित्वं च भेदद्वयमवगन्तव्यम् ॥ तत्र **मधुरिमेत्यत्र** कविप्रतिभोत्थापितत्वम्, **तद्गेहमित्यादौ** स्वतस्सम्भवित्वमिति द्रष्टव्यम् ॥ इति पर्यायः ॥

---

1 'परां प्रापितः'—ख.　2 पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः । पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ (कु)　3 'तथात्र'—ग.

## ३५. अनुमानालङ्कारः

**अनुमानं तदुक्तं यत्**
**साध्यसाधनयोर्वचः ॥ ११७ ॥**

**पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः-साधनम् ।**
**धर्मिणि अयोगव्यवच्छेदः व्यापकस्य साध्यम्[1] ।**

**यथा—**

**यत्रैता लहरीचलाचलदृशः व्यापारयन्ति भ्रुवं**
**यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।**

---

### सङ्केतः

**हेतुरिति ।** अन्वयव्यतिरेकभणनात् सपक्षसत्त्वं विपक्षव्यावृत्तिश्च क्रमेण लभ्यते । पक्षधर्मत्वं स्वेनोक्तमिति त्रैरूप्यम् । **धर्मी** शैलादिः, तत्र अस्तित्वं **अयोगव्यवच्छेदः** । **व्यापकस्य** अग्न्यादेः ॥

**यत्रैता इति ।** **यत्र** कान्ते एताः कामिन्यः । अत्र कामिनीरूपः

### मधुमती

**पक्षधर्मेति ।** **अन्वयः** सपक्षे, **व्यतिरेको** यावद्विपक्षे । तेन— पक्षसत्त्व–सपक्षसत्त्व–विपक्षसत्त्वानि यस्य सन्ति तत् साधनमित्यर्थः । **धर्मिणीति ।** पर्वतादौ पक्षे साध्यस्य **अयोगव्यवच्छेदः**[2] असम्बन्धाभावः साध्यसाधनत्वेनाभिधानं प्रयोजकम् । तेन तर्के नातिव्याप्तिः ॥

**यत्रैता इति ।** इह **यत्र-तत्रे**तिपदाभ्यां यद्योगप्राथम्याभ्यां[3] भ्रूयुगव्यापार-मदनशरपातयोः व्याप्तिः प्रतीयते । एवं च तत्साहचर्यात् पक्ष-

---

1 'साध्यत्वं'–क. 2 'च्छेदात्'–च. 3 'प्राथम्यात्'–ज.

वंचक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनः
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ५२४ ॥

---

## सङ्केतः

धर्मी, भ्रूव्य:परद्वारेण बाणपातः साधनम्[1] । स्मरस्य अग्रगत्वं साध्यम्[2] । अलङ्कारान्तररहितं साधनं निर्दिष्टम् । क्वचित् अलङ्कारान्तरगर्भितत्वे तु[3] हेतुर्निर्दिश्यते । स्वं यथा—

यथा पङ्कजिनीपत्रे पदौघः प्रगुणीकृतः ।
तथा मन्ये वियोगिन्यः स्मरभिल्लेन घातिताः ॥

## मधुमती

धर्मताऽप्याक्षिप्यते । तथाच—भ्रूव्यापारेण[4] शरपातानुमानम्, तेन अग्रतोवर्तिमदनानुमानम्[5] । अत्र च वस्तुस्थित्या व्याप्त्यभावेऽपि कविना प्रौढ्यैव तदभिधानमित्यलङ्कारत्वम् । अन्यथा 'वह्निमान् धूमात्' इत्यत्रापि तथात्वापत्तेः ।

ननु अतिशयोक्तौ 'हृदयमधिष्ठितमादौ' इत्यादौ कार्यकारणपौर्वापर्य-विपर्ययत्ववत्, अत्रापि साध्यसाधनयोः पौर्वापर्यविपर्ययेऽपि अनुमानं वक्तव्यम् । यथा—

मधु तिष्ठति वाचि योषितां
हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरः
हृदयं मुष्टिभिरेव ताड्यते ॥

---

1 साधनं इति नास्ति-ग. 2 'गत्वे साध्ये'-घ. 3 'गर्भितत्वेन'-घ. 4 'व्यापारणेन'-च. 5 'मदनार्धदानं-ज.

साध्यसाधनयोः पौर्वापर्यविकल्पे न किञ्चित्
वैचित्र्यं[1] इति न तथा दर्शितम् ॥

इत्यनुमानालङ्कारः[2]

---

## ३६. परिकरालङ्कारः

**विशेषणैः यत् साकूतैः**
**उक्तिः परिकरस्तु सः ।**

अर्थात् विशेष्यस्य । यथा—

---

### सङ्केतः

इति । प्रगुणीकृतः=प्रगुणीकर्तुमारब्धः । अत्र रूपकं अलङ्कारान्तरम् । एवं एकत्र प्रौढोक्त्या, अन्यत्र तु अलङ्कारान्तरगर्भीकारात् तर्कानुमान-वैलक्षण्यम् । **न दर्शितमिति** । अयं भावः—**साध्यसाधनयोः उक्तिः** अलङ्कारः, स च तेन[3] क्रमेण वा, व्युत्क्रमेण वेति भवतां वैचित्र्याभावात् किं तच्चिन्तयेति । तस्मात् रुद्रटवत् न वाच्यम् ॥ इत्यनुमानम् ॥

### मधुमती

इति । तत् किं नोच्यते? इत्याह—**साध्यसाधनयोरिति** । **विकल्पे** वैपरीत्ये ॥ इत्यनुमानम् ॥

**साकूतैरिति** । साभिप्रायैरित्यर्थः । **अर्थादिति** । विशेषणानां मिथोऽनन्वयात् 'गुणानां च परार्थत्वात्' इति न्यायादिति भावः ॥

---

1 'विकल्पने वैचित्र्यं न किञ्चित्'–क. 2 अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनात् । (सा) 3 'ते च'–ग.

महौजसो मानधना धनार्चिताः
धनुर्भृतः संयति लब्धकीर्तयः ।
नसंहतास्तस्य नभेद[1]वृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५२५ ॥

यद्यपि—अपुष्टार्थस्य दोषताभिधानात्, तन्निरासेन पुष्टार्थस्वीकारः कृतः । तथापि—एकनिष्ठत्वेन बहूनां विशेषणानां एवमुपन्यासे वैचित्र्यमिति अलङ्कारमध्ये परिगणितः ॥

इति परिकरालङ्कारः[2]

---

## सङ्केतः

**महौजस इति । समीहितुं** कर्तुम् । अत्र **धनुर्भृतः** इति विशेष्यम्, शेषाणि विशेषणानि । महौजसः इत्यस्य विशेषणस्य 'सबलत्वे सति स्वामिकार्यकरणे शक्ताः' इत्यभिप्रायः । एवं अग्रेतनेष्वपि विशेषणेषु । अत्र व्यङ्ग्यस्यांशस्य वाच्योन्मुखत्वमिति न ध्वनिविषयता । 'परिकरः' इति नाम च सान्वयम् ॥

ननु पुष्टार्थग्रहणात् दोषत्यागमात्रमेतत् इत्याशङ्क्याह—**यद्यपीति** ॥

इति परिकरः ॥

## मधुमती

**महौजस इति** । अत्र विशेषणानां परानभिभवनीयत्वाद्यभिप्रायकत्वात्, धनुर्भृतः इति विशेष्यस्य परिपुष्टिः । तेन च प्रधानस्य दुर्योधनस्य अतिशयः । अन्यविशेषणत्वेनोपात्तान्यपि वाक्यार्थमहिम्ना प्रधानमेव उपकुर्वन्तीति ॥

॥ इति परिकरः ॥

---

1 'नभिन्न'–ख. 2 अलङ्कारः परिकरः साभिप्राये विशेषणे । सुधांशुकलितोत्तंसः तापं हरतु वः शिवः ॥ (कु)

## ३७. व्याजोक्त्यलङ्कारः

**व्याजोक्तिः छद्मनोद्भिन्न-**
**वस्तुरूपनिगूहनम् ॥११८॥**

निगूढमपि वस्तुनो रूपं, कथमपि प्रभिन्नं, केनापि व्यपदेशेन यत् अपह्नूयते सा व्याजोक्तिः ।

---

### सङ्केतः

**न चैषेति** । अयं भावः--अपह्नुतौ किल उभयनिष्ठं साम्यम्, अत्र तु प्रकृतस्यैव सद्भावात् प्रकृतनिष्ठमेव साम्यम् यथा—

'सदयं बुभुजे महाभुजः
सहसोद्वेगमयं व्रजेदिति ।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां वधूमिव' ॥ इति ;[1]

'ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ? ।
नीचाः सदैव सविलासमलीकलग्नाः
ये कालतां कुटिलतामिव न त्यजन्ति ।'

इति च समुच्चितोपमायां, तथा अत्रापि प्रकृतिनिष्ठमेव साम्यमिति ॥

### मधुमती

**निगूढ[2]मपीति** । अनिगूढ[3]स्यानुद्भेदात् निगूढमपीत्युक्तम् । तथा च—प्रच्छन्नतया स्थितस्य काला[4]दुद्भिन्नस्य तत्कार्यस्य हेत्वन्तरजन्यत्व-प्रतिपादनेन यत्पुनर्निगूहनम्, सा व्याजोक्तिरित्यर्थः । निगूहनमात्रस्य

---

1 अयंश्लोकः नास्ति–ग. 2 'निगूहन'–ग. 3 'अनुगूढ'–च. 4 'कार्या'–च.

न चैषा अपह्नुतिः प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्य इहासम्भवात् ॥ उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसत्-
　रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा ! शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
　शैलान्तःपुरमातृमण्डलगणैः दृष्टोऽवताद्वश्शिवः ॥५२६॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्य-कारणतया प्रकाशितत्वात् अपलपितस्वरूपौ व्याजोक्ति प्रयोजयतः ॥

इति व्याजोक्त्यलङ्कारः [1]

---

## सङ्केतः

शैलेन्द्रेति । शैलेन्द्रेण प्रतिपाद्यमाना या गौरी तत्कराश्लेषे शैलेन्द्रकरस्पर्शोऽपि शिवस्य विद्यते । व्यासङ्गः निरोधः, तस्मात् भङ्गः भयं सात्विकभावः इत्यर्थः । असमञ्जसनिखिलकर्तव्यताप्रसङ्गापह्नवाकुल इति

## मधुमती

अपह्नुतावपि सत्त्वादाह—नचेति[2] । प्रकृतेत्यापाततः[3] । परमार्थतस्तु—निह्नुतेः निषेधगर्भत्वात्, अस्याश्च तदगर्भितत्वात्[4] भेदः । न ह्यत्र रोमाञ्चादिकं निषिध्य अन्यद्विधीयते । किन्तु तस्य हेत्वन्तरजन्यत्वं निह्नोतुं हेत्वन्तरजन्यत्वमुच्यते इति द्वयोरनयोर्भेदः ।

अत्रेति । पार्वतीविषयकस्नेहस्य (रतिभावस्य) प्रच्छन्नतया अनुवर्त-

---

1 व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् । सखि ! पश्य गृहाराम-परागैरस्मि धूसरा ॥ (कु) 2 'नवेति'-ज. 3 'त्याद्यापाततः'-च. 4 'तद-गर्भत्वात्'-च.

## ३८. परिसङ्ख्यालङ्कारः

**किञ्चित् पृष्टमपृष्टं वा**
**कथितं यत् प्रकल्पते ।**
**तादृगन्यव्यपोहाय**
**परिसङ्ख्या तु सा स्मृता[1] ॥ ११९ ॥**

---

### सङ्केतः

तात्पर्यम् । उद्भटमते व्याजोक्त्यभावात् अत्र अपह्नुतिः । तथा अत्र रोमाञ्चादिना उद्भिन्नो भावः शैत्यप्रक्षेपात् अपलपितोऽपि[2] सस्मितत्वेन पुनरप्युद्भिन्नत्वेन प्रकाशितः, तथापि अपलापमात्रचिन्तया अस्य अलङ्कारस्य उल्लेखः ॥ इति व्याजोक्तिः ॥

### मधुमती

मानस्य तत्करस्पर्शजन्यरोमाञ्चादिना उद्भिन्नस्य तद्रोमाञ्चादौ हिमालयकर-स्पर्शजन्यत्वं प्रतिपादयता शिवेन पुनर्निगूहनात् अपलपितस्वरूपावेव पुलक-वेपथू व्याजोक्तिं प्रयोजयतः इति भावः ॥ इति व्याजोक्तिः ॥

**किञ्चिदिति** । तदेतत् व्याचष्टे—**प्रमाणान्तरेति** । एवं च प्रमाणान्तरप्राप्तस्यापि प्रतिपादनं अर्थवादरूपतया सप्रयोजनम् । तत्र

---

1 'मता'–क. 2 'अपलापितोऽपि'–घ.

प्रमाणान्तरावगतमपि वस्तु शब्देन[1] प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति, सा भवेत् परिसङ्ख्या। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्। तथा उभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः ॥ क्रमेणोदाहरणम्—

## सङ्केतः

**परिसङ्ख्येति**। परिः वर्जने। ततश्च कस्यापि परिवर्जनेन कस्यचित् सङ्ख्यानम्—वर्ण्यत्वेन गणनम्, सम्यक् प्रथनं वा परिसङ्ख्या ॥ **प्रमाणान्तरावगतम्** प्रतिपाद्येन (प्रमाणान्तरेण) ज्ञानम्। **प्रयोजनान्तराभावात्**—सदृशवस्त्वन्तरव्यवच्छेदरूपं प्रयोजनं हित्वा नान्यत् प्रयोजनमस्तीत्यर्थः।

## मधुमती

अन्यप्रयोजनाभावात्, व्यवच्छेद एव प्रयोजनमिति समुदायार्थः। यद्यपि—

'तत्र चान्यत्र च प्राप्तौ परिसङ्ख्यानमिष्यते।'

इत्यन्यत्रोक्तम्। न चात्र द्युसरिन्नद्यन्तरतीरयोः युगपत्सेवनं[2] सम्भवति। तथापि व्यवच्छेदमात्रे परिसङ्ख्येत्यर्थः प्रकृतग्रन्थस्य ज्ञेयः। **व्यपोह्यमानस्य** प्रतिषिध्यमानस्य ॥

1 'शब्देन पुनः'–ख. 2 'युगपत्सम्बन्धः'–च.

किमासेव्यं पुंसां? सविधमनवद्यं द्युसरितः,
किमेकान्ते ध्येयं? चरणयुगलं कौस्तुभभृतः।
किमाराध्यं? पुण्यं, किमभिलषणीयं च? करुणा,
यदासक्त्या चेतः निरवधिविमुक्त्यै प्रभवति ॥५२७॥

किं भूषणं? सुदृढमत्र यशो, न रत्नं;
किं कार्यं? आर्यचरितं सुकृतं, न दोषः।
किं चक्षुरप्रतिहतं? धिषणा, न नेत्रं;
जानाति कस्त्वदपरः[1] सदसद्विवेकम्? ॥ ५२८ ॥

---

## सङ्केतः

**किमासेव्यमिति**। अत्र श्लोके शास्त्रप्रमाणज्ञातमपि गङ्गातटादिप्रश्ने सति सेव्यध्येयादितया क्रमेण कामिनीसेवातद्ध्यानपापहिंसानां निषेधायोक्तम्। निषेध्याश्चात्र गम्याः[2] ॥ **यदासक्त्येत्यत्र** यच्छब्दः पूर्वोक्तपरामर्शी ॥

एवं निषेध्यं गम्यत्वेनोक्त्वा वाच्यत्वेनाह—**किं भूषणमिति** ॥ **आर्यैः चरितं**—आर्यचरितम्। अत्र यशःप्रभृतेः भूषणत्वादिकं आगमतो ज्ञातमेव, **न रत्नं** इत्यादि निषेध्यं शाब्दम्, न तु पूर्वोदाहरण इव गम्यम्।

## मधुमती

**किमासेव्यमिति**। अत्र प्रश्नपूर्वकं कथनं, फलं प्रतीयमानं व्यवच्छेदः ॥

**किं भूषणं** इत्यत्र निषेध्यं शाब्दम्। कथनं च प्रश्नपूर्वकमेव ॥

---

1 'कस्त्वदितरः'–क. 2 'निषेधश्चात्र गम्यः'–ग.

कौटिल्यं कचनिचये
करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले
तरलत्वं नयनयोर्वसति ॥ ५२९ ॥
भक्तिर्भवे, न विभवे ;
व्यसनं शास्त्रे, न युवतिकामास्त्रे ।
चिन्ता यशसि, न वपुषि ;
प्रायः परिदृश्यते महताम् ॥ ५३० ॥

इति परिसङ्ख्यालङ्कारः[1]

---

## सङ्केतः

प्रश्नपूर्वकथने भेदद्वयीमुक्त्वा प्रश्नाभावे द्विभेदीमाह—**कौटिल्यमिति**। **कचनिचये** न तु वाचि चित्ते वा इति गम्यम्। **करादौ रागः** न परपुंसि, **कुचयोः काठिन्यं**[2] न चित्तावयवान्तरयोः, चक्षुषोः चापलम् नाचरणे। निषेध्याश्चात्र गम्याः ॥

**भक्तिरिति**। युवतिरूपं कामास्त्रं इति विग्रहः। अत्र **न विभवे** इत्यादिनिषेध्याः शाब्दाः ॥

श्लेषसम्पर्के तु अस्याः अतीव चारुत्वम्। यथा—

'यतिषु दण्डग्रहः, करपीडा विवाहे, चित्रे वर्णसङ्करः।'

इत्यादौ ॥ इति परिसङ्ख्या ॥

## मधुमती

**कौटिल्यमित्यादौ** प्रश्नं विना कथनम्, व्यवच्छेदो व्यङ्ग्यः। **भक्तिर्भवेत्यादौ** पूर्ववदेव कथनम्, व्यवच्छेदस्तु शाब्दः ॥ इति परिसङ्ख्या ॥

---

1 परिसङ्ख्या निषिध्यैकं एकस्मिन् वस्तुयन्त्रणम्। स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥ (कु) 2 'काठिण्यं–ध.

## ३९. कारणमालालङ्कारः

**यथोत्तरं चेत् पूर्वस्य**
**पूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात् ॥**

उत्तरमुत्तरं प्रति—यथोत्तरम् । उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण [1] जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ ५३१ ॥

'हेतुमता सह हेतोरभिधानमभेदतो हेतुः ।'

इति हेत्वलङ्कारः न लक्षितः । 'आयुर्घृतम्' इत्यादिरूपो ह्येषः न भूषणतां कदाचिदर्हति, वैचित्र्याभावादिति ॥

---

### सङ्केतः

हेत्वलङ्कारः रुद्रटोक्तः । आयुरिति । घृतं हेतुः, आयुः हेतुमत् । लक्षणया तयोरभेदः । इमे चैवं प्रयोगाः—

### मधुमती

**यथोत्तरमिति** । अत्र च कथितपदत्वं न दोषः, अनुवादरूपत्वात् । अत्र—"गौणसारोपसाध्यवसानयोः रूपकातिशयोक्तिवत्,[2] कार्यकारणभावसम्बन्धनिबन्धनशुद्धसारोपसाध्यवसानयोः हेत्वलङ्कारः" इति प्राचां मतं दूषयितुमुपन्यस्यति—**हेतुमतेति** । **वैचित्र्याभावादिति** । कारणता-

---

1 'गुणाधिके पुंसि'–क. 2 'क्तिविशेषरूप'–च.

अविरलकमलविलासः[1]
सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति
लोकोत्कण्ठाकरः कालः ॥ ५३२ ॥

---

सङ्केतः

'आयुर्घृतं, नदी पुण्यं, भयं चौरः, सुखं प्रिया ।
वैरं द्यूतं, गुरुर्ज्ञानं, श्रेयो ब्राह्मणपूजनम् ॥' इति ॥

आदिशब्दात् अन्येऽपि लक्षणाभेदाः षट् ज्ञेयाः । यथा—'कुन्ताः प्रविशन्ती'त्युपादानलक्षणा, 'गङ्गायां घोषः' इति लक्षणलक्षणा, 'गौर्वाहीकः' इति गौणी सारोपा, 'गौरय'मिति गौणी साध्यवसाना, 'आयुर्घृत'मिति शुद्धा सारोपा, 'आयुरेवेद'मिति शुद्धा साध्यवसानेति । परं गौण्यां या सादृश्याल्लक्षणा, तस्यां रूपकादिसद्भावात् वैचित्र्यम् । यथा—

इयं गेहे लक्ष्मीः, इयममृतवर्तिर्नयनयोः,
असावस्याः स्पर्शः वपुषि बहुलः चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकरसः,
किमस्या न प्रेयः? यदि परमसह्यस्तु विरहः ॥

इति । न त्वन्यस्याम् ॥

अविरलेति । अत्र वसन्तकालः हेतुः । शेषाः हेतुमन्तः । प्रभूतकमलविकासहेतुत्वात् अयं कालोऽपि विकासः । एवमग्रेऽपि । न त्वत्र

## मधुमती

प्रयोजकरूपाभिधानेन यत्र कार्यकारिता प्रतीयते तत्र वैचित्र्यसम्भवेन अलङ्कारत्वेऽपि,[2] यत्र कारण[3]मात्रप्रतिपादनं तत्र उक्तिवैचित्र्याभावात् नालङ्कारतेति भावः ।

भामहाद्युक्तमुदाहरणं अन्यथा समर्थयति—**अविरलेति** ।

---

1 'नलिनविलासः'—ख.　2 'त्वात्'—ज.　3 'कारणस्व'—च.

इत्यत्र तु[1] काव्यरूपतां कोमलानुप्रासमङ्गिन्नैव समाम्नासिषुः, न पुनः हेत्वलङ्कारकल्पनया इति पूर्वोक्तकाव्यलिङ्गमेव हेतुः ॥

इति कारणमालालङ्कारः[2]

---

## सङ्केतः

विकासयति[3] मदयति आनन्दयति पोषार्थतया बिभर्ति इति रुद्रटाशयेन व्युत्पत्तिः। हेतुहेतुमतोः अभेदाभावप्रसङ्गात्॥ समाम्नासिषुः भामहोद्भटाद्याः। अव्यभिचारितया विकासादेः नैरन्तर्येण करणं इह उपचार[4]-प्रयोजनं व्यङ्ग्यम्। तच्च गुणीभूतमिति[5] मङ्गिन्नैव इत्यत्र एवकारेण प्रतिपाद्यते। अस्मन्मते काव्यलिङ्गमेव हेतुः। रुद्रटस्तु भिन्नमूचे॥ इति कारणमाला॥

## मधुमती

ननु अनुप्रासस्य शब्दालङ्कारत्वात् अर्थालङ्काराभावे कथं काव्यता? तस्मात् अन्यस्यालङ्कारस्य अत्राभावात् अगत्या निरुक्त एव हेत्वलङ्कारः स्यात् इति चेत्—मैवम्। 'कामोद्दीपकः कालो वर्तते' इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्ता[6]लङ्कारस्यैव विद्यमानत्वात्॥

पूर्वोक्तेति। उक्तरूपसत्त्वात् इति भावः॥ इति कारणमाला॥

---

1 तु इति नास्ति–ख. 2 गुम्भः कारणमाला स्यात् यथा प्राक् प्रान्तकारणैः। नयेन श्रीः श्रिया त्यागः त्यागेन विपुलं यशः॥ (कु) 3 'विकाशयति'–ग. 4 'उपचारात्'–घ. 5 'भूततया'–ग. 6 'पर्यया'–च.

## ४०. अन्योन्यालङ्कारः

**क्रियया तु परस्परम् ॥ १२० ॥**
**वस्तुनोर्जननेऽन्योन्यम् ॥**

अर्थयोः एकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यनामा अलङ्कारः । उदाहरणम्—

हंसाणं सरेहिं सिरी
　सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिअ एए
　अप्पाणं णवर गरुअंति ॥ ५३३ ॥
[हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गरयन्ति ॥]

अत्र उभयेषामपि परस्परं जनकता, मिथः श्रीसारता-सम्पादनद्वारेण ॥

इत्यन्योन्यालङ्कारः [1]

---

### सङ्केतः

हंसाणेति । सार्यते सारीक्रियते । **गरयन्ति** गुरूकुर्वन्ति ।

### मधुमती

एकक्रियेति । एकजातीयक्रियामुखेनेत्यर्थः । एवं च पूर्वोत्पन्नयोरेव अन्योन्योपकारजननद्वारा [2] अन्योन्यमुपकारित्वाभिधानमित्यर्थः ।

ननु हंससरसोः न मिथो जन्यजनकभावः इत्यत आह—**अत्रोभयेषामिति** ॥ इत्यन्योन्यम् ॥

---

1 अन्योन्यं नाम यत्र स्यात् उपकारः परस्परम् । त्रियामा शशिना भाति शशी भाति त्रियामया ॥ (कु)　2 ‘उपकारद्वारा’–ज.

## ४१. उत्तरालङ्कारः

उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र
क्रियते तत्र वा सति ॥ १२१ ॥
असकृत् यदसम्भाव्यं
उत्तरं स्यात् तदुत्तरम् ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तत् एकं तावदुत्तरम् । उदाहरणम्—

वाणिअअ ! हत्थिदन्ता
कुत्तो अम्हाण वग्घकित्ती अ ? ।
जाव लुलिआलअमुही
घरम्मि परिसक्कए सोण्हा ॥ ५३४ ॥

---

### सङ्केतः

यत्तु—'हंसानां सरोभिः सरसां हंसैः श्रीस्सार्यते' इति सारणक्रिया एको धर्मः, ततो दीपकमिदम्, इति; तदसत् । हंससरसोः प्रकृतत्वात् । प्रकृताप्रकृतत्वे हि दीपकमिति ॥ इत्यन्योन्यम् ॥

उत्तरश्रुतीति । उत्तरश्रवणात् अनुक्तोऽपि प्रश्नः अवगम्यः इति तात्पर्यम् । तत्र वा इति प्रश्ने । उत्तरं उत्तराख्योऽलङ्कारः ॥

### मधुमती

पूर्ववाक्यमिति । प्रश्नवाक्यमित्यर्थः ।

[वाणिजक! हस्तिदन्ताः
कुतोऽस्माकं व्याघ्रकृत्तयश्च? ।
यावल्लुलितालकमुखी[1]
गृहे परिष्वष्कते[2] स्नुषा ॥]

'हस्तदन्तव्याघ्रकृत्तीनां अहमर्थी, ताः मूल्येन प्रयच्छ' इति क्रेतुर्वचनं अमुना वाक्येन सम्मुन्नीयते। न चैतत् काव्यलिङ्गम्। उत्तरस्य ताद्रूप्यानुपपत्तेः। न हि प्रश्नस्य प्रतिवचनं जनको हेतुः। नापि इद-मनुमानम्। एकधर्मिनिष्ठतया साध्यसाधनयोः अनिर्देशात् इति, अलङ्कारान्तरमेव उत्तरं साधीयः॥

---

### सुङ्केतः

वाणिजकेति। कृत्तिः चर्म। स्नुषा वधूः। परिष्वष्कते[3] क्रीडति। उत्तरस्य प्रतिवचनस्य ताद्रूप्यानुपपत्तेः काव्यलिङ्गरूपतानुपपत्तेः। कुत इत्याह—न हीति। न जनकः, किन्तु ज्ञापकः। एकधर्मीति। प्रश्नोत्तरवाक्यद्वयी भिन्नवक्तृगतेति भावः। प्रश्नः साध्यम्, उत्तरं साधनम्।

### मधुमती

वाणिजकेति। एवं च—'तदासक्तः मत्सुतः सम्प्रति मृगयां न करोति' इति ध्वन्योऽर्थः।

उत्तरस्येति। तद्रूप्यानुपपत्तेः कारणत्वानुपपत्तेः। एकेति व्याप्य-निर्देशादित्यर्थः।

---

1 'यावद्विलुलितालकमुखी'–क. 2 'प्रतिवसति,' 'परिष्वक्कते,' 'विलसति,' परिसङ्क्रामति इति पाठान्तराणि। 3 'परिष्वक्कते'–ग.

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असम्भाव्यरूपं प्रतिवचनं स्यात्, तत् अपरं उत्तरम् । अनयोश्च सकृदुपादाने न चारुताप्रतीतिः इति 'असकृत्' इत्युक्तम् । उदाहरणम्—

का विसमा ? देव्वगई, किं दुल्लहं ? [1] जं जणो गुणग्गाही ।
किं सोक्खं ? सुकलत्तं, किं दुःखं ? जं खलो लोओ ॥५३५॥
[का विषमा ? दैवगतिः, किं दुर्लभं ? यज्जनो गुणग्राही ।
किं सौख्यं ? सुकलत्रं, किं दुःखं ? [2] यत् खलो लोकः ॥]

प्रश्नपरिसङ्ख्यायां अन्यव्यपोहे एव तात्पर्यम्, इह तु वाच्ये एव विश्रान्तिरिति अनयोर्विवेकः ॥

इत्युत्तरालङ्कारः [3]

---

## सङ्केतः

**अनयोश्च** प्रश्नप्रतिवचनयोः ॥

**का विसमेति** । अत्र दैवगत्यादि निगूढत्वात् [4] असम्भाव्यरूपम् । प्रश्नपूर्विका परिसङ्ख्या **प्रश्नपरिसङ्ख्या** । अत्र प्रश्नात् उत्तरमात्रम्, न तु **अन्यव्यपोहः** इत्यर्थः ॥ इत्युत्तरम् ॥

## मधुमती

**प्रश्नादिति** । एतच्च तत्र वा सति इति सूत्र[5]प्रतीकार्थः । **न चारुतेति** । तत्प्रयोजकस्यैवालङ्कारत्वादिति भावः ।

**प्रश्नेति** । न हि सर्वत्र निषेध एव वाक्यार्थः,[6] विध्यपलापापत्तेः इति भावः ॥ इत्युत्तरम् ॥

---

1 'दुल्लद्धं'–क. 2 'किं' दुर्गाह्यं दुःखं'–ख. 3 किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम् । यत्रासौ वेतसी पान्थ! तत्रेयं सुतरा सरित् ॥ (छ) 4 'गूढत्वात्'–ग. 'अनिरूढत्वात्'–घ. 5 'मूलसूत्र'–च. 6 'वाक्यार्थे'–ज.

## ४२. सूक्ष्मालङ्कारः

**कुतोऽपि लक्षितः सूक्ष्मोऽ-
प्यर्थोऽन्यस्मै प्रकाश्यते ॥१२२॥
धर्मेण केनचित् यत्र
तत् सूक्ष्मं परिचक्षते ॥**

कुतोऽपि—आकारात् इङ्गिताद्वा । सूक्ष्मः—तीक्ष्णमतिसंवेद्यः ॥ उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैः
दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥५३६॥

अत्र आकृतिमवलोक्य कयाऽपि वितर्कितं पुरुषायितं असिलतालेखनेन वैदग्ध्यात् अभिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणिता, योग्यत्वात्[1] । यथावा—

---

### सङ्केतः

आकारादिति । अनेन कुतोऽपि इति व्याख्यातम् ॥ भिन्नम् व्याप्तम् । आकृतिम् स्वेदकृतकुङ्कुमभेदरूपम् ॥

### मधुमती

अत्रेति । कथं असिलतालेखनेन पुरुषायिताभिव्यक्तिः ? अत आह—पुंसामेवेति ॥ सूक्ष्म इत्यस्यार्थः तीक्ष्णेत्यादिना उक्तः[2] । आकारात् सूक्ष्मत्वोन्नयनम् । इङ्गितात् तदुन्नयनमाह—

---

1 'पाणियोग्यता'–क. 2 'पुंसामेवेति सूत्रप्रतीकार्थः'–च.

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ५३७ ॥

अत्र जिज्ञासितः सङ्केतकालः कयाचित् इङ्गितमात्रेण विदितः निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥

इति सूक्ष्मालङ्कारः [1]

---

## ४३. सारालङ्कारः

**उत्तरोत्तरमुत्कर्षः**
**भवेत् सारः परावधिः ॥१२३॥**

परः—पर्यन्तभागः अवधिः यस्य, धाराधिरोहितया: तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्—

---

### सङ्केतः

**सङ्केतेति** । **सङ्केतकाले** ज्ञातव्ये **मनः** यस्य स तथा ॥

**इङ्गितमात्रेण** विटगतेन भ्रूक्षेपादिरूपेण । इङ्गितम् साभिप्राया चेष्टा [2] ॥ इति सूक्ष्मम् ॥

### मधुमती

**सङ्केतेति** ॥ इति सूक्ष्मम् ॥

**धाराधिरोहितयेति** । तथा च—यत्र उत्तरोत्तरं प्रतीतः प्रकर्षः

---

1 सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् । मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥ (कु). 2 इङ्गितं इत्यादि नास्ति—ग,

राज्ये सारं वसुधा,
वसुन्धरायां पुरं, पुरे सौधम् ।
सौधे तल्पं, तल्पे
वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५३८ ॥

इति सारालङ्कारः [1]

---

## सङ्केतः

राज्य इति । न्याय्य एवार्थे सारशब्दः क्लीबः, अन्यत्र तु चिन्त्यः ॥ अत्र अन्यापोहकृतं सारत्वमिति परिसंख्यैवेत्येके । तदसत् । सारत्वे हि अत्र विश्रान्तिः, न त्वन्यव्यपोहे । अत्र वराङ्गनारूपपर्यन्तभागः [2] अवधिः ॥ इति सारः ॥

## मधुमती

वर्णनीयावधिः तत्रावमित्यर्थः ॥

राज्य इति । अत्र कथितपदत्वं न दोषः । प्रत्युत तेनैव सर्वनाम्ना वा शब्देन निर्देशः युक्तः ॥ अन्यथा उत्कर्षप्रतीतिस्थगनं स्यात् इत्यवधातव्यम् ॥ इति सारः ॥

---

3 उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते । मधुरं मधु, तस्माच्च सुधा, तस्याः कवेर्वचः ॥ (कु). 5 'पर्यन्तभाक्'–ग.

## ४४. असङ्गत्यलङ्कारः

**भिन्नदेशतयाऽत्यन्तं**
**कार्यकारणभूतयोः ।**
**युगपद्धर्मयोर्यत्र**
**ख्यातिः सा स्यादसङ्गतिः ॥१२४॥**

इह–यद्देशं कारणम्, तद्देशमेव कार्यं उत्पद्यमानं दृष्टम्। यथा–धूमादि॥ यत्र तु—हेतुफलरूपयोरपि[1] धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनं,[2] सा तयोः स्वभावोत्पन्नपरस्परसङ्गतित्यागात् असङ्गतिः। उदाहरणम्—

### सङ्केतः

**धूमादीति।** न हि शैले अग्निः महानसे धूमं जनयति इति भावः॥ **हेतुफलेति।** **हेतुः** कारणम्, **फलम्** कार्यम्। **अतिशयेनेति।** **अतिशयः** कारणस्य कारणान्तराद्वैलक्षण्यम्। तच्चेदम्—यत्—भिन्नदेशे कार्यजननम्, **युगपदिति।** त्रुटितं धूमखण्डं भिन्ने काले किल कारणाद्भिन्नदेशतयाऽप्युपलभ्यते। तत् युगपद्ग्रहणात् निषिद्धम्। **तयोः** कार्यकारणयोः। **स्वभावेति।** अन्येषु कार्यकारणेषु एकदेशतया उत्पन्नायाः[3] सङ्गतेः त्यागः॥

### मधुमती

**भिन्नदेशेति।** **कार्यकारणभूतयोः** द्वयोः अत्यन्तं भिन्नदेशतया **युगपत् ख्यातिः** यौगपद्यख्यातिः यत्र सैव[4] **असङ्गतिः** इत्यर्थः। तदेतत् व्याचष्टे—**इहेति।** अत्र च असङ्गतत्वेनाभिधानं अभिमतम्। तेन

1 'फलभूतयोरपि'–क. 2 'नानादेशमेव भासनम्'–क. 3 'उत्पन्नयोः'–ग. 4 'युगपद्यत्र ख्यातिः सैव'–च.

जस्सेव वणो तस्सेव
　　वेअणा भणइ जणो तं अलिअं ।
दन्तक्खअं कवोळे
　　बहूए वेअणा सवत्तीणं ॥ ५३९ ॥
[यस्यैव व्रणः तस्यैव
　　वेदना भणति जनः, तदलीकम् ।
दन्तक्षतं कपोले
　　वध्वाः, वेदना सपत्नीनाम् ॥ ]

---

## सङ्केतः

जस्सेअ इति । अत्र दन्तक्षतं कारणम्, वेदना कार्यम् । ते च

## मधुमती

कार्यकारणयौगपद्याभिधानरूपातिशयोक्तौ अतिव्याप्तिर्न भवतीति द्रष्टव्यम् ॥

जस्से अ इति । अत्र दन्तक्षतमित्यत्र 'दन्तव्रणं' इति[1] पाठो युज्यते । ईदृशविषये[2] तेनैव पदेन निर्देशस्य युक्तत्वात् ॥ एवं च—लक्ष्मीस्वयंवरंनाम्नि मत्कृते काव्ये जलविहारवर्णने यथा—

'रागशान्तिमधरस्तदा दधौ[3]
　　मुक्तिमाप सहसैव कुन्तलः[4] ।
रागिता नयनयोरुपागता
　　नीविका दृढमवाप बन्धनम् ॥'

इति । अत्र पद्येऽप्ययमेव । कार्यकारणभावोऽपि आकरोदाहरण इव प्रतीयमान

1 'दन्तक्षणं इति'–ज.　2 'तादृशि विषये'–च.　3 'दधौ'–च.
4 'कुम्भलः'–ज.

एषा च विरोधबाधिनी[1] न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु—विरोधित्वं एकाश्रयनिष्ठं अनुक्तमपि पर्यवसितम् । अपवादविषयपरिहारेण उत्सर्गस्य व्यवस्थितेः । तथा चैवं निदर्शितम् ॥

इत्यसङ्गत्यलङ्कारः[2]

---

## सङ्केतः

**भिन्नदेशस्थे ॥**

उत्सर्गस्येति । विरोधः सामान्यत्वात् उत्सर्गः । भिन्नाश्रयत्वेन उक्तत्वात् असङ्गतिर्विशेषः ॥ तथा चैवमिति । विरोधालङ्कारेऽप्येकाधारत्वं विरोधस्योक्तमित्यर्थः ॥ इत्यसङ्गतिः ॥

## मधुमती

एव । न च आकरोदाहरणे अपह्नुतिः[3] । प्रस्तुतनिषेधेऽपि अप्रस्तुताविधानात् । ननु विरोधस्योपलम्भात् विरोधालङ्कार एवात्र स्यात्? अत आह—एषा चेति । अत्र हेतुमाह—भिन्नेति । एवंच व्यधिकरणयोः यत्रैकाधिकरण्येन विरोधप्रतिसन्धानं स विरोधः[4] यत्र तु समानाधिकरणयोः वैयधिकरण्येन विरोधप्रतिसन्धानं सा असङ्गतिः इति द्रष्टव्यम् ॥

---

1 'विरोधबोधिनी'–ख. 2 विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः । विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा । अन्यत् कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥ अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकृथाः ॥ गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः ॥ (कु). 3 'हरणे पद्धतिः'–ज. 4 'न विरोधः'–च.

## ४५. समाध्यलङ्कारः

**समाधिः सुकरं कार्यं**
**कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन कर्त्रा यत् अक्लेशेन कार्यं आरब्धं समाधीयते[1] सः समाधिर्नाम । उदाहरणम्—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदं उदीर्णं घनगर्जितम् ॥ ५४० ॥

इति समाध्यलङ्कारः[2]

---

### सङ्केतः

साधनान्तरेति । कारणान्तरकृतोपकारेण सम्यगाधानं **समाधिः** ॥

मानमिति । अत्र मानापनयनं **कार्यम्** । **पादपातः हेतुः** । घनगर्जितं हेत्वन्तरम् । यस्मात् अक्लेशेन **कार्यं सुकरं** स्यादित्यर्थः ॥ इति समाधिः ॥

### मधुमती

नन्वेवं—विषयभेदात् नोत्सर्गापवादभावः, विषयैक्य एव तत्सद्भावात् इति चेन्न । विरोधस्य हि विरोधसामान्यमेव विषयः, असङ्गतेश्च कार्यकारणयोः भिन्नदेशतानिबन्धनो विरोधविशेषः । अत एव विशेषविषयया अनया सामान्यविषयविरोधबाधः[3] इति द्रष्टव्यम् ॥ इत्यसङ्गतिः ॥

समाधिरिति । 'तत्सिद्धिहेतोरेकस्मिन्' इतिलक्षिते (कारण)

---

1 'कारब्धमाधीयते'–क. 2 समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः । उत्कण्ठिता च तरुणी जगामास्तं च भानुमान् ॥ (रु). 3 'विरोधः'–च.

## ४६. समालङ्कारः

**समं योग्यतया योगः**
**यदि सम्भावितः क्वचित् ॥१२५॥**

इदमनयोः श्लाघ्यं इति योग्यतया सम्बन्धस्य नियतविषयं अध्यवसानं चेत् तदा समम्। तत् सद्योगे असद्योगे च [1]। उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य।
जातं दैवात् सदृशमनयोः सङ्गतं यत्तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥५४१॥

---

### सङ्केतः

**योग्यतयेति**। वरस्य वरं योग्यम्, हीनस्य च हीनमेव योग्यम् इति योग्यता।

**धातुरिति**। अत्र वरं वरेण सङ्घटितम्।

### मधुमती

समुच्चये अतिव्याप्तिः। तत्र एककार्यानुकूलतया कारणानां अभिधानम्, अत्र तु कारणोपनिपातेन[2] कार्यस्य सुकरत्वाभिधानमिति भेदात् ॥ इति समाधिः ॥

**श्लाघ्यं** उचितम्। **सद्योग इति**। सता उसतः, असता सतश्च[3] योगः तुल्यत्वादेव उचितः। अत एव सदसतोर्योगे नायम्, तस्य

---

1 तत् इत्यादि नास्ति—क. 2 'कारणमेघकोपनिपातेन'—ज. 3 'असता असतश्च'—च.

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५४२ ॥

इति समालङ्कारः[1]

---

## सङ्केतः

चित्रमिति । अत्र हीनं हीनेन सङ्घटितम्, निम्बकानां तथारूपत्वात् ॥ इति समम् ॥

## मधुमती

अनुचितवात् । समुच्चये[2] सतोः असतोर्वा[3] कारणयोः समुच्चयः, अत्र तु तदन्ययोः[4] तथाभूतयोरपि योगस्य उचितत्वाभिधानमिति विशेषः ॥ इति समम् ॥

---

1 समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः । स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ सारूप्यमपि कार्यस्य कारणेन समं विदुः । नीचप्रवणता लक्ष्मीः ! जलजायास्तवोचिता ॥ विनाऽनिष्टं च तत्सिद्धिः यदर्थं कर्तुमुद्यमः । युक्तो वारणलाभोऽयं स्यान्न ते वारणार्थिनः ॥ शङ्खं न खलु कर्तव्यमिति पित्रा नियोजितः । तदेव शङ्खं कृतवान् पितुराज्ञा न लङ्घिता ॥ (कु) 2 'समुच्चितयोः'–च. 3 'समुच्चये सतोर्वा'–ज. 4 'तदन्ययोगः'–ज.

## ४७. विषमालङ्कारः

क्वचिद्यदतिवैधर्म्यात्
न श्लेषो घटनामियात् ।
कर्तुः क्रियाफलावाप्तिः
नैवानर्थश्च यद्भवेत् ॥१२६॥

गुणक्रियाभ्यां कार्यस्य
कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे यत्
स एष विषमो मतः ॥१२७॥

(१) द्वयोः अत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते;[1] (२) यच्च किञ्चिदारभमाणः कर्ता क्रियायाः प्रणाशात् न केवलमभीष्टं तत्फलं

---

### सङ्केतः

क्वचिदिति। तयोः कार्यकारणयोः। कारणसक्तौ क्रियागुणौ कार्यसक्तौ क्रियागुणौ च मिथो विरुध्येते इत्यर्थः ॥

### मधुमती

अनुपपद्यमानयैव इत्यन्तं अतिवैधर्म्यादित्यस्यार्थः। प्रतीयते

---

1 'योगो न प्रतीयते'–क.

न लभेत, यावत्[1] अप्रार्थितमप्यनर्थं विषयं आसादयेत्; (३-४) तथा—सत्यपि कार्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परं विरुद्धतां व्रजतः, स समविपर्ययात्मा चतूरूपो विषमः ॥ क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो[2] मदनानिलः ॥ ५४३ ॥

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५४४ ॥

---

## सङ्केतः

शिरीषादिति । अत्र मृद्वङ्गी-स्मरानलयोः अननुरूपत्वात् वैषम्यम् ॥

तमन्यः इति । सिंहिकासुतौ राहुसिंहौ । अत्र शशस्य स्वाधार-बाधात् आश्रयणक्रियाध्वंसः, स्वस्य महान् अनर्थश्च ॥

## मधुमती

व्यज्यते । शब्दात्[3] तथात्वेन योगस्य अनुपस्थितत्वात्[4] व्यङ्ग्यता । परस्परेति । गुणेन गुणस्य, क्रियया क्रियायाश्चेत्यर्थः ॥

शिरीषादपीति । तथा च अनयोर्योगः अनुचितः इति व्यञ्जनया प्रतिपाद्यते ॥

सिंहिकेति । अत्र च आश्रयनाशेन न केवलं आत्मरक्षारूपेष्टान-वाप्तिः, प्रत्युत आश्रयविनाशाख्याधिकानर्थस्य प्राप्तिश्चेति वैषम्यम्[5] ॥

---

1 'तत्फलं लभते यावत्'–ख. 2 'कुकूलाग्निदुस्सहो'–क. 3 'शब्दाः'–च. 4 'तत्वाच्च'–च. 5 'तथा च आश्रयनाशेनात्मत्राणलक्षणेष्टानामपि चाश्रयनाश-रूपानर्थप्राप्तिश्चेति द्रष्टव्यम् ।'–च.

सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं[1] प्रसूते ॥ ५४५ ॥

आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितः तापयतितरां शरीरं मे ॥ ५४६ ॥

---

## सङ्केतः

तमालेति । अत्र कृष्णगुणात् पाण्डुगुणोत्पत्तौ,[2] कार्यगुणः कारणगुणेन विरुद्धः ॥

आनन्दमिति । अत्र कारणानन्द[3]कार्यतापक्रिये मिथो विरुद्धे । अत्र च स्त्री कारणम्, विरहः कार्यम् ॥

एतल्लक्षणानुसारेणाह—एवमिति । अत्र हीनो गुरुकार्यकारी इति वैषम्यम् । **असकलया** अपूर्णया ॥

अत्र अपिशब्दात् अधिकेन स्वल्पकार्यकरणे, विपरीतकार्यनिष्पत्त्यर्थं प्रयत्ने च विषमं मन्तव्यम् । आद्यं यथा—

'किं ददातु ? किमश्नातु ? भर्तव्यभरणाकुलः ।
उदारमतिरासेऽपि जगत्त्रितयमात्रके ॥ '

## मधुमती

सद्य इत्याद्युदाहरणे[4] कार्यकारणयोः यशः-कृपाणलेखयोः पाण्डुरनीलरूपौ गुणौ विरुद्धौ । आनन्देत्यत्र तु[5] क्रिययोर्विरोधः प्रतीयमानः ।

---

1 'लोकाभरणं'–ख. 2 'णोत्पत्तिः'–ग. 3 'आनन्ददान'–घ.
4 'अत्र प्रथमोदाहरणे'–च. 5 'द्वौ । द्वितीये'–च.

अत्र आनन्ददानं शरीरतापेन विरुद्धयते ॥ एवम्—

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा ॥ ५४७ ॥

इत्यादावपि विषमत्वं यथायोगं अवगन्तव्यम्[1] ॥

इति विषमालङ्कारः[2]

———

---

## सङ्केतः

द्वितीयं यथा—

" उन्नत्यै नमति प्रभुम्, प्रभुगृहान् द्रष्टुं बहिस्तिष्ठति,
स्वद्रव्यव्ययमातनोति जडधीः आगामिवित्तेप्सया ।
प्राणान् प्राणितुमेव मुञ्चति रणे, क्लिश्नाति भोगेच्छया,
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥ "

इति विषमम् ॥

## मधुमती

अत एव नात्र विरोधः असङ्गतिर्वा । विरोधस्य अविवक्षितत्वात् कारणरूपाननुकरणमात्रस्यैवालङ्कारत्वात् ॥

इत्यादावपीति । अत्र जगदाधारपरमेश्वरलोचनकरणकस्त्रीकर्तृक-

---

1 'अनुमन्तव्यम्'—क. 2 विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः । क्वेयं शिरीषमृदङ्गी ? क्व तादृङ्मदनज्वरः ? ॥ विरूपकार्यस्योत्पत्तिः अपरं विषमं मतम् । कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥ अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् । भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः ॥ गोपाल इति कृष्ण त्वं प्रचुरक्षीरवाञ्छया । श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वया कृतम् ॥ (कु)

## ४८. अधिकालङ्कारः

महतोः यन्महीयांसौ
आश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां
तनुत्वेऽप्याधिकं तु तत् ॥ १२८ ॥

आश्रितं आधेयम्, आश्रयः तदाधारः, तयोः महतोरपि विषये तदपेक्षया तनू अपि आश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधं अधिकं नाम ॥ क्रमेणोदाहरणम्—

अहो! विशालं भूपाल! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ५४८ ॥

---

### सङ्केतः

मातीति । अत्र मातुमशक्यत्वेन आधेयरूपः यशोराशिः

### मधुमती

पानयोः[1] अत्यन्तविलक्षणतया अनुपपद्यमानतयैव योगः प्रतीयते इति विषमत्वं अवगन्तव्यम् ॥ इति विषमम् ॥

प्रस्तुतेति । यथाक्रममिति । अधेयाधिक्याभिधानेन आश्रयस्य प्रकर्षविवक्षा, आश्रयाधिक्याभिधानेन तु आधेयस्य प्रकर्षविवक्षेत्यर्थः ।

अहो विशालमिति । अत्र यशोराशेः वस्तुतः क्वाचित्कत्वेन[2]

1 ‘स्त्रीकपालयोः’–ज. 2 ‘कादाचित्कत्वेन’–च.

युगान्तकालप्रतिसंहृतात्मनः
जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषः
तपोधनाभ्यागमसम्भवा मुदः ॥ ५४९ ॥

इत्यधिकालङ्कारः [1]

---

## सङ्केतः

महान् । जगत्त्रयं तु त्रिसंख्यत्वात् तुच्छम् । परं महतोऽपि यशोराशेः आधारतया महीयस्त्वेनोक्तम् । अन्यथा मानस्य असम्भवात् ॥

**युगान्तेति** । अत्र विष्णुतनुः आधारः । स च महान् । स्वल्पाः मुदस्तु आधेयाः । परं तनौ अमानेन [2] महत्त्वं नीताः ॥ इत्यधिकम् ॥

## मधुमती

भुवनत्रयापेक्षया तनुत्वेऽपि,[3] तदुत्कर्ष[4]विवक्षया तन्मानमेव भुवनत्रयविशालत्वे हेतुर्वर्णितः ॥

**युगान्तेति** । अत्र तपोधनाभिगमन[5]प्रभवमुदः अल्पशरीरवृत्तित्वेन आधिक्यात् कैटभारिशरीरस्य तनुत्वेऽपि मुदः प्रकर्षविवक्षया तच्छरीरमानमेव हेतुतयोपात्तमिति मन्तव्यम् ॥ इत्यधिकम् ॥

---

1 अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् । ब्रह्माण्डानि जले यत्र यत्र मान्ति न ते गुणाः ॥ पृथ्वाधेयाद्यधाराधिक्यं तदपि तन्मतम् । कियद्वाग्ब्रह्म ? यत्रैते विश्राम्यन्ति गुणास्तव ॥ (कु). 2 'परं त्वमानेन'–ग. 3 'यातनुत्वेऽपि'–ज. 4 'तद्वत् प्रकर्ष'–च. 5 'धनागमन'–ज.

## ४९. प्रत्यनीकालङ्कारः

**प्रतिपक्षमशक्तेन**
**प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै**
**प्रत्यनीकं तदुच्यते ॥१२९॥**

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन[1] केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य[2] तिरस्करणं, तत् अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकं अभिधीयते। यथा—अनीके अभियोज्ये तत्प्रतिनिधिभूतं अपरं मूढतया[3] केनचित् अभियुज्यते, तथा इह

---

### सङ्केतः

तदीयस्येति । प्रतिपक्षप्रसक्तस्येत्यर्थः । तत्स्तुत्यै प्रतिपक्षस्तुत्यै । रिपुं बलवत्त्वात्[4] तिरस्कर्तुमशक्तः, यदा तदाश्रितं कोऽपि तिरस्करोति, तदा अयमलङ्कारः इत्यर्थः ॥

### मधुमती

प्रतिकर्तुमिति । प्रतिपक्षं[5] प्रतिकर्तुं अशक्तेन तदीयस्य तत्स्तुत्यै या तिरस्क्रिया तत् प्रत्यनीकमुच्यते इत्यन्वयः । तदेतत् व्याचष्टे—न्यक्कृतीति । प्रत्यनीकपदव्युत्पत्तिमाह—तदनीकेति ॥

---

1 'मसहनेन'–क. 2 'तदाश्रयस्य'–ख. 3 'गूढतया'–क. 4 'बलित्वात्'–ग. 5 'विपक्षं'–च.

प्रतियोगिनि विजये तदीयोऽन्यः विजीयते इत्यर्थः ॥

उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः
सा च सुन्दर! भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां
तापयत्यनुशयादिव[1] कामः ॥ ५५० ॥

यथा वा—

यस्य किञ्चिदपकर्तुमक्षमः
कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती
राहुरिन्दुमधुनाऽपि बाधते ॥ ५५१ ॥

## सङ्केतः

त्वमिति । अत्र 'तां त्वयि[2] रक्तां कामः शरैः हन्ति' इति वास्तवोऽर्थः पश्चादुत्प्रेक्ष्यते । निर्जितत्वोत्थादनुशयादिवेति व्यङ्ग्योत्प्रेक्षाऽपि । 'त्वं भवति' इति च प्रक्रमभङ्गः ।

यथावेति । अत्र राहोः विष्णुः बलवान् प्रतिपक्षः इति विष्णवशक्तो राहुः,[3] तदीयं वक्त्रं, तस्य च सम्बन्धी सादृश्यात् इन्दुः । तत्पराभवात्

## मधुमती

नन्वत्र कृष्णस्य चन्द्रमसा समं न स्वस्वामिभावादिः सम्बन्धः प्रतीयते । तथाच कथं तदीयत्वम्? अतदीयत्वेन च[4] कथ प्रत्यनीकत्वम्[5]? अत

1 'ताडयत्यनुशयादथ'–क. 'ताडयत्यनुशयादिव'–ख. 2 'तां तव'–ग. 3 'यथा वेति । अत्र विष्णुः शक्तः शत्रुः'–घ. 4 'कथं तदीयत्वमतदीयत्वं च'–ज. 5 'नीकम्'–च.

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात् ॥

इति प्रत्यनीकालङ्कारः[1]

---

## ५०. मीलितालङ्कारः

**समेन लक्ष्मणा वस्तु**
**वस्तुना यन्निगूह्यते ।**
**निजेनागन्तुना वापि[2]**
**तन्मीलितमिति स्मृतम् ॥१३०॥**

**सहजं आगन्तुकं वा किमपि[3] साधारणं यत् लक्षणं, तद्द्वारेण यत् किञ्चित् केनचिद्वस्तु वस्तुस्थित्यैव**

---

### सङ्केतः

विष्णोः प्रकर्षावगतिः । तदाह—**इन्दोरिति** । सम्बन्धि[4] वक्त्रम् । तेन हि इन्दोः सम्बन्धः, साम्यात् । तदीयता विष्णुसक्तता ॥ इति प्रत्यनीकम् ॥

**समेन लक्ष्मणा** साधारणेनेत्यर्थः । **निजेन** स्वाभाविकेन । वस्तुना

### मधुमती

आह—**इन्दोरिति**[5] । तथाच—कृष्णवक्त्रयोः अवयवावयविभावः अवच्छेद्यावच्छेदकभावो[6] वा सम्बन्धः वक्त्रेन्द्वोस्तूपमानोपमेयभावः इति साक्षात् सम्बन्धाभावेऽपि परम्परासम्बन्धात् तदीयत्वमित्यर्थः ॥ इति प्रत्यनीकम् ॥

---

1 प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः । जैत्रनेत्रानुगौ कर्णौ उत्पलाभ्यामधः कृतौ ॥ (कु). 2 'नागन्तुकेनाऽपि'–क. 3 'वाऽपि'–ख. 4 'सम्बद्धं'–ग. 5 'इन्दाविति'–ज. 6 'यविभावः अवच्छेदकभावो'–च.

बलीयस्तया तिरोधीयते तत् मीलितं इति द्विधा स्मरन्ति ॥ क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ, मधुरवक्रवर्णाः[1] गिरः,
विलासभरमन्थरा गतिः, अतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः[2] स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५५२ ॥

अत्र दृक्तरलतादिकं अङ्गस्य लिङ्गं स्वाभाविकम्, साधारणं च मदोदयेन; तत्राप्येतस्य दर्शनात् ॥

---

## सङ्केतः

वस्त्वन्तरस्य तिरोधाने मीलितं सान्वयं नाम । **बलीयस्तया** इति वचनात् न सामान्यालङ्कारता । तत्र हि साधारणगुणाश्रयेण भेदानुपलक्षणम्, न तु उत्कृष्टगुणेन निकृष्टस्य तिरोधानम् ॥

**अपाङ्गेति** । अत्र दृष्टितरलत्वादिकं सहजं मदोदयकृतस्य दृष्टितरलत्वादेः तिरोधायकम् ॥ **तत्रापीति** । मदोदयेऽपीत्यर्थः । **एतस्य** दृष्टितरलत्वादेः ॥

## मधुमती

**तिरोधीयत इति** । तथाच—एकेन अपरस्याभिभवः मीलितम् । अभिभवश्च—बलवत्सजातीयग्रहणकृतं ग्रहणम् । अतो न क्वापि दोषः[3] ॥ इति मीलितम् ॥

---

1 'वर्णवक्राः'–क. 2 'मृगदृशां'–क. 3 'ग्रहणकृतमग्रहणमत इच्छाविशेषः'–ज.

ये कन्दरासु निवसन्ति सदा हिमाद्रेः
त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो! बत भियां न बुधोऽप्यभिज्ञः ॥५५३॥

अत्र तु[1] सामर्थ्यादवसितस्य शैत्यस्य आगन्तुकत्वात् तत्प्रभवयोरपि कम्पपुलकयोः ताद्रूप्यं समानता च,[2] भयेष्वपि तयोः उपलक्षितत्वात् ॥

इति मीलितालङ्कारः[3]

---

## सङ्केतः

**बुधोऽपीति** । शत्रुसम्बन्धित्वेन भियां बुधोऽपि कलने न दक्षः इति भावः । **सामर्थ्यात्** हिमाद्रिगुहानिवासरूपात् । **तत्प्रभवयोः** शैत्यजयोः । **ताद्रूप्य** आगन्तुकरूपत्वम्[4] । **समानतया** साधारण्येन । **तयोः** कम्पपुलकयोः । **उपलक्षितत्वात्** दृष्टत्वात् ॥ इति मीलितम् ॥

---

1 तु इति नास्ति–ख. 2 'समानतया च'–ख. 3 मीलितं यदि सादृश्यात् भेद एव न लक्ष्यते । मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ (कु). 4 'रूपकत्वम्'–ग.

## ५१. एकावल्यलङ्कारः

स्थाप्यतेऽपोह्यते वाऽपि
　　यथापूर्वं परं परम् ।
विशेषणतया यत्र
　　वस्तु, सैकावली द्विधा ॥ १३१ ॥

पूर्वं पूर्वं प्रति यथोत्तरस्य[1] वस्तुनः वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति, सा द्विधा बुधैः एकावली भण्यते । क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि
　　वराङ्गनाः रूपपुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासं
　　अस्त्रं विलासाः कुसुमायुधस्य ॥ ५५४ ॥

---

### सङ्केतः

**स्थापनं** विधिः, **अपोहः** निषेधः अन्यव्यवच्छेदः । सनियमो विधिरिति यावत् ।

### मधुमती

**पूर्वमिति** । कारणमालायां तु पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुता । अत्र तु उत्तरोत्तरस्य पूर्वपूर्वं प्रति विशेषणतया व्यवस्थापनं कर्तुमर्हति । अतः कथितपदत्वं च न दोषः वीप्सया बाहुल्येन ॥ इत्येकावली ॥

---

1 'यत्रोत्तरोत्तरस्य'–क.

न तज्जलं यन्न सुचारु[1]पङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यः
न गुञ्जितं तन्न जहार यन्मनः ॥५५५॥

पूर्वत्र—पुराणां वराङ्गनाः, तासां अङ्गविशेषणमुखेन रूपम्, तस्य विलासाः, तेषामप्यस्त्रं इत्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं[2] योज्यम् ॥

इत्येकावल्यलङ्कारः[3]

---

## ५२. स्मरणालङ्कारः

**यथानुभवमर्थस्य दृष्टे**
**तत्सदृशे स्मृतिः ॥ स्मरणम् ।**

यः पदार्थः केनचिदाकारेण नियतः यदाकदाचित्

---

### सङ्केतः

**न तदिति ।** अत्र जलादीनां सुचारुपङ्कजादीनि पराणि विशेषणानि निषेध्यत्वेन निबद्धानि ॥ इत्येकावली[4] ॥

**दृष्टे इति ।** उपलब्धिमात्रे अत्र दृशिः ।

### मधुमती

**स्मृतिरिति ।** स्मृतिपदेनात्र तज्जनकं संस्कारमुपलक्षयति । तथा

---

1 'यत्र न चारु'–क. 2 'प्येवमेव'–क. 3 गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता । नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भदोलिनौ । दोःस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ । जानुनी रत्नमुकुराकारे तस्य महीभुजः ॥ (कु). 4 स्थापनमित्यादि नास्ति–ग.

अनुभूतोऽभूत्, सः कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत् तथैव स्मर्यते, तत् भवेत् स्मरणम्। उदाहरणम्—

निम्ननाभिकुहरेषु[1] यदम्भः
प्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहरुतैः[2] सुरनार्यः
स्मारिताः सुरतकण्ठरुतानाम् ॥ ५५६ ॥

---

## सङ्केतः

तद्भवैरिति। प्लाविताम्भोभवैरित्यर्थः। कुहरुतानि। कुहकुहशब्दाः निम्ननाभिदेशोत्थाः। स्मारिताः इति ह्रस्वाप्राप्तिः। घटादिपाठे व्यवस्थितविभाषितस्य वा इत्यस्यानुवृत्तेः[3]। सादृश्यं विना तु स्मृतिः नालङ्कारः। यथा—

'लावण्यं तत्, असौ कान्तिः, तद्रूपं, स वचःक्रमः'

इत्यादि,

'अत्रानुगोदं मृगयानिवृत्तः
तरङ्गवातैरपनीतखेदः।
रहस्तदुत्सङ्गनिषण्णमूर्धा
स्मरामि वानीरगृहेषु सुप्तम् ॥'

इत्यादि च[4]।

## मधुमती

च संस्कारोद्बोधकः इत्यर्थः पर्यवस्यति। तत्समाने इति। एवं च सदृश-

1 'विवरेषु'–ग. 2 'कलरुतैः'–ग. 3 'स्मारिता इति ह्रस्वप्राप्तिः'–घ. 4 अत्रानुगोदमित्यादि नास्ति–ग.

यथा वा—

करजुअगहिअजसोआत्थण-
मुहविणिवेसिआहरफुडस्स ।
संभरिअपंचजण्णस्स
णमह कण्हस्स रोमांचं ॥ ५५७ ॥

[करयुगगृहीतयशोदास्तन-
मुखविनिवेशिताधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य
नमत कृष्णस्य रोमाञ्चम् ॥

इति स्मरणालङ्कारः [1]

———

### सङ्केतः

करजुअ इति । अत्र पूर्वानुभूतस्य स्मरणम् । पूर्वत्र तु इहभवानुभूतस्येति ॥ इति स्मरणम् ॥

### मधुमती

दर्शनोद्बुद्धः संस्कारः[2] यत्र स्मृतिं जनयति, तत्रैवायमलङ्कारः, न तु चिन्ताद्युद्बुद्धसंस्कारजन्याऽपि[3] स्मृतिः । वैचित्र्याभावात् । तस्यास्तु व्यभिचारिभावे अन्तर्भावः इति भाव्यम् ॥ इति स्मरणम् ॥

1 स्यात् स्मृतिभ्रान्तिसन्देहैः तदङ्कालङ्कृतित्रयम् । पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥ (कु). 2 'एवं च सदृशदर्शिनः'–ग. 3 अपि इति नास्ति–घ.

## ५३. भ्रान्तिमदलङ्कारः

### भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

तदिति अन्यत् अप्राकरणिकं निर्दिश्यते। तेन समानं अर्थादिह प्राकरणिकं आश्रीयते। तस्य तथाविधस्य दृष्टौ सत्यां यत् अप्राकरणिकतया संवेदनं सः भ्रान्तिमान् ॥ न चैष रूपकं प्रथमा वा,[1] तत्र वस्तुतो भ्रमस्याभावात्, इह च अर्थानुगमनेन संज्ञायाः प्रवृत्तेः तस्य[2] स्पष्टमेव प्रतिपन्नत्वात् ॥ उदाहरणम्—

---

#### सङ्केतः

**प्रथमा वेति।** निगीर्याध्यवसानरूपेत्यर्थः। **संज्ञायाः**=भ्रान्तिः चित्तधर्मः अस्ति यत्र भणितिगुम्भे सः भ्रान्तिमान् इत्येवंरूपायाः। तस्य भ्रमस्य। भ्रान्तिश्चात्र प्रतिभोत्था सादृश्यहेतुका च ग्राह्या, न स्वरसोत्था, शुक्तिकारजतवत्। नापि प्रहारादिहेतुका, मूर्छायां वस्तुभ्रमणवत् ॥ इति भ्रान्तिमान् ॥

#### मधुमती

तदितीति[3]। एवं च प्राकरणिकार्थदर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया यत् प्राकरणिकज्ञानम्, तत् भ्रान्तिमान् इत्यर्थः। एवं च— तस्यैव तत्तया स्मृतिः स्मरणम्, अन्यस्य अन्यथा भानं भ्रान्तिमान्; इति भेदात् विसदृश[4]समुत्थत्वेन उभयोर्भेदकाभावः नाशङ्कनीयः। एवं च

---

1 'प्रथमातिशयोक्तिर्वा'–क. 2 'तस्याः'–ख. 3 'तदिति'–च.
4 'मान् सदृश'–ज.

कपाले मार्जारः पय इति करान् लेढि शशिनः
तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति ।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो ! विभ्रमयति[1] ॥५५८॥

इति भ्रान्तिमदलङ्कारः[2]

---

५४. प्रतीपालङ्कारः

**आक्षेप उपमानस्य**
**प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या**
**तिरस्कारनिबन्धना[3] ॥१३३॥**

---

## मधुमती

यत्र अनुभूयमानारोपः तत्र,[4] यत्र वा प्रकारान्तरेण स्मरणं तत्रापि नायमलङ्कारः । यथा—

'दामोदरकराघातविह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभःस्थलम् ॥'

इत्यादौ ॥ रूपके अतिव्याप्तिं निरस्यति—**तत्रेति** । तस्य आहार्यारोपरूपतया विशेषदर्शनाप्रयोज्यत्वात्[5] । तज्जन्यज्ञानस्यैव भ्रमत्वाभिधानात् । वस्तुतस्तु तत्र न भ्रमः इति प्रागुक्तमेव ॥ इति भ्रान्तिमान् ॥

---

1 'विप्लवयति'–क. 2 स्यात् स्मृतिभ्रान्तिसन्देहैः तदङ्गालङ्कृतित्रयम् । अयं प्रमत्तमधुपः त्वन्मुखं वेत्ति पङ्कजम् ॥ (कु). 3 'निबन्धनम्'–ख. 4 'तत्रायम्'–ज. 5 'नाप्रयोजकत्वात्'–च.

अस्य धुरं सुतरां उपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन[1] यत् उपमानं आक्षिप्यते, यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमानान्तरविवक्षया अनादरार्थं उपमेयभावः कल्प्यते, तत् उपमेयस्योपमानप्रतिकूलवर्तित्वात्[2] उभयरूपं प्रतीपम् ॥ क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः? किमेष विहितः पूषा? किमुत्पादितं
चिन्तारत्नमदो[3]? मुधैव किममी सृष्टाः कुलक्ष्माभृतः? ॥५५९॥

---

### सङ्केतः

**कैमर्थक्येनेति**। कोऽर्थः अनेनेति भावः। **आक्षिप्यते** आलोच्यते। **तस्यैव** उपमानस्यैव। **उपमानान्तरविवक्षया**—मुखादेः अतिचारुतयोपमानकल्पनया[4] ॥

**लावण्येति**। अत्र इन्द्वादिकं उपमानं कैमर्थ्येनाक्षिप्तम्। यथासङ्ख्यालङ्कारोऽप्यत्रास्ति ॥

### मधुमती

**आक्षेप इति**। **उपमानस्य आक्षेप** एव प्रथमः प्रतीपः[5]। तिरस्कारार्थं तस्यैवोपमानस्य यत् उपमेयता कल्प्यते[6] सः द्वितीयः प्रतीपः इत्यर्थः। आक्षेपशरीरमाह—**अस्येति**। **कैमर्थ्यं** किम्प्रयोजनता ॥ प्रतीपपदव्युत्पत्तिमाह—**तदिति**।

**लावण्यौकसि**[7] इत्यादौ आद्यः ॥

---

1 'प्रौढमित्यानर्थक्येन'—क. 'प्रौढमिति कैमर्थक्येम'—ख. 2 'मानं प्रति प्रतिकूलं'—क. 3 'चिन्तारत्नमहो'—ख. 4 'मानाकल्पनया'—ग. मानान्तरकल्पनया—घ. 5 'एवं प्रतीपः'—च. 6 'यद्वस्मेयता कल्पते'—ज. 7 'लावण्यौकनिधी'—च.

ए एहि दाव सुन्दरि !
कण्णं दावूण सुणसु वअणिज्जं ।
तुज्झ मुहेण किसोअरि !
चंदो उअमिज्जइ जणेण ॥५६०॥

[अयि ! एहि तावत् सुन्दरि !
कर्णं दत्त्वा शृणुष्व वचनीयम् ।
तव मुखेन कृशोदरि !
चन्द्र उपमीयते जनेन ॥]

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या 'वअणिज्जं' इति वचनीयपदाभिव्यङ्ग्यः तिरस्कारः ॥

---

## सङ्केतः

ए एहीति । अयि! एहीत्यर्थः । अत्र उपमानतया ख्यातस्य इन्दोः अपकर्षार्थं उपमेयत्वमुक्तम् । मुखस्य अर्थादुपमानत्वम् । अत्र चन्द्रस्य अल्पगुणत्वात् सादृश्याभावात् औपम्यस्य अनिष्पत्तिः ॥

## मधुमती

ए एहि इत्यादौ द्वितीयः । उपमेयोपमायां मिथः तथा प्रत्ययः, अत्र तु तदभावः । न च उपमेयवैलक्षण्यप्रतीत्या व्यतिरेकः, तत्र सादृश्यप्रतीतेः; अत्र तु[1] तदभावात्[2] । यत् वक्ष्यति—'उपमित्यनिष्पत्त्या' इति ॥

---

1 'तत्र तु'–च. 2 'तदभावात् तत्प्रतिपादकेवादिशब्दाभावात्'–च.

क्वचित्तु निष्पन्नैव उपमितिक्रिया अनादरनिबन्धनम् । यथा—

गर्वमसंवाह्यमिमं लोचन-
युगलेन किं वहसि भद्रे[1] ! ।
सन्तीदृशानि दिशि दिशि
सरस्सु ननु नीलनलिनानि ॥५६१॥

इह उपमेयीकरणमेव उत्पलानां अनादरः ।

अनयैव रीत्या यत् असामान्यगुणयोगात् नोपमान-

---

## सङ्केतः

गर्वमिति । भद्रा[2] वराकी । अत्र उत्कृष्टानां उत्पलानां उपमेयत्वकल्पनैव अनादरः । पूर्वत्र तु उपमित्यनिष्पत्तिरेव अनादरः ॥ तत्कल्पनायामिति । उपमानत्वकल्पनायामित्यर्थः ॥

## मधुमती

गर्वमिति । अत्र उपमितिनिष्पादेऽपि वैलक्षण्यप्रतीतेः न व्यतिरेकः[3] । उपमानोपमेययोः मिथस्तथात्वं न शाब्दमिति नोपमेयोपमात्वमपि ॥

अनयैवेति । रीत्या प्रकारेण । असामान्य[4]गुणयोगात् उत्कटसाधारणधर्माश्रयत्वात् । एतच्च उपमानत्वाभावे हेतुः ॥ इति प्रतीपम् ॥

---

1 'मुग्धे'–क. 2 'भग्ना'–ग. 3 'न व्यभिचारकः'–ज. 4 'सामान्य'–च.

मात्रमपि अनुभूतपूर्वि, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम् ॥ यथा—

अहमेव गुरुः सुदारुणानां
इति हालाहल! तात! मास्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्! ॥५६२॥

अत्र हालाहलस्य उपमानत्वं असम्भाव्यमेव उपनिबद्धम् ॥

इत्याक्षेपालङ्कारः[1]

## ५५. सामान्यालङ्कारः

**प्रस्तुतस्य यदन्येन**
**गुणसाम्यविवक्षया ।**
**ऐकात्म्यं बध्यते योगात्**
**तत् सामान्यमिति स्मृतम् ॥१३४॥**

---

### सुकेतः

**अहमेवेति** । गुरुः उत्कृष्टः । अत्र—यथा विषं मारकं न तथा खलवाक्यमिति, विषस्य उपमानत्वं असम्भाव्यम्, अतः अत्र प्रतीपता ॥ इति प्रतीपम् ॥

---

1 आक्षेपो वक्तुमिष्टस्य प्रतिषेधो विचारणात् । चन्द्र! सन्दर्शयात्मानं, अथवाऽस्ति प्रियामुखम् । निषेधाभासमाक्षेपं बुधाः केचन मन्वते । नाहं दूती तनोस्तस्याः तापः कालानलोपमः ॥ आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते । गच्छ गच्छसि चेत् कान्त! तत्रैव स्याज्जनिर्मम ॥ (कु).

अताद्दशमपि ताद्दशतया विवक्षितुं यत् अप्रस्तुतार्थेन सम्पृक्तं[1] अपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत्, समानगुणनिबन्धनात्[2] सामान्यम् । उदाहरणम्—

मलयजरसविलिप्ततनवः
 नवहारलताविभूषिताः[3]
सिततरदन्तपत्रकृतवक्त्ररुचः
 रुचिरामलांशुकाः ।
शशभृति विततधाम्नि
 धवलयति धरां अविभाव्यतां गताः
प्रियवसतिं प्रयान्ति
 सुखमेव निरस्तभियोऽभिसारिकाः ॥ ५६३ ॥

अत्र प्रस्तुततदन्ययोः अन्यूनानतिरिक्ततया[4] निबद्धं धवलत्वं एकात्मताहेतुः । अत एव पृथग्भावेन न

---

सङ्केतः

मलयजेति । अत्र असतीचन्द्रद्युत्योः एकतरा प्रस्तुता, अन्या तु अप्रस्तुता[5] । तथा अत्र श्रीखण्डाङ्गरागादेः चन्द्रांशुभिः सह 'अविभाव्यतां गताः' इत्यभेदेनोक्तिः । अष्टाविंशतिमात्रं द्विपदीच्छन्दः । तथा अत्र-स्वगुणत्यागाभावात् न तद्गुणालङ्कारता[6] ॥ एकात्मता एकरूपत्वम् ।

मधुमती

अताद्दशमपीति[7] । वस्तुस्थित्येति शेषः[8] । एकात्मतयेति ।

---

1 'संयुक्तं'–क. 2 'गुणसंबन्धात्'–क. 3 'विभूषणाः'–ख.
4 'अन्यूनातिरिक्ततयां–ख. 5 अन्येत्यादि नास्ति–ग. 6 'ङ्कारः'–घ.
7 'अताद्दश्यमपीति'–च. 8 'ति विशेषः'–ज.

तयोरुपलक्षणम् ॥ यथावा—

वेत्रत्वचा तुल्यरुचां वधूनां
कर्णाग्रतो[1] गण्डतलागतानि ।
भृङ्गाः सहेलं[2] यदि नापतिष्यन्
कोऽवेदयिष्यन्नवचम्पकानि[3] ॥ ५६४ ॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथम-प्रतिपन्नमभेदं न व्युदसितुं उत्सहते ; प्रतीतत्वात् तस्य ; प्रतीतेश्च बाधायोगात् ॥

इति सामान्यालङ्कारः[4]

---

## सङ्केतः

एकस्य निह्नवः अन्यस्य स्थापनमिति लक्षणाभावात् नापह्नुतिः ॥

**निमित्तान्तरेति** । भृङ्गपातः निमित्तान्तरम्, नानात्वं भेदः । **न व्युदसितुमिति** । अत्र पूर्वं अभेदो भातः, पश्चात् भेदः । न हि भातमभातं स्यात् इत्यर्थः । तस्य अभेदस्य ॥ इति सामान्यम् ॥

## सम्प्रुमती

पृथगप्रतीयमानतयेत्यर्थः । अत एव मीलितात् भेदः । तत्र एकस्य बलवत्त्वात् अपरस्य अग्रहरूपः अभिभवः, अत्र तु—तुल्यबलतया[5] पृथगप्रतीतिः । एतच्च 'प्रस्तुततद्भिन्नयोः'[6] इत्याद्यग्रिमग्रन्थेन वृत्तिकारः स्वयमेवाभिधास्यति ॥

**वेत्रत्वचेति** । ननु भृङ्गपातरूपविशेषदर्शनात् अत्र न पृथगप्रतीतिः ? अत आह—**निमित्तान्तरेति** । अभेदं साधारणधर्मवत्त्वम् । यद्वा—ऐकात्म्यं अभेदारोप एवेति ध्येयम् ॥ इति सामान्यम् ॥

---

1 'कर्णान्ततो'–क. 2 'सखेलं'–ख. 3 'नवपङ्कजानि'–क.
4 सामान्यं यदि सादृश्यात् विशेषो नोपलक्ष्यते । पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ 5 'तस्य बलतया'–ज. 6 'तदन्ययोः'–च.

## ५६. विशेषालङ्कारः

विना प्रसिद्धमाधारं
आधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिः
एकस्यानेकगोचरा ॥१३५॥

अन्यत् प्रकुर्वतः कार्यं
अशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति
विशेषः त्रिविधः स्मृतः ॥ १३६ ॥

प्रसिद्धाधारपरिहारेण यत् आधेयविशिष्टा स्थितिः अभिव्यज्यते सः प्रथमो विशेषः ॥ उदाहरणम्—

---

### सङ्केतः

एकात्मा एकस्वभावा ।

### मधुमती

विनेति । न च रूपकातिशयोक्तिविशेषयोः सङ्करः । तस्याः आहार्यारोपरूपत्वात्, अस्य तु विशेषादर्शनजन्यत्वात् । न च भ्रान्तिमत्सङ्करः । तत्र स्मर्यमाणारोपात्, अत्र तु अनु[1]भूयमानारोपात् इति ॥

---

1 'अत्र धियानु'—च.

दिवमप्युपयातानां
आकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः
कथमिह[1] कवयो न ते वन्द्याः ॥५६५॥

एकमपि[2] वस्तु यत् एकेनैव स्वभावेन[3] युगपद-नेकत्र वर्तते, स द्वितीयः । उदाहरणम्—

सा वसइ तुज्झ हिअए
सा च्चिअ अच्छीसु सा अ वअणेपु ।
अम्हारिसाण सुन्दर !
ओआसो कत्थ पावाणं ॥५६६॥

[सा वसति तव हृदये
सैवाक्ष्णोः सा च वचनेषु[4] ।
अस्मादृशीनां[5] सुन्दर !
अवकाशः कुत्र[6] पापानाम् ॥]

---

## सङ्केतः

**दिवमिति** । 'अनन्यत्रभावो[7] विषयार्थः' इति अर्थात्[8] कवयः विषयत्वेन आधाराः । तदभावोऽपि[9] वाचां आधेयानां स्थितिः उक्ता ॥

**सा वसइ इति** । अत्र एकैव स्त्री एकेनैव वसनरूपेण युगपत् चित्तादौ वर्तते ।

## मधुमती

**सा वसतीति** । पूर्वत्र पर्याय[10]क्रमेण, अत्र तु एकदैव अनेकस्मिन् एकसम्बन्धः इति द्वयोर्भेदः ।

---

1 'कथमिव'–क. 2 'एकमेव'–क. 3 'एकेनैव वस्तुस्वभावेन'–ख. 4 'श्रवणयोः'–ख. 5 'अस्मादृशां'–ख. 6 कुत्र इति नास्ति–क. 7 'अनन्य-भावः'–ग. 8 'इत्यत्र'–ग. 9 'तदभावेन'–घ. 10 'पर्यायेण'–च.

यदपि[1] किञ्चित् रभसेन आरभमाणः तेनैव यत्नेन अशक्यमपि कार्यान्तरमारभते सः अपरो[2] विशेषः ।

उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रताप-
ज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूः
भुवि सत्यं सविता बृहस्पतिश्च ॥ ५६७ ॥

यथा वा—

गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां बत![3] किं न मे हृतम्? ॥ ५६८ ॥

---

## सङ्केतः

विधिनेति । अत्र येनैव यत्नेन स्फुरदद्भुतरूपं इत्यादिविशेषणवांस्त्वं सृष्टः, तेनैव अशक्यं कामार्कगुरुरूपं कार्यान्तरमपि कृतम् । अत्र अशक्यग्रहणात्—'प्रस्नवति वृषो गच्छन्' 'हसन् पचति' इत्यादौ नायमलङ्कारः, अशक्यत्वाभावात् ॥

गृहिणीति । इदं निरलङ्कारत्वेनोदाहृतम् । पूर्वं तु सालङ्कारान्तरत्वेन । तत्र यथासङ्ख्यस्यापि भावात् ॥

## मधुमती

यदपि चेति । तथा च प्रसङ्गविषये विशेषभेदोऽयम् । तत्र विषये[4] तु समुच्चय एव, उभयो[5]रप्युद्देश्यत्वात् । अत्र सर्ग-संहारयोर्भेदात्[6] उदाहरणयोर्भेदः ॥

---

1 'यदपि च'–क. 2 'सोऽप्यपरो'–क. 3 'वद'–ख. 4 'इन्द्रविषये'–च. 5 'तयो'–ज. 6 'सर्वसंहारभेदात्'–ज.

सर्वत्र एवंविधविषये अतिशयोक्तिरेव प्राणत्वेनावतिष्ठते[1]। तां विना प्रायेण अलङ्कारत्वायोगात् ॥

अत एवोक्तम्—

"सैषा सर्वत्र[2] वक्रोक्तिः
अनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना[3] कार्यः
कोऽलङ्कारोऽनया विना ॥"

इति ॥

इति विशेषालङ्कारः[4]

---

## सङ्केतः

**सैषेति** । सा **वक्रोक्तिः एषैव** अतिशयोक्तिरेव, नान्येत्यर्थः । **विभाव्यते** विशिष्टतया भाव्यते । **विनेति** । एतेन सर्वालङ्कारबीजं एषा इति भामहाद्याः ॥ इति विशेषः ॥

## मधुमती

नन्वत्र[5] अलङ्काराणां बहूनामैक्यात् भेदो न युज्यते इत्यत आह— **सर्वत्रेति** । **अतिशयोक्तिः** चमत्कारिणी उक्तिः[6]। तथाच अर्थाभेदेऽपि उक्तिभेदात् अलङ्कारभेदः । न तु अतिशयोक्तिः अलङ्कारविशेषोऽभिमतः । तस्य सर्वत्रासम्भवात् । अत एव सर्वालङ्कारेषु कविप्रतिभोत्थापितत्वं प्रयोजकम् । तेन तत्तदलङ्कारसमानार्थ[7]प्रतिपादकोदासीनवाक्ये नातिव्याप्तिः इति द्रष्टव्यम् ॥ इति विशेषः ॥

---

1 'प्रमाणत्वेनावतिष्ठते'–ख. 2 'सर्वैव'–क. 3 'कविभिः'–क. 4 भेदवैशिष्ट्ययोःस्फूर्तौ उन्मीलितविशेषकौ । लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ (कु). 5 'अत्र'–च. 6 'चमत्काराद्युक्ति'–च. 7 'समार्थ'–ज.

## ५७. तद्गुणालङ्कारः

**स्वमुत्सृज्य गुणं योगात्**
**अत्युज्ज्वलगुणस्य यत्।**
**वस्तु तद्गुणतामेति**
**भण्यते[1] स तु तद्गुणः ॥ १३७ ॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसम्पादकोपरक्तं[2] तत्प्रतिभासमेव यत् समासादयति सः तद्गुणः, तस्याप्रकृतस्य गुणः अत्रास्तीति । उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वां
आनिन्यिरे वंशकरीरनीलैः ॥ ५६९ ॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णत्वा ॥

इति तद्गुणालङ्कारः[3]

---

### सङ्केतः

विभिन्नेति । करीरं अङ्कुरः । प्रगुणवर्णता प्रकृष्टगुणवर्णता ।

### मधुमती

अत्रेति । न च मीलितसङ्करः, सामान्यसङ्करः, विशेषसङ्करो वा[4] ।

---

1 'मन्यते'–क. 2 'प्रगुणयास्वगुणसम्पदोपरक्तं'–क. 3 तद्गुणः स्वगुणत्यागात् अन्यदीयगुणग्रहः । पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥ (कु). 4 विशेषेत्यादि नास्ति–च,

## ५८. अतद्गुणालङ्कारः

**तद्रूपाननुहारश्चेत्**
**अस्य तत्[1] स्यात् अतद्गुणः।**

यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायां इदं न्यूनगुणं न गृह्णीयात् तदा भवेत् अतद्गुणो नाम ॥

उदाहरणम्—

---

### सङ्केतः

मीलिते वस्तु वस्त्वन्तरेणाच्छादितं प्रतीयते, इह तु अनपह्नुतस्वरूपमेव वस्तु वस्त्वन्तरगुणोपरक्तं लक्ष्यते इति विवेकः। स्वगुणत्यागात् नापीदं सामान्यं अलङ्कारः ॥ इति तद्गुणः ॥

**अतद्गुणः इति।** तस्य अधिकगुणस्य अस्मिन् गुणाः न सन्ति इत्यतद्गुणः ॥

### मधुमती

प्रथमे धर्मिण एवाभिभवात्, अपरत्र तु[2] तस्यैवान्यत्वेन प्रतिभासात्,[3] पृथगप्र[4]तिभासाद्वा। इह तु गुणमात्राभिभवः भ्रमो वा। अत एव तद्गुण इति अन्वर्थताऽपि सङ्गच्छते। उक्तिभेदाच्च अलङ्कारभेदः इत्यनन्तरमेवोक्तम्। अत एव—

आचे सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्! गुञ्जाफलानां स्रज इति शवराः नैव हारं हरन्ति ॥

इत्यत्र भ्रान्तिमद्धेतुत्वं तद्गुणस्याभिधास्यतीति ॥ इति तद्गुणः ॥

**यदि त्विति।** तस्य समीपस्थस्य गुणः इत्यर्थः।

---

1 'सः'–ख. 2 तु इति नास्ति–ज. 3 'भासः स्यात्'–च. 4 'पृथक्प्र'–ज.

धवलोऽसि जह वि सुंदर !
तह वि तुए मज्झ रंजिअं हिअअं ।
राअभरिए वि हिअए
सुहअ णिहित्तो ण रत्तोसि ॥ ५७० ॥

[धवलोऽसि यद्यपि सुन्दर !
तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये
सुभग ! निहितो[1] न रक्तोऽसि ॥]

अत्र अतिरक्तेनापि मनसा संयुक्तः न रक्ततामुपगतः[2] इति अतद्गुणः। किंच तदिति अप्रकृतं, अस्येति च प्रकृतं अत्र निर्दिश्यते। तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् नानुविधीयते सः[3] अतद्गुणः इत्यपि प्रतिपत्तव्यम् ॥ यथा—

### सङ्केतः

धवलोऽसीति। धवलौ वृष-भर्तारौ। रागौ रङ्गानुरागौ। अत्र पूर्वार्धे विरोधः, नोत्तरार्धे। भिन्नाधारत्वेन रक्तारक्तत्वयोः प्रतीतेः[4]। पूर्वार्धे धवलस्य विरुद्धरागजनकत्वेन विषमालङ्कारोऽपि ॥

### मधुमती

अत्रेति। संयुक्तः इत्यनेन[5]व्यञ्जनायोग्यतां[6] उपलक्षयति—तदितीति ॥

1 'निहितो मे'–ख. 2 'मुपागतः'–ख. 3 'सोऽपि'–क. 4 'रक्तारक्तयोः प्रतीतिः'–ग. 5 'इत्यत्र'–च. 6 'नयोग्यतां'–च.

गाङ्गमम्बु सितं अम्बु यामुनं
कज्जलाभं उभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता
चीयते न च न चापचीयते ॥ ५७१ ॥

इत्यतद्गुणालङ्कारः[1]

---

५९. व्याघातालङ्कारः

**यद्यथा साधितं केना-**
**प्यपरेण तदन्यथा ॥ १३८ ॥**
**तथैव यद्विधीयेत[2]**
**स व्याघात इति स्मृतः ।**

---

**सङ्केतः**

**गाङ्गमिति** । अत्र प्रकृतहंसस्य अप्रकृतजलयोगेऽपि न तद्रूपतेति अतद्गुणः ॥ इत्यतद्गुणः ॥

**मधुमती**

**गाङ्गमिति** । गाङ्गयामुनाम्बुनोः अप्रकृतयोः रूपं प्रकृतेन राजहंसेनानुविहितमिति[3] अतद्गुणत्वमित्यर्थः ॥ इत्यतद्गुणः ॥

---

1 सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् । चिरं रागिणि मच्चित्ते निहितोऽपि न रञ्जसि (रज्यसि) ॥ (कु). 2 'तद्विधीयेत'–क. 3 'विदितमिति'–ज.

येनोपायेन यत् एकेनोपकल्पितं, तस्य अन्येन जिगीषुतया तदुपायकमेव यत् अन्यथाकरणं, सः साधितवस्तुव्याहतिहेतुत्वात् व्याघातः ॥ उदाहरणम्—

दृशा दग्धं मनसिजं
जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीः
ताः स्तुवे[1] वामलोचनाः ॥५७२॥

इति व्याघातालङ्कारः[2]

---

## सङ्केतः

**दृशेति** । अत्र दृग्रूपोपायेन येन हरः स्मरं अधाक्षीत्, तेनैव कान्ताः तं अजीजिवन् । दाहस्य च जीवनीयत्वं विपक्षः, तेन निष्पादितवस्तुव्याहतिहेतुत्वात् व्याघातता । **विरूपाक्षस्य** इति **वामलोचनाः** इति च व्यतिरेकगर्भौ शब्दौ । **जयिनी**[3] इति व्यतिरेकोक्तिः, इति अत्र व्यतिरेकनिमित्तता । दृग्रूपोपाययोः भेदेऽपि अभेदातिशयोक्तिरपि । रसवदाद्यलङ्काराः प्रागुक्ताः । आशीस्तु नालङ्कारः, प्रियोक्तिमात्रत्वात्; स्नेहात्मरत्याख्यभावत्वे, भावध्वनित्वाद्वा ॥ इति व्याघातः ॥

## मधुमती

**तदुपायकमेवेति** । अत एव व्याघातः ।

यद्यपि विरूपाक्षदृग्–वामलोचनादृशोः नैक्यम् । अत एव न व्याघातः । तथापि एकजातीयत्वात् ऐक्यं अध्यवसितम् । यद्वा—कार्य-

---

1 'स्तुमो'—ख. 2 स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् । यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥ सौकर्येण निबद्धाऽपि क्रिया कार्यविरोधिनी । दया चेद्बाल इति मय्यपरित्याज्य एव ते ॥ (कु). 3 'जयनीः'—ग.

## ६०. संसृष्टिप्रकरणम्

**सेष्टा[1] संसृष्टिरेतेषां**
**भेदेन यदिह स्थितिः ॥ १३९ ॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवं अन्योन्यनिरपेक्षतया यत् एकत्र[2] शब्दभागे एव, अर्थविषये एव, उभयत्रापि वा अवस्थानं, सा एकार्थसमवायस्वभावा[3] संसृष्टिः ॥ तत्र शब्दालङ्कारसंसृष्टिर्यथा—

### सङ्केतः

**यथासम्भवमिति** । न सर्वेषामलङ्काराणाम्, किन्तु केषाञ्चित् । तत्रापि क्वचित् द्वयोः त्रयाणामित्यादि । शब्दार्थोभयालङ्कारविषयत्वेन त्रिरूपत्वेऽपि संसृष्टेः एकरूपत्वमेव, मिथोनैरपेक्ष्यस्वरूपस्य एकत्वात् । **निरपेक्षतया** इत्युक्त्या तिलतण्डुलन्यायेन अलङ्काराणां योगे संसृष्टिः ।

### मधुमती

वैजात्यस्य कारणवैजात्यप्रयोज्यत्वात्, एकजातीयाद्विजातीयकार्याभिधानेऽपि व्याघात एवेति तदभिप्रायकमेवेदम् ॥ इति व्याघातः ॥

एवं शुद्धभेदानुदाहृत्य सङ्कीर्णान् उदाहरति—**सैषेति** । **समनन्तरमेवेति** । शब्दार्थोभयालङ्काराणामित्यर्थः । **यथासम्भवमिति** । शब्दालङ्कारयोः, अर्थालङ्कारयोः, उभयालङ्कारयोः अनुभयालङ्कारयोर्वा इत्यर्थः । **अन्योन्येति** भेदेनेत्यस्यार्थः । **सैकेति**[4] । गद्य-पद्यरूपे एकार्थे सम्बन्धस्वभावेत्यर्थः[5] ॥

---

1 'सैषा'–क. 2 'यदिह'–क. 3 'समवायसम्बन्धस्वभावा'–क.
4 'सैषेति'–च. 5 'गद्यरूपैकस्यार्थसम्बन्धाभावेत्यर्थः'–ज.

वदन[1]सौरभलोभपरिभ्रमद्-
भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखला-
कलकलोलकलोलदृशाऽन्यया ॥ ५७३ ॥

अर्थालङ्कारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिः विफलतां[2] गता ॥ ५७४ ॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे ॥

---

## सङ्केतः

सङ्करस्तु स्वरूपेणैव नानात्वेनोक्तत्वात् त्रिधैव । तत्र नैरपेक्ष्याभावात् क्षीरनीरन्यायेन अलङ्काराणां योगः ॥

**कुसुमेति** । अत्र यमकानुप्रासाविति विजातीयालङ्कारसंसृष्टिर्यथा, तथा—

'लकलोलकलो' इति, 'कलोलकलोल'[3]

इति च सजातीययमकालङ्कारसंसृष्टिरपि ॥

**तथाविधे इति** । मिथोनिरपेक्षे इत्यर्थः । **उपमोत्प्रेक्षे** उत्तरपूर्वार्धगे विजातीये । **लिम्पतीव** इति **वर्षतीव** इति च उत्प्रेक्षे सजातीये । तयोः अत्र संसृष्टिः ॥

## मधुमती

**उत्तरत्र त्विति**[4] । पूर्वार्धे उत्प्रेक्षा, उत्तरार्धे उपमेति द्रष्टव्यम् ॥

---

1 'कुसुम'–ख. 2 'निष्फलतां'–क. 3 'कलकलोलकलोल'–घ.
4 'उत्तरं तरिवति'–च.

शब्दार्थालङ्कारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे
जो एअं महमहंतलाअण्णं ।
तरुणाण हिअअलूडिं
परिसक्कंतीं णिवारेइ ॥ ५७५ ॥

[स नास्त्यत्र ग्रामे
य एनां महमहल्लावण्याम्[1] ।
तरुणानां हृदयलुण्टाकीं
परिष्वष्कमाणां[2] निवारयति ॥]

अत्र अनुप्रासः रूपकं च अन्योन्यानपेक्षे। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ॥

इति संसृष्टिप्रकरणम्

---

## सङ्केतः

महमहन्तेति । (महमहायमानलावण्यां) लसल्लावण्यामित्यर्थः । परिसक्कन्तीं[3] परिष्वष्कमाणां, क्रीडन्तीमिति यावत् ॥

रूपकं चेति। हृदयलुण्ठीमेव हृदयलुण्ठीं इति रूपकम्। एकत्र वाक्ये इति शब्दालङ्कारव्यक्तिः। छन्दसि इति अर्थालङ्कारोन्मेषः ॥ इति संसृष्टिः ॥

## मधुमती

अनुप्रास इति। अनुप्रासोऽत्र स्पष्टः। हृदयलुण्ठनं इत्यत्र च रूपकम्॥ लिम्पतीव इत्यत्र उत्प्रेक्षोपमासंसृष्टयैव उभयालङ्कारसंसृष्टिः गतार्था[4] ।

---

1 'य एतत्सर्वतः प्रसरल्लावण्याम्'–क. 2 'हृदयलुण्ठि (ण्ठीं) विलसन्तीं'–क. 'हृदयलुण्ठनं परिष्वष्कमाणां'–ख. 3 'परिसम्पन्तीं'–ग. 4 'संसृष्टयोरुभयालङ्कारयोः संसृष्टिः कृतार्था नु'–च.

## ६१. सङ्करप्रकरणम् (सङ्करः-१)

**अविश्रान्तिजुषां आत्म-**
**न्यङ्गाङ्गित्वं तु सङ्करः ।**

एत एव यत्राऽऽत्मनि[1] अनासादितस्वतन्त्रभावाः परस्परं अनुग्राह्यानुग्राहकतां दधति, सः एषां सङ्कीर्यमाणस्वरूपत्वात् सङ्करः ।। उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशां इत्वरीणामरण्ये
राजन्! गुञ्जाफलानां स्रज इति शबराः नैव हारं हरन्ति ।।५७६।।

---

### मधुमती

उभयोरप्युभयालङ्कारत्वात्—

"सकलकलं पुरमेतज्जातं
सम्प्रति सुधांशुबिम्बमिव ।।"

इत्यादौ हि[2] उपमानुप्राससंसृष्ट्या[3] उभयानुभयालङ्कारसंसृष्टिरुक्ता ।। इति संसृष्टिः ।।

**एत एवेति** । उक्ता एव अलङ्काराः इत्यर्थः ।

**आत्ते इति** । अत्र सीमन्तरत्ने इत्यनेन चिकुरनिकुरुम्बलब्धपरभागताध्वननेन आदाने[4] विलम्बाभावः । **मरकतिनि** इत्यनेन[5] हेमताटङ्कग्रहणम्, न तु शुद्धहेमाभिधानम् । अन्यथा देहदीप्त्यभिभूतत्वात् न प्रकाशेत[6] । **बिम्बोष्ठकान्त्या** इत्यनेन आननस्य आलस्यानतत्वम्[7] ।

---

1 'एव तु यदाऽऽत्मनि'-क.　2 हि इति नास्ति-च.　3 'संसृष्ट्या च'-ज.　4 'ध्वनने नाशने'-च.　5 'मरकतानीति पदेन'-ज.　6 'भूतपीतरूपनाशो - तद्भूयोग्रहणमिति'-ज.　7 'आननस्य तत्त्वं'-च.

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमिति अनयोः अङ्गाङ्गिभावः। यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयः
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।

---

## सङ्केतः

**अत्र तद्गुणमिति।** 'शोणं बिम्बोष्ठकान्त्या' इति वाक्यगमित्यर्थः। **भ्रान्तिमतेति।** 'गुञ्जाफलानां स्रजः' इति प्रोक्तेनेत्यर्थः। **तदाश्रयेण** भ्रान्तिमदाश्रयेण ॥

**जटेति। करौ** रश्मि-हस्तौ। **वैराग्यं** लौहित्याभावोऽपि। अत्र **जटाभाभिरित्युपमा। वलय** इति रूपकम्। **व्यापत्तेरिवेत्युत्प्रेक्षा। वैराग्येति**

## मधुमती

तेन च त्रपाधिक्यं व्यज्यते। अत्र—'शोणं बिम्बोष्ठकान्त्या' इत्यत्र तद्गुणः, 'गुञ्जाफलानां स्रजः' इत्यत्र भ्रान्तिमान्। अत्र अधरसान्निध्यासादितारुणिमाविशिष्टमुक्ताफलदर्शनेन गुञ्जाफलस्मरणात्, तत्तयाऽऽरोपे भ्रान्तिमान् इति द्वयोः हेतुहेतुमद्भावः प्रतीयते ॥

**जटाभाभिरिति। करः** रश्मिः पाणिश्च। **वैराग्यं** विगतरागता विषयव्यावृत्तत्वं च। **अत्रेति। जटाभाभिरित्युपमालङ्कारः करवैराग्य-**श्लेषस्य अङ्गतां भजते। जटावत एव पाणिविषयव्यावृत्तत्वसम्बन्धयोग्यत्वात्। श्लेषालङ्कारोऽपि **कलङ्क एवाक्षवलयः** इति रूपकस्य अङ्गताम्, **करधृत**त्वस्यैव रूपकसाधकत्वेन अभिधास्यमानत्वात; तच्च न केवलं रूपकस्याङ्गम्, अपि तु **वियोगव्यापत्तेरिव**[1] इति उत्प्रेक्षाया अपि इति द्रष्टव्यम्; रश्मेः

1 'व्यावृत्तेरिव'–ज.

परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥५७७॥

उपमा रूपकं उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते । कलङ्क एवाक्षवलयं इति[1] रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते । अस्य हि रूपकत्वे तिरोहितकलङ्करूपं अक्षवलयमेव मुख्यतया अवगम्यते । तस्यैव च करग्रहणयोग्यतायां[2]

---

### सङ्केतः

श्लेषः । कपालेति रूपकम् । तद्धेतुः अङ्किततले इति समानो धर्मः । पितृवन इवेति उपमायाः चमत्कृतिहेतुः । भस्मनेवापाण्डुः इत्युत्प्रेक्षा । अत्र श्लेषस्योपकारिणी उपमा । समुत्थापकत्वात् । श्लेषोऽपि रूपकोत्प्रेक्षयोरुपकारी । एतैः सर्वैरप्युपकृता सती उपमा चमत्करोति । कलङ्काक्षेत्यत्र किमुपमया? रूपकेण वा समासः स्यात् इत्याह—कलङ्क एवेति । श्लेषच्छायाश्रयेण चन्द्रोऽपि करैः कलङ्कधार्येव । परं न मुख्यया

### मधुमती

वियोगव्यापत्ति[3]हेतुत्वयोग्यत्वात् । पितृवन इव इत्युपमायास्तु सर्वेऽप्युपकारकाः ॥

ननु कलङ्काक्षवलयः इत्यत्र रूपकोपमासन्देहात् सन्देहात्मा सङ्करः स्यात् इत्याशङ्क्याह—कलङ्क एवेति । कथं करधृतत्वं रूपकसाधकम्? अत आह—अस्य हीति । रूपके आरोप्यस्यैव प्राधान्यादित्यर्थः । तस्यैव

---

1 'इति च'-ख. 2 'योग्यतया'-ख. 3 'व्यावृत्ति'-ज.

**सार्वत्रिकी प्रसिद्धिः। श्लेषच्छायया तु कलङ्कस्य करधारणं असदेव प्रत्यासत्त्या उपचर्य योज्यते। शशाङ्केन केवलं[1] कलङ्कस्य मूर्त्यैवोद्वहनात्। कलङ्कः अक्षवलयमिव इति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः। न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ॥**

---

## सङ्केतः

वृत्त्या इत्याह—**श्लेषेति**। चन्द्रबिम्बे कराः कलङ्कश्चेति **प्रत्यासत्तिः**। **न चास्येति**। **अस्य** कलङ्कस्य ॥ **मुख्येऽपीति**। उपमापक्षे कलङ्के। **उपचार एवेति**। उपचारस्य अगतिकगतित्वात् नाङ्गीकारः ॥

## मधुमती

अक्षवलयस्यैव। ननु तथापि सादृश्यं विना न रूपकम्, सादृश्यं च न करधृतत्वेन, कलङ्के तदभावात्; नापि तदाकारत्वेन, आकारस्यापि भिन्नत्वात् इत्यत आह—**श्लेषेति**। **छाया** सामर्थ्यम्। तथा च श्लेषात् रश्मौ उपस्थिते, कलङ्कस्य तद्धृतत्वं[2] उपचर्यते। असत्त्वे हेतुमाह—**शशाङ्केनेति**। यद्यप्येवमपि—कलङ्के रश्मिधृतत्वम्, अक्षवलये तु पाणिधृतत्वमिति न साधारण्यम्। तथापि करशब्दवाच्यधृतत्वं समानो धर्मः इति द्रष्टव्यम्। नन्वेवं उपचारावश्यकत्वे उपमायामपि करधृतत्वमसदेव कलङ्के उपचर्यतामित्यत आह—**कलङ्क इति**। **उत्कटतया** मुख्यत्वेन। एवं च रूपके अक्षवलयस्य प्राधान्यम्, तत्र च करधृतत्वं प्रसिद्धमेव। रूपकप्रयोजकसादृश्ये तु उपचारः। उपमायां तु कलङ्कस्य मुख्यतया, मुख्ये कलङ्के

---

1 केवलं इति नास्ति–क. 2 'स्य अनुद्धृतत्वं '–च.

**एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि दृश्यते ।**

**यथा—**

**राजति तटीयमभिहत-**
**दानवरासाऽतिपातिसारावनदा ।**

---

### सङ्केतः

**राजतीति । अभिहतः दानवानां रासः** सिंहनादः येनेति शम्भो-रामन्त्रणम् । **अतिपातिनः** वेगगामिनः **सारावाः नदाः** यस्यां सा तथा ।

### मधुमती

अङ्गभूते वा अक्षवलये उभयत्रापि रश्मिधृतत्वोपचारः इति लाघवात् रूपकमेवेदम् । तथा च—रूपकबाधकप्रमाणासत्त्वात् न सन्देहात्मा सङ्करः इति पर्यवसितोऽर्थः ॥

'शब्दालङ्कारयोः अयं सङ्करो न भवत्येव । शब्दार्थवदुपकार्योपकार-कत्वरूपाङ्गाङ्गिभावाभावात् । किन्तु संसृष्टिरेव'—इति अलङ्कारसर्वस्वकारमतं दूषयति—**एवंरूपश्चेति** । चित्राभ्यां यमकनिष्पत्तेः परस्परापेक्षित्वमित्यर्थः । एकवाचकानुप्रवेशलक्षणः तृतीयोऽत्र सङ्करः इत्यन्ये ॥

**राजतीति** । इयं तटी राजति इत्यन्वयः । कीदृशी? **अविरतः दानवानां रासः** शब्दः यस्यां सा तथा । **अतिपाती** शीघ्रगामी **सारावः** सशब्दः **नदः** अम्बुप्रवाहः यस्यां सा तथा—

["शोणसिन्धुहिरण्याख्याः कोकलोहितघर्घराः ।
शतद्रूश्च नदाः सप्त पावनाः परिकीर्तिताः ॥
नद्यः प्राक्स्रोतसः, प्रत्यङ् नदास्स्युः नर्मदां विना" ॥]

गजता च यूथमविरत-
दानवरा साऽतिपाति सारा वनदा ॥ ५७८ ॥

अत्र यमकं अनुलोमप्रतिलोमश्च चित्रभेदः । पादद्वयगते परस्परापेक्षे[1] ॥

इति प्रथमः सङ्करः

---

## सङ्केतः

सा च गजता अति-पाति रक्षति, विशेषेण परित्रायते यूथम्[2] । अविरतं दानेन वरा सारा स्थिरा, वनं दयते वनदा, अवनं त्राणं वा ददाति अवनदा ॥

शब्दवत् शब्दालङ्कारयोः यमकचित्रयोः अत्र अङ्गाङ्गिभावाभावात् नैरपेक्ष्ये संसृष्टिरेवेत्याह—परस्परेति । मिथो विवेकेन द्वयोरिह वृत्तेरभावात् । अपेक्षैव च परस्परं[3] अनुग्राह्यानुग्राहकभावः । अथवा[4] असौ

## मधुमती

एवं सा प्रसिद्धा गजता गजसमूहः यूथं स्वकुलं अतिपाति अतिशयेन रक्षति । कीदृशी? अविरतदानेन सन्ततमदजलेन वरा उत्कृष्टा, तथा सारा स्थिरा, तथा वनदा वनखण्डनकर्त्री । 'दो अवखण्डने' इति धात्वर्थानुसारात् ॥

अत्रेति । पादयमकानुलोमप्रतिलोमयोः प्रत्येकमेव दुष्करतया विदग्धमनोऽनुरञ्जकमिति, किमुत तयोः साहित्यम्? इति भावः । केचित्तु—

---

1 'पादद्वयगतेन परम्परापेक्षः'-ख. 2 विशेषेणेत्यादि नास्ति-ग. 3 'वृत्तेरभावे सापेक्षत्वेन'-घ. 4 अथवेति नास्ति-ग.

## ६१. (सङ्करः-२)

**एकस्य च ग्रहे न्याय-**
**दोषाभावादनिश्चयः ॥ १४० ॥**

**द्वयोः बहूनां वा अलङ्काराणां एकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकम्, तदितरस्य वा परिहारे बाधकमस्ति, येन एकतर एव परिगृह्येत, सः निश्चयाभावरूपः द्वितीयः सङ्करः। समुच्चयेन सङ्करस्यैवाक्षेपात् ॥**

---

### सङ्केतः

अनुग्राह्यः, असौ अनुग्राहकः इति निर्णेतुमशक्यत्वे मिथः काऽपेक्षा शब्दालङ्कारयोः? इति संसृष्टिरेवात्र युक्ता[1]। यद्वा—शब्दालङ्कारद्वयस्य एकवाचकगत्वे तृतीयः सङ्कर इति भाव्यम् ॥ इति प्रथमः सङ्करः ॥

**समुच्चयेनेति**। 'एकस्य च' इत्यत्र समुच्चयद्योतकेन[2] चकारेणेत्यर्थः॥

### मधुमती

एकव्यञ्जकानुप्रवेशलक्षणः तृतीय एवात्र सङ्करः, न तु अनुग्राह्यानुग्राहकलक्षणः सङ्करः इत्याहुः ॥ इति प्रथमः सङ्करः[3] ॥

**एकस्य चेति**। **न्याय-दोषौ** साधकबाधकमाने। तथा च[4] साधकबाधकमानाभावात् संशय इति भावः ॥ ननु 'एकस्य च ग्रहे इत्यादेः कथं सङ्करपरत्वम्? अत आह—**समुच्चयेनेति**। समुच्चयवाचकेनेत्यर्थः। तथा च 'एकस्य च ग्रहे' इत्यादि चकारेण सङ्करस्य समुच्चयः इति भावः ॥

---

1 अलङ्कारसर्वस्वकृन्मतमेतत्। 2 समुच्चयेत्यादि नास्ति—ग. 3 अत्रेति इत्यादि नास्ति—ज. 4 'न्यायदोषाभावात्'—च.

उदाहरणम्—

जह गहिरो जह रअणणिब्भरो
जह अ णिम्मलच्छाओ ।
तह किं विहिणा एसो
सरसवाणीओ जलणिही ण किओ ॥ ५७९ ॥

[यथा गभीरो यथा रत्ननिर्भरः
यथा च निर्मलच्छायः ।
तथा किं विधिना एष
सरसपानीयो जलनिधिर्न कृतः ॥]

अत्र समुद्रे प्रस्तुते विशेषणसाम्यात् अप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः,? किं वा अब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः इयं अप्रस्तुतप्रशंसा? इति सन्देहः। यथा वा—

## सङ्केतः

सरसवाणीयः । सरसपानीयः सरसवाणीकश्च ॥

## मधुमती

सन्देहः इति । इदं च समुद्रस्य प्रकृतत्वात्, अप्रकृतत्व[6]ग्राहकप्रमाणाप्रवृत्तौ द्रष्टव्यम् । अन्यथा अन्यतरालङ्कारनिर्णयात् ॥

6 'समुद्रस्य प्रकृतत्व'–च.

नयनानन्ददायीन्दोः
बिम्बमेतत् प्रसीदति ।
अधुनापि निरुद्धाशं[1]
अविशीर्णमिदं तमः ॥ ५८० ॥

अत्र किं कामस्योद्दीपकः कालो वर्तते इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तम्? उत वदनस्य इन्दुबिम्बतया अध्यवसानात् अतिशयोक्तिः? किं वा एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात् रूपकम्? अथवा तयोः[2] समुच्चयविवक्षायां दीपकम्? अथवा तुल्ययोगिता? किमु प्रदोषसमये विशेषणसाम्यात् आननस्यावगतौ समासोक्तिः? आहोस्वित् मुखनैर्मल्य-

---

सङ्केतः

नयनेति । आशा आस्थाऽपि । तमः मोहोऽपि ॥

एतयोः वक्त्रबिम्बयोः ॥

समुच्चयेति । बिम्बं मुखं चैतत् प्रसीदति इति भङ्ग्या, एकस्य

मधुमती

एवं द्वयोः सङ्करमुदाहृत्य बहूनामुदाहरति—**नयनेति । अथैतयोरिति**[3] । एतत्पदप्रतिपाद्याननचन्द्रयोः प्रकृताप्रकृतयोः प्रसादरूपैकक्रियान्वयात् दीपकम् । **समुच्चयविवक्षायामिति** । 'चन्द्रश्च मुखं चे'त्यत्रेव 'च'काराभावेऽपि 'ग्राममश्वं पुरुषं पशुम्' इत्यादाविव समुच्चयो द्योत्यः इति भावः । **अथवेति** । समुच्चय इत्यर्थः । न तु तुल्ययोगितैव । औपम्याप्रतीतेः ॥

---

1 'अधुना विनिरुद्धाश'-क.  2 'अथैतयोः'-ख.  3 'अथवा एतयोरिति'-ज.

प्रस्तावात् अप्रस्तुतप्रशंसा ? इति बहूनां सन्देहात् अयमेव सङ्करः ॥

यत्र तु न्यायदोषयोरन्यतरस्यावतारः तत्र एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वं अनुकूलता[1]। दोषोऽपि बाधकत्वं प्रतिकूलता[2]। तत्र—

'सौभाग्यं वितनोति वक्त्रशशिनः
ज्योत्स्नेव हासद्युतिः ॥ ५८१ ॥'

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिः वक्त्र एवानु-

---

## सङ्केतः

प्रकृतत्वे अन्यस्य अप्रकृतत्वे च दीपकम्। द्वयोरप्यप्रकृतत्वे वा[3] तुल्ययोगिता। **अयमेव** अनिश्चयात्मा ॥

**वक्त्रशशिनः इति**। अत्र 'वक्त्रं शशीव' इत्युपमा, न तु 'वक्त्रमेव शशी' इति रूपकम् इत्याह—**मुख्यतयेति**। **हासद्युतिः** प्रकृतत्वात्

## मधुमती

एवं चायमलङ्कारः कवितात्पर्यविषयो न वा इत्याकारकः[4] सन्देहोऽभिमतः। अलङ्कारस्वरूपाणां निश्चितत्वात्। **अयमेवेति**। सन्देहात्मक एवेत्यर्थः। नवनीतघृत[5]वत् अचिरताप्रतीतेः ॥

**अनुकूलतया** मुख्यतया घटितत्वेन। **प्रतिकूलतया** अमुख्यतया घटितत्वेन। **मुख्यतयेति**। रूपके आरोप्यस्य शशिनः प्राधान्यात् तत्र हासानन्वयः। उपमायां तु वक्त्रप्राधान्यात् हाससम्बन्धः[6] घटते ॥ अत्र 'द्युतिपदं शोभापरम्' इति निश्चये सति एतत् विनिगमकम्। अन्यथा

---

1 'अनुकूलतया'–क. 2 'प्रतिकूलतया'–क. 3 वा इति नास्ति–घ.
4 'विषयं वेति सङ्करः–च. 'विषयतैववेत्याकरः'–ज. 5 'नावसितघृत'–च.
6 'न्याद्वा न संबन्धो'–च.

कूल्यं भजते इत्युपमायाः साधकं, शशिनि तु न तथा प्रतिकूलेति, रूपकं प्रति तस्या अबाधकता ।

'वक्त्रेन्दौ तव सत्ययं
　　यदपरः शीतांशुरभ्युद्यतः ॥ ५८२ ॥

इत्यत्र अपरत्वं इन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तु उपमायाः बाधकताम् ॥

---

## सङ्केतः

मुख्या । सा च वक्त्रानुगुणेति उपमासाधिका । तस्या इति । हासद्युतेरित्यर्थः । एतस्याश्च शुक्लतया चन्द्रेऽपि किञ्चिदानुकूल्यमस्तीत्यतो न बाधकत्वम् ॥

वक्त्रेन्दाविति । अत्र अपरत्वं रूपकस्य साधकतां प्रतिपद्यते इति योगः । अपरत्वमिति । वक्त्रस्य बहुत्वात् अपरत्वं अविस्मयावहमिति

## मधुमती

द्युतिपदस्य प्रभापरत्वे 'हास एव द्युतिः' इति रूपकं 'वक्त्रमेव शशी' इति रूपकानुकुल्यं भजते इति सन्देहतादवस्थ्यात् । न तथेति । हासेन विकासलक्षणायां अर्थघटनात् । अपरत्वमित्यपरशब्दस्य पूर्वापेक्षित्वात् प्रथमेनेन्दुना अवश्यंभाव्यमिति ॥

वक्त्रेन्दौ इति रूपकसाधकम्, उपमायां तु वक्त्रस्य प्राधान्यात् इन्दोश्च अप्राधान्यात् अपरत्वप्रतीतिः न स्यात् । न त्विति । 'इन्दुतुल्ये मुखे सति किमपरेण असुख्येन चन्द्रेण?' इति यथाकथञ्चिदर्थघटनात् न प्रतिकूलम् । चन्द्रपरत्वेन मुख्यतयोपलक्षणात् । न तूपमाया इति । तथा

'राजनारायणं लक्ष्मीः त्वामालिङ्गति निर्भरम् ॥५८३॥

इत्यत्र पुनः आलिङ्गनं उपमां निरस्यति, सदृशं प्रति परप्रेयसीप्रयुक्तस्य आलिङ्गनस्य असम्भवात्[1] ॥

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो[2] विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५८४ ॥

---

## सङ्केतः

नानुकूलम्[3] । चन्द्रे तु एकत्वात् विस्मयावहत्वेन[4] अनुकूलमेव ॥

साधकत्वेनोक्त्वा, बाधकत्वेनाह—राजेति । राजैव नारायणः इति रूपकसमासः । उपमानप्राधान्ये रूपकम्, उपमेयप्राधान्ये तु उपमा इति सर्वत्र ज्ञेयम् । **सदृशं** राजानम्, प्रेयसी लक्ष्मीः । निजपतितुल्यं अन्यं कान्ता नालिङ्गतीत्यर्थः ॥

**पादाम्बुजमिति** । अत्र उपमायां पादप्राधान्ये नूपुरध्वनियोगः घटते । रूपके तु अम्बुजप्राधान्ये न घटते ॥

## मधुमती

च एतयोः उदाहरणयोः उत्कटः सन्देहः इति भावः ॥

उपमायाः बाधकावतारे उदाहरति—**राजनारायणमिति** । **सदृशमिति** । रूपके तु नारायणस्य प्राधान्यात् तदालिङ्गनं युज्यते इति भावः ॥

रूपकस्य बाधकावतारे उदाहरति—**पादाम्बुजमिति** । 'पाद एवाम्बुजम्' इति रूपके अम्बुजस्य प्राधान्यात् तत्र मञ्जुमञ्जीरशिञ्जितस्य बाधात् । **न त्विति** । इदमुपलक्षणम्—'राजनारायणं' इत्यत्रापि रूपक-

---

1 'त्वात् इति'-ख. 2 'वो'-क. 3 'नानुकूलं च'-ग. 4 'वहत्वे'-घ.

**इत्यत्र मञ्जीरशिञ्जितं अम्बुजे प्रतिकूलं असम्भवादिति रूपकस्य बाधकम्, न तु पादेऽनुकूलमिति उपमायाः साधकमभिधीयते, विध्युपमर्दिनो बाधकस्य तदपेक्षया उत्कटत्वेन प्रतिपत्तेः ॥**

**एवं अन्यत्रापि सुधीभिः परीक्ष्यम् ॥**

**(इति द्वितीयः सङ्करः)**

---

## सङ्केतः

**विध्युपमर्दिनः इति ।** यद्यपि मञ्जीरशिञ्जितं[1] रूपकविधिच्छेदेन[2] बाधकम्, पादानुकूल्यात् उपमां प्रति साधकं च स्यात् । तथापि बाधकत्वेन व्यपदेशः । 'प्रधानेन व्यपदेशाः भवन्ति' इति न्यायात् । साधकत्वापेक्षया बलिष्ठत्वेनोत्कटतया प्रतीतेः बाधकत्वमेव[3] प्रधानम् । **तदपेक्षया** साधकत्वापेक्षया ॥ इति द्वितीयः सङ्करः ॥

## मधुमती

साधकत्वेन आलिङ्गनं नोक्तमिति[4] ॥ ननु—साधकपरिहारेण बाधकोपादानं किमर्थम्? अत आह—**विधीति** । आलिङ्गनस्य उपमाबाधकत्ववत् रूपकसाधकत्वम् । मञ्जीरशिञ्जितस्य च रूपकबाधकत्ववत् उपमासाधकत्वं च यद्यप्यस्ति । तथापि बाधकत्वमेव उपन्यस्तम् । अन्यथा सन्देहानिरासात् । उपमासाधकत्वे ह्यभिहिते स्वारसिकसन्देहव्युदासेऽपि, एतत्साधकत्वमिव रूपकसाधकत्वमपि किञ्चित् स्यात् इति सन्देहाहितस्य रूपकसन्देहस्य तादवस्थ्यात् । बाधके त्वभिहिते[5] तद्व्यवच्छेदप्रतीत्या -सन्देहाविषयत्वं[6] उपपद्यते इति । तदिदमुक्तम्—**विध्युपमर्दिनः इत्यादिना** ॥ इति द्वितीयः सङ्करः ॥

---

1 'सिञ्जितं'-घ.　2 'रूपकं प्रति'-ग.　3 'बाधकं'-ग.　4 'नोत्कटम्'-ज.　5 स्वारसिकेत्यादि नास्ति-च.　6 'सन्देहविषयत्वं'-च.

## ६१. (सङ्करः–३)

**स्फुटमेकत्र[1] विषये**
**शब्दार्थालङ्कृतिद्वयम् ।**
**व्यवस्थितं च ॥**

अभिन्ने एव पदे स्फुटतया यत् उभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः ॥

उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखा[2]वतार-
बद्धान्धकारमधुपावलि संचुकोच ॥ ५८५ ॥

अत्र एकपदानुप्रविष्टौ रूपकानुप्रासौ ॥

(इति तृतीयः सङ्करः)

---

### सङ्केतः

**अत्र एकपदेति ।** अत्र यद्यपि एतदखिलवाक्यगं सावयवं रूपकन्,

### मधुमती

**स्फुटमिति ।** एवं 'स्फुटमेकत्रे'ति वदता अस्फुटालङ्कारद्वयसंसर्गः चमत्कारानाधायकतया नालङ्कारतामर्हतीति प्रतिपादितमिति केचित् ॥

**अत्रेति ।** 'श्लिष्टाष्टदिग्दलकलापं' इत्यत्र पदे इत्यर्थः । इति सङ्करप्रकरणम् ॥

---

1 'मेकार्थे'–क. 2 'मुखा'–ख.

तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥

तदयं अनुग्राह्यानुग्राहकतया, सन्देहेन, एकपद-प्रतिपाद्यतया च व्यवस्थितत्वात् त्रिप्रकार—एव[1] सङ्करो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुं, आनन्त्यात् तत्प्रभेदानाम् ॥

इति सङ्करप्रकरणम्

---

अलङ्कारप्रकरणनिगमनम्

इति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्य-जुषः अलङ्काराः ॥

---

**सङ्केतः**

तथापि प्रतिपदं रूपकसद्भावात् तथा व्यपदेशः इति एकपदानुप्रवेशः उक्तः। शब्दार्थवृत्त्यलङ्कारसङ्करस्तु[2] उद्भटोक्तः संसृष्टिरेवेति त्रिधैव ॥

प्रकारान्तरेणेति। प्रकारत्रयादन्यप्रकारेणेत्यर्थः। सर्वे अलङ्काराः सङ्करे उदाहर्तुमशक्याः इत्यर्थः ॥ तत्प्रभेदानामिति। तस्य सङ्करस्य प्रभेदास्तु[3] त्रयः प्रकाराः। तेषामपि भेदाः तत्तदलङ्कारयोगाः इति ॥ इति सङ्करप्रकरणम् ॥

**मधुमती**

प्राचीनमतेऽपि एष्वेव अलङ्कारव्यवहारः इत्यभिप्रेत्याह—प्रति-पादिताः[4] इति ॥

---

1 'त्रिप्रकारतयैव'–क. 2 'वृत्त्यलङ्कारस्तु'–ग. 3 'तत्प्रभेदाः'–घ. 4 'प्रथिताः'–च.

कुतः पुनरेष नियमः ? यत्—एतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्य, इति चेत्—उक्तमत्र यथा—काव्ये दोषगुणालङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायां अन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात्। ततश्च—यः अलङ्कारः यदीयान्वयव्यतिरेकौ अनुविधत्ते,[1] सः तदलङ्कारः व्यवस्थाप्यते इति। एवं च यथा पुनरुक्तवदाभासः परम्परितरूपकं च[2] उभयोः भावाभावानुविधायितया उभयालङ्कारौ,[3] तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः। अर्थस्य तु

---

## सङ्केतः

**भावाभावाविति।** भावः अन्वयः, अभावः व्यतिरेकः। **प्रभृतयोऽपीति** प्रभृतिभणनात् अपह्नुति-सहोक्ति-सङ्कर[4]-संसृष्टि-दीपकाद्याः ज्ञेयाः। **अर्थस्य त्विति।** वस्तुतस्तु[5]—परम्परितरूपकादेः उभया-

## मधुमती

**उक्तमत्रेति।** नवमोल्लासे श्लेषालङ्कारप्रकरणे इत्यर्थः। **तथाशब्देति।**

'क्षणदासावक्षणदा—'

इत्यादौ प्रागुदाहृतशब्दशक्तिमूलविरोधाङ्गभूतार्थान्तरन्यास-शब्दसाम्यनिबन्धनोपमादयः बोद्धव्याः॥

नन्वेवं तेषां अर्थालङ्कारमध्ये गणनं कुतः? इत्यत आह—**अर्थस्येति।**

---

1 'यदीयौ भावाभावावनुविधत्ते'–ख. 2 'वा'–ख. 3 'ङ्कारौ व्यवस्थापितौ'–क. 4 सङ्करेति नास्ति–ग. 5 'वस्तुतया'–ग.

तत्र[1] वैचित्र्यं उत्कटतया प्रतिभासते इति वाच्यालङ्कार-मध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः ॥

'योऽलङ्कारो यदाश्रितः स तदलङ्कारः' इत्यपि कल्पनायां अन्वयव्यतिरेकावेव[2] समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्य आश्रयाश्रयिभावस्य

---

## सङ्केतः

लङ्कारतया भिन्नत्वेन वक्तुं युक्तौ, अथापि अर्थालङ्कारेषु तत्पाठः अर्थस्य उत्कटतया वैचित्र्यात्[3]। एवं पुनरुक्तवदाभासोऽपि शब्दस्योत्कटवैचित्र्यात् शब्दालङ्कारत्वेनोक्तः ॥

ननु आश्रयाश्रयिभावः शब्दालङ्कारत्वे हेतुः, न तु अन्वयव्यतिरेकौ इत्याह—**योऽलङ्कार इति**। **विशिष्टस्येति**। यत्र आश्रयस्य नित्यता

## मधुमती

अत एव यत्र शब्दवैचित्र्यं उत्कटम् सः पुनरुक्तवदाभासः शब्दालङ्कार एव गणितः। **वस्तुस्थितिमिति**। तथा च वस्तुगत्या उभयालङ्कारत्वमेव।

अलङ्कारसर्वस्वकारमतं अपाकर्तुमाह—**योऽलङ्कारः इति**। विवक्षा-बाधकमाह—**तदाश्रयणमिति**। आश्रयाश्रयिभावो हि न सम्बन्धेन विना, सम्बन्धश्च न प्रतिपाद्यप्रतिपादकभावः। सर्वेषां शब्दालङ्कारप्रभवत्व[4]-प्रसङ्गात्। शब्दस्यैव सर्वत्र[5] प्रतिपादकत्वात्। न च तन्मुखप्रेक्षित्वम्। एवं हि[6] शब्दस्य अर्थमुखप्रेक्षित्वेन अनुप्रासादीनामपि अर्थालङ्कारत्वप्रसङ्गः।

---

1 'तत्रैव'–ख. 2 'रेकाववश्यं'–ख. 3 'वैधर्म्यात्'–घ. 4 'लङ्कारव'–ज. 5 'स्यैव प्रतिपाद्य'–ज. 6 'प्रेक्षित्वमेव हि'–च.

अभावात्, इति अलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेकः ज्यायान् ॥

इति अलङ्कारप्रकरणनिगमनम्

---

## सङ्केतः

नास्ति । नित्यस्य हि नान्वयव्यतिरेकौ निबन्धनम् । नित्यस्य व्यतिरेकाभावात् । **व्यतिरेको** हि भेदः इति ॥ इति निगमनम् ॥

## मधुमती

तथा च—तदन्वयव्यतिरेकित्वमेव तथात्वे प्रयोजकमिति भावः ॥ **व्यतिरेकः इति** । भेद इत्यर्थः ॥ इति निगमनम्[18] ॥

---

18 कुवलयानन्दाद्यर्वाचीनग्रन्थेषु इतोऽप्यधिकतया केचन अलङ्काराः प्रतिपादिताः । ते च आलङ्कारिकसार्वभौममम्मटपरिकल्पितेष्वेवालङ्कारेषु अन्तर्भूताः, अनलङ्कारा वा इति उद्योतादौ प्रतिपादितम् । तच्चेदानीं सङ्गृह्यते :—

तत्र प्रथमं कुवलयानन्दे 'इत्थं शतमलङ्काराः' इति प्रतिपादितान् अलङ्कारान् निर्दिश्य, तदनु सर्वेषामलङ्काराणां निर्दिष्टं लक्षणं, विभागं, अन्तर्भावं; अतिरिक्तानां केषाञ्चित् अनलङ्कारतां वा प्रकाशकृत्परिकल्पितालङ्कारक्रमानुसारेण सङ्क्षेपतः उपहरामः ॥ तथाहि :—

१ उपमा-(p. 331) २ -अनन्वयावादौ (p. 361) ३ उप-मेयोपमा ततः । (p. 362) ४ प्रतीपं (p. 528) ५ रूपकं चैव (p. 374) ६ परिणामस्ततो मतः । (अं. 6) ७ उल्लेखः (अं. 12) ८ स्मृतिमत्-(p. 524) ९-भ्रान्तिमत्-(p. 527) १०-सन्देहाः (p. 369) ११ अपह्नुतिः । (p. 387) १२ उत्प्रेक्षा-(p. 364) १३ -अतिशयोक्ती च (p. 409) १४ ततः स्यात् तुल्ययोगिता । (p. 425) १५ दीपकालङ्कृतिश्चैव (p. 421) १६ ततः आवृत्ति-दीपकम् (अं. 1) १७ प्रतिवस्तूपमा चैव (p. 415) १८ स्याद् दृष्टान्तो (p. 418) १९ निदर्शना । (p. 395) २० व्यतिरेकः (p. 427) २१ सहोक्तिश्च (p. 460) २२ विनोक्तिस्तदनन्तरम् । (p. 462) २३ समासोक्तिः (p. 393) २४ परिकरः (p. 488) २५ तथा परिकराङ्कुरः । (अं. 36) २६ श्लेषो ज्ञेयः (p. 391) २७ -अप्रस्तुतप्रशंसा च (p. 399) २८ प्रस्तुताङ्कुरः । (अं. 11) २९ पर्यायोक्तं (p. 470) ३० ततो व्याजस्तुतिः (p. 558) ३१ स्याद्व्याजनिन्दनम् । (अं. 25) ३२ आक्षेपालङ्कृतिश्चैव (p. 437) ३३ विरोधाभास एव च । (p. 450) ३४ विभावना (p. 441) ३५ विशेषोक्तिः (p. 443) ३६ असम्भव उदाहृतः । (अं. 23) ३७ असङ्गतिश्च (p. 506) ३८ विषमं (p. 512) ३९ समं चैव (p. 510) ४० विचित्रकम् । (अं. 47) ४१ अधिकालङ्कृतिश्च (p. 516) ४२ अल्पालङ्कृतिस्तदनन्तरम् । (अं. 48) ४३ अन्योन्यं च (p. 499) ४४ विशेषश्च (p. 535) ४५ व्याघातालङ्कृतिस्ततः । (p. 542) ४६ हेतुमाला (p. 496) ४७ एकावली च (p. 523)

---

(अं=अन्तर्भावः—काव्यप्रकाशानुगुणतत्संख्याकालङ्कारे.) (न=अलङ्कारत्वमेव नास्ति.)
(श-अ=शब्दालङ्कारः एव न त्वर्थालङ्कारः.)

४८ मालादीपक-(p. 423) ४९-सारकौ । (p. 504) ५० यथा-सङ्ख्यं च (p. 446) ५१ पर्यायः (p. 482) ५२ परिवृत्तिस्ततो मता । (p. 464) ५३ परिसङ्ख्याऽलङ्कृतिः स्यात् (p. 492) ५४ विकल्पस्तदनन्तरम् । (अं. 5) ५५ समुच्चयस्ततः प्रोक्तः (p. 476) ५६ ततः कारकदीपकम् । (p. 421) ५७ समाधिः (p. 509) ५८ प्रत्यनीकं च (p. 517) ५९ काव्यार्थापत्तिरेव च । (अं. 12) ६० काव्यलिङ्गं (p. 467) ६१ ततश्चार्थान्तरन्यास उदाहृतः । (p. 447) ६२ विकस्वरः स्यात् (अं. 22) ६३ प्रौढोक्तिः (अं. 12) ६४ सम्भावनमतः परम् । (अं. 12) ६५ मिथ्याध्यवसितिश्चैव (अं. 12) ६६ ललितं च (अं. 10) ६७ प्रहर्षणम् । (अं. 45) ६८ विषा-दनं (अं. 47) ६९ तथोल्लासः (अं. 30) ७० अवज्ञाऽलङ्कृतिरेव च । (अं. 47) ७१ अनुज्ञा (अं. 56) ७२ लेश-(अं. 56) ७३-मुद्रे च (न) ७४ रत्नावल्यपि (न) ७५ तद्गुणः । (p. 539) ७६ स्यात् पूर्वरूपालङ्कारः (अं. 45) ७७ अतद्गुण-(p. 540) ७८ अनुगुणावपि । (अं. 57) ७९ मीलितं चैव (p. 520) ८० सामान्यं (p. 532) ८१ उन्मीलित-(अं. 50) ८२-निमी-लितौ । (न) ८३ उत्तरं (p. 500) ८४ सूक्ष्म-(p. 503) ८५-पिहिते (अं. 42) ८६ व्याजोक्तिस्तदनन्तरम् । (p. 490) ८७ गूढोक्तिः (न) ८८ विवृतोक्तिश्च (न) ८९ युक्तिः (अं. 37) ९० लोकोक्तिरेव च । (न) ९१ छेकोक्तिश्चैव (न) ९२ वक्रोक्तिः (श. अं.) ९३ स्वभावोक्तिश्च (p. 456) ९४ भाविकम् । (p. 456) ९५ उदात्तं च (p. 473) ९६ तथाऽत्युक्तिः (अं. 32) ९७ निरुक्ति-स्तदनन्तरम् । (अं. 8) ९८ प्रतिषेधः (न) ९९ विधिः (न) १०० हेतुः (अं. 12) इत्यलङ्कृतयः शतम् ॥

इतोऽप्यन्ये पञ्चदशालङ्काराः उक्ताः । यथा—

रस-भाव-तदाभास-भावशान्तिनिबन्धनाः ।
चत्वारो रसवत् प्रेय ऊर्जस्वि च समाहितम् ॥

भावस्य चोदयः सन्धिः शबलत्वमिति त्रयः ।
अष्टौ प्रमाणालङ्काराः प्रत्यक्षप्रमुखाः क्रमात् ॥
एवं पञ्चदशान्यानप्यलङ्कारान् विदुर्बुधाः ॥ इति ॥

इतोऽप्यन्ये वर्धमान—निश्चयादयोऽप्यलङ्काराः अन्यैः अङ्गीकृताः । सर्वेषामेषामलङ्काराणां यथासम्भवं प्रथमं प्रकाशकृन्निष्कृष्टलक्षणं, ततः दीक्षितादिसंमतं लक्षणं च सङ्गृह्य प्रकाशयामः । तथाहि—

१. **उपमा**[1]—उपमानोपमेययोर्भेदे सति वाक्यार्थोत्स्कारकं चमत्कारिसाधारणधर्मवत्त्वं उपमा । सा द्विविधा—पूर्णा लुप्ता चेति । यत्रोपमानादीनां चतुर्णामप्युपादानं सा पूर्णा, तेष्वेकस्य द्वयोस्त्रयाणां वा अनुपादाने लुप्ता । तत्र पूर्णा वाक्यगा, समासगा, तद्धितगा चेति त्रिविधा । त्रिविधाप्येषा श्रौती आर्थी चेति द्विविधेति षड्विधा पूर्णा ॥ लुप्ता तु सप्तविधा—उपमानस्य साधारणधर्मस्य वाचकस्य लोपे चेत्येकैकस्य त्रिधा, धर्मवाद्योः धर्मोपमानयोः वाद्युपमेययोरिति द्विलोपे त्रिधा, उपमान-धर्म-वाचकानां त्रयाणां लोपे त्वेकेति । तत्र **धर्म**लोपोपमा पञ्चधा— समासे श्रौती, वाक्ये श्रौती, समासे आर्थी वाक्ये आर्थी, तद्धिते आर्थी चेति ॥ लुप्तो**पमानो**पमा द्विधा—वाक्ये समासे चेति ॥ **वाचक**लोपे सप्तविधा—द्वयोः समासे, त्रयाणां समासे कर्मक्यचि अधिकरणक्यचि, क्यङि, कर्मणमुलि, कर्तरि णमुलि चेति ॥

धर्मवाद्योर्लोपे द्विधा—क्विप्गा—समासगा चेति ॥ धर्मोपमानयोर्लोपे द्विधा—समासगा, वाक्यगा चेति ॥ वाद्युपमेययोर्लोपे एकविधा—क्यच्प्रत्यये । त्रिलोपे एकविधा—समासगा ॥ आहत्य षड्विंशतिः उपमाभेदाः (p. 331.1)

**[उपमानम्[2]]**—इदं उपमायामेवान्तर्भूतम् ॥

**[आवृत्तिदीपकम्[3]]**—त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् । वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी । उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः । माद्यन्ति चातकाः तृप्ताः माद्यन्ति च शिखावलाः ॥ इत्युक्तलक्षणस्य आवृत्तिदीपकस्य वाचकलुप्तोपमायां अन्तर्भावः ॥

२. **अनन्वयः[4]**—उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे, भेदे सत्यपि तद्घटितसादृश्योपचारेण निबध्येते तत्र अनन्वयः । एकस्यैव वस्तुनः उपमानोपमेयत्ववर्णनम् ॥ (p. 361.2)

[सर्वथैव उपमाननिषेधात्मके **असमालङ्कारे[5]** प्राचीनैरुक्ते अस्यान्तर्भावः इति केचित् । व्यतिरेकालङ्कारध्वनिरूपत्वात अनन्वयस्य पृथगलङ्कारत्वमेव नास्तीति केचित् ]

२. **उपमेयोपमा[6]**—उपमानोपमेययोः उपमेयोपमानभावः तृतीयसदृशव्यवच्छेदफलकः वाक्यद्वयकल्पितश्चेत् उपमेयोपमा ॥ (p. 362)

४ **उत्प्रेक्षा[7]**—उत्कटोपमानकोटिकप्रकृतविषयकसम्भावनम् । प्रकृतस्य सम्भविनोऽर्थस्य समेन=उपमानेन असम्भविना=कविकल्पितेन सह तादात्म्येन सम्भावनम् ॥ अन्यधर्मसम्बन्धनिमित्तेन अन्यस्य अन्यतादात्म्यसम्भावनम् ॥ [सा च षड्विधा—उक्तानुक्तविषयवस्तुहेतुफलोत्प्रेक्षाभेदात् ] ॥ (p. 364)

५. ससन्देहः[8]—प्रकृतस्य समेन सादृश्यज्ञानप्रयोज्यः यः संशयः=संशयज्ञानं, स ससन्देहः ॥ (p. 369)

[वितर्कः][9]—संशयोत्तरमनिर्णयः ऊहः। अस्य ससन्देहे अन्तर्भावः, वितर्ककारणत्वेन संशयस्यावश्यमङ्गीकार्यत्वात्, केवलवितर्कस्य वर्णनीयोत्कर्षानाधायत्वात् ॥]

[विकल्पः][10]—अस्यापि ससन्देह एवान्तर्भावः इति केचित्। अलङ्कारत्वमेव नेति केचित् ॥

६. रूपकम्[11]—उपमानोपमेयतावच्छेदकपुरस्कारेण शब्दान्निश्रीयमानयोः यः आरोपविषयाभेदः तत् रूपकम। तत् त्रिविधम्, सावयवम्, निरवयवं परम्परितं च। तत्राद्यं समस्तवस्तुविषयम्, एकदेशविवर्ति चेति द्विविधम्। द्वितीयं शुद्धं मालारूपं चेति द्विविधम्। तृतीयं श्लिष्टाश्लिष्टनिबन्धनतया द्विविधम्, इदं च केवलं मालारूपमिति प्रत्येकं द्विविधमिति आहत्य अष्टौ भेदाः॥ उपमानस्याभेदताद्रूप्याभ्यां उपमेयस्य यत् रञ्जनम्=स्वोपरक्तबुद्धिविषयीकरणम् तद्रूपकम्। उपात्तबिम्बाविशिष्टविषयधर्मिकाहार्यारोपनिश्चयविषयीभूतं उपमानाभेदताद्रूप्यान्यतरत् रूपकम् ॥ तच्च त्रिधा—आधिक्यन्यूनत्वानुभयोक्तिभिः ॥ (p. 374)

[परिणामः][12] परिणामः क्रियार्थश्चेत् विषयी विषयात्मना। प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ यत्रारोप्यमाणो विषयी किञ्चित्कार्योपयोगित्वेन निबध्यमानः स्वतः तस्य तदुपयोगित्वासम्भवात् प्रकृतात्मना परिणामं अपेक्षते तत्र परिणामालङ्कारः ॥ अस्य रूपके अन्तर्भावः ॥

७. अपह्नुतिः[13]। प्रकृतमुपमेयं असत्यतया व्यवस्थाप्य उपमानं यत् सत्यतया आहार्यनिश्चयविषयीक्रियते सा अपह्नुतिः। सा द्विविधा—शाब्दी आर्थी चेति ॥ (p. 387)

८. श्लेषः[14]—परिवृत्तिसहानामेव शब्दानां एकवृन्तगतफलद्वय-न्यायेन यत्रानेकार्थप्रतिपादकता सः (अर्थ) श्लेषः। अनेकार्थशब्दविन्यासः श्लेषः ॥ (p. 391)

[निरुक्तिः][15] निरुक्तिर्योगतो नाम्नां अन्यार्थत्वप्रकल्पनम्। ईदृशैश्चरितैः जाने सत्यं दोषाकरो भवान् ॥ अस्याः श्लेषेऽन्तर्भावः ॥

९. समासोक्तिः[16]—प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेष-महिम्ना यत्र प्रकृतार्थकेन वाक्येन अप्रकृतार्थवचनं=अप्रकृतगतव्यवहार-रूपार्थस्य प्रकृतवृत्तान्ते आरोपः=व्यञ्जनया प्रतिपादनं। सा समा-सोक्तिः ॥ (p. 393)

१०. निदर्शना[17]—वाक्यार्थयोः पदार्थयोर्वा यः प्रतीतिविषयता-मलभमानः सम्बन्धः औपम्यमाक्षिप्य पर्यवस्यति सा निदर्शना एका। यत्र क्रिययैव कार्यस्य तद्धेतोश्च हेतुहेतुमद्भावरूपः सम्बन्धः परान् प्रति बोध्यते तत्र अपरा निदर्शना ॥ उपमेयवाक्यार्थे उपमानवाक्यार्थाभेदारोपः निदर्शना। स्वक्रियया सहकारिभूतया क्रियाविशिष्टस्य वस्तुनः अर्थस्य बोधनं निबध्यते यत्र सा निदर्शना ॥ (p. 395)

[ललितम्][18] वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम्। ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥ अस्य निदर्शनायामन्तर्भावः शब्दोपात्तयो-रेव निदर्शनेति नियमाभावात् ॥

११. अप्रस्तुतप्रशंसा[11]—अप्राकरणिकेन प्राकरणिकाक्षेपः। सा पञ्चधा—कार्ये प्रस्तुते कारणस्य, निमित्ते प्रस्तुते कार्यस्य, सामान्ये विशेषस्य, विशेषे सामान्यस्य, तुल्ये तुल्यस्येति। अन्त्या त्रिधा—

विशेषणविशेष्यवाचिनां श्लिष्टत्वे, विशेषणवाचिनः श्लिष्टत्वे, सादृश्यमात्रस्यैव प्रकृताक्षेपहेतुत्वे चेति ॥ (p. 399)

[प्रस्तुताङ्कुरः][30] प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः। किं भृङ्ग! सत्यां मालत्यां केतक्या कण्टकेद्धया ॥ अस्य च अप्रस्तुतप्रशंसाया-मन्तर्भावः। अप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तार्थस्यैव ग्राह्य-त्वात्। समासोक्तौ वा अन्तर्भावः ॥

१२. अतिशयोक्तिः[21]—प्रकृतस्योपमेयस्य समेनोपमानेन निगी-र्याध्यवसानं—द्रढीयसी बुद्धिः सा प्रथमा। तदेव विविक्ताकारवस्त्वन्तरत्वे-नाध्यवसीयते चेत् सा द्वितीया। चेच्छब्देन यदिशब्देन वा असम्भविनोऽर्थस्य कल्पनं चेत् तृतीया। कारणकार्ययोः प्रसिद्धस्य पौर्वापर्यस्य वैपरीत्यं कारणस्य शीघ्रकारिताप्रतीतिफलकं चेत् सा चतुर्थी ॥ इयं च रूपक-अपह्नव-भेदक-सम्बन्ध-असम्बन्ध-अक्रम-चपल-अत्यन्तातिशयोक्तिरूपेण अष्टविधेति दीक्षिताः ॥ (p. 409)

[हेतुः][22] हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते। असावुदेति शीतांशुः मानच्छेदाय सुभ्रुवाम् ॥ हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते। लक्ष्मीविलासाः विदुषां कटाक्षा वेङ्कटप्रभोः ॥ अस्यातिशयोक्तावन्तर्भावः। आयुर्घृतमित्यादिवत् वैचित्र्याभावेन अनलङ्कारत्वमेव वा ॥

[उल्लेखः][23] बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते। स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥ एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः। गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥ अस्य अतिशयोक्तौ अन्तर्भावः ॥

[अर्थापत्तिः][24] अत्र यद्यर्थोक्तौ अतिशयोक्तावेवान्तर्भावः ॥

[प्रौढोक्तिः][25] प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् । कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥ असम्बन्धे सम्बन्धरूपातिशयोक्तौ अस्या अन्तर्भावः ॥

[सम्भावनम्][26] सम्भावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये । यदि शेषो भवेद्वक्ता कथिताः स्युः गुणास्तव ॥ अतिशयोक्तावन्तर्भावः ॥

[मिथ्याध्यवसितिः][27] किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् । मिथ्याध्यवसितिः, वेश्यां वशयेत् खस्रजं वहन् ॥ अस्या अपि अतिशयोक्तावन्तर्भावः ॥

१३. प्रतिवस्तूपमा[28]—एकस्य साधारणधर्मस्य उपमानोपमेयवाक्ययोः यत्र द्विरवस्थितिः शब्दभेदेन सा प्रतिवस्तूपमा ॥ (p. 415)

१४. दृष्टान्तः[29]—उपमानोपमेयसाधर्म्याणां सर्वेषां बिम्बप्रतिबिम्बभावः दृष्टान्तः ॥ (p. 418)

१५. दीपकम्[30]—उपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः एकवारमेवोपादानं यत् तदेकम् । कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयम् ॥ वर्ण्यावर्ण्यान्वितैकचमत्कारिधर्मः ॥ (p. 421)

१५-*a* मालादीपकम्[31]—उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशः ॥ (p. 423)

१६. तुल्ययोगिता[32]—केवलप्रकृतानां केवलाप्रकृतानां वा गुणक्रियादिरूपैकधर्मान्वयः । प्राकरणिकाप्राकरणिकोभयावृत्तित्वे सति औपम्या-

क्षेपकत्वं लक्षणम् ॥ अनेकप्रस्तुतमात्रसंबद्धैकधर्म—अनेकाप्रस्तुतमात्रसम्बद्धैकधर्मान्यतरत्वम् ॥ (२) हिताहितयोः श्लेषेणाभेदाध्यवसायः । (३) श्रेष्ठैः साम्यं विवक्षित्वा साधारणधर्मप्रतिपादनम् ॥ (p. 425)

१७. व्यतिरेकः[33]—उपमानादुपमेयस्याधिक्यवर्णनम् । एवं व्यतिरेकस्य द्वौ हेतू—उपमेयगतं उत्कर्षनिमित्तं, उपमानगतं अपकर्षनिमित्तं चेति । तयोर्द्वयोरप्युपादाने एकः । अनुपादाने त्रयो भेदाः—प्रथमस्यैव द्वितीयस्यैव उभयोरपि वा हेत्वोः अनुपादानात् । तदेवं चत्वारः । ते च प्रत्येकं त्रिधा— साधर्म्यस्य शब्दशक्त्या, अर्थशक्त्या आक्षेपेण वा सिद्धिरिति । एते सर्वेऽपि प्रत्येकं अश्लिष्टे श्लिष्टे च शब्द इति चतुर्विंशतिभेदः व्यतिरेकः ॥ (p. 427)

१८. आक्षेपः[34]—प्राकरणिकत्वात् वचनार्हस्य यो निषेधः, अशक्यवक्तव्यत्वातिप्रसिद्धत्वरूपविशेषाभिधित्सानिमित्तः सः आक्षेपः ॥ स द्विविधः—वक्ष्यमाणविषयः उक्तविषयश्चेति ॥ स्वयमुक्तस्यार्थस्य किञ्चिन्निमित्तमभिसंधाय प्रतिषेधः आक्षेपः ॥ यो निषेधः बाधितः सन् अर्थान्तरपर्यवसितः कश्चिद्विशेषमाक्षिपति सः आक्षेपः इत्यलङ्कारसर्वस्वकारः । विधौ व्यक्ते, निषेधे तिरोहिते च आक्षेपः ॥ (p. 437)

१९. विभावना[35]—कारणव्यतिरेकसामानाधिकरण्येन प्रतीयमाना कार्योत्पत्तिः ॥ (2) हेतुतावच्छेदकधर्मस्य तत्सम्बन्धस्य वा वैकल्ये विभावना ॥ (3) प्रतिबन्धके सत्येव कार्योत्पत्तिः ॥ (4) अकारणात् कार्यजन्म ॥ (5) विरुद्धात् कार्यसम्पत्तिः ॥ (4-5 अनयोः विरोधे अन्तर्भावः) (6) कार्यात् कारणजन्म । (अस्य तु विरोधाभासे अन्तर्भावः ॥ (p. 441)

२०. **विशेषोक्तिः**[36]— मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनम् । सा त्रिधा अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता चेति ॥ (p. 443)

२१. **यथासङ्ख्यम्**[37]—क्रमवतां पदार्थानां उपदेशक्रमेणैव सम्बन्धवर्णनम् । क्रमेणोक्तानां पदार्थानां तेनैव क्रमेण अन्वयः ॥ (p. 446)

२२. **अर्थान्तरन्यासः**[38]—अनुपपद्यमानतया संभाव्यमानस्यार्थस्य उपपादनार्थं यदर्थान्तरं न्यस्यते सः । तत्र सामान्यं विशेषेण, विशेषो वा सामान्येन समर्थ्यते इति, द्वयोरपि समर्थनहेतुसाधर्म्यं वैधर्म्यं वा इति चतुष्प्रकारः॥ विशेषे प्रस्तुते तेन सह अप्रस्तुतविशेषरूपस्य वा अर्थान्तरस्य न्यसनम् ॥ (p. 447)

**[उदाहरणम्]**[39] इदं अर्थान्तरन्यासे अन्तर्भूतम् ।

**[विकस्वरः]**[40] यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः । स न जिग्ये, महान्तो हि दुर्धर्षाः सागरा इव ॥ कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य, तत्समर्थनाय पुनर्विशेषान्तरं विन्यस्यते चेत् सः विकस्वरः । अस्य च अर्थान्तरन्यासे अन्तर्भावः ॥

२३. **विरोधः**[41]—विरोधप्रतिभाप्रयोजकरूपेणाभिधानम् । जातेः जातिगुणक्रियाद्रव्यैः चतुर्भिर्विरोधे चत्वारः, गुणस्य गुणक्रियाद्रव्यैर्विरोधे त्रयः, क्रियायाः क्रियाद्रव्याभ्यां विरोधे द्वौ, द्रव्येण द्रव्यस्य विरोधे एकः—इत्याहत्य अस्य दश भेदाः ॥ (p. 450)

**[विरोधाभासः]**[42] अयं विरोध एव ॥

[असम्भवः][43] असम्भवोऽर्थनिष्पत्तेः असम्भाव्यत्ववर्णनम् । को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥ कस्यचित् पदार्थस्य असम्भवनीयत्ववर्णनम् । अस्य विरोधे अन्तर्भावः ॥

२४. स्वभावोक्तिः[44]——वर्णनीयतत्तद्वस्तुमात्रगतप्रकृतिसिद्धधर्मवर्णनम् ॥ (p. 456)

[जातिः][45] स्वभावोक्तिमेव केचित् जातिं वदन्ति ॥

२५. व्याजस्तुतिः[46]——मुखे निन्दावगतौ यत् स्तुतौ पर्यवसानम्, स्तुतेर्मुखेऽवगमे निन्दायां वा पर्यवसानं च यत्र सा व्याजस्तुतिः ॥ व्याजेन स्तुतिः व्याजरूपा स्तुतिर्वेति ॥ (p. 458)

[व्याजनिन्दा][47] निन्दाया निन्दया व्यक्तिः व्याजनिन्देति गीयते। विधे स निन्द्यो यस्ते प्राक् एकमेवाहरच्छिरः ॥ इतरनिन्दाव्याजेन इतरनिन्दा ॥ अस्याः व्याजस्तुतौ अन्तर्भावः ॥

२६. सहोक्तिः[48]——शब्दशक्त्या एकान्वय्यर्थाभिधायकं पदं सहार्थान्वयबलात् अनेकान्वय्यर्थाभिधायकं चेत् सा सहोक्तिः ॥ यत्र गुणप्रधानभावावच्छिन्नयोः शब्दार्थमर्यादया एकधर्मसम्बन्धः सा ॥ चमत्कृतिजनकं साहित्यम् ॥ (p. 460)

२७. विनोक्तिः[49]——केनचिद्विना कस्यचित् अशोभनत्वं शोभनत्वं वा प्रतिपाद्यते चेत् विनोक्तिः द्वेधा ॥ (p. 462)

२८. परिवृत्तिः[50]——समेन पदार्थेन समस्य पदार्थस्य, असमेन असमस्य पदार्थस्य वा परिवर्तनम् । अन्यश्च न्यूनेन उत्तमस्य, उत्तमेन न्यूनस्य वा इति । आहत्य त्रिविधा ॥ (p. 464)

२९. भाविकम्[51]—अलौकिकप्रत्यक्षविषयाणां लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छयाऽभिधानं यत्र तत्र भाविकम्। इदं अतिशयोक्तावेवान्तर्भूतमिति केचित् ॥ (p. 465)

[प्रत्यक्षम्][52]—अस्य भाविके अन्तर्भावः ॥

३०. काव्यलिङ्गम्[53]—स्वतोऽनुपपद्यमानार्थोपपादकहेतोर्वचनम्॥ हेतुश्च वाक्यार्थरूपः, एकपदार्थरूपः, अनेकपदार्थरूपः इति त्रिधा ॥ (काव्याभिमतं लिङ्गम्, न तु तर्काभिमतम्।) समर्थनापेक्षस्य समर्थनम् ॥ (p. 467)

[उल्लासः][59] एकस्य गुणदोषाभ्यां उल्लासोऽन्यस्य तौ यदि। अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी। काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः। निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥ तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम्। लाभोऽयमेव भूपाल! सेवकानां न चेद्वधः ॥ एकस्य कस्यचिद्गुणेन अन्यस्य गुणः, दोषेण दोषः, गुणेन दोषः, दोषेण गुणो वा वर्ण्यते चेत् उल्लासः ॥ अस्य काव्यलिङ्गे विषमे वा अन्तर्भावः ॥

३१. पर्यायोक्तम्[55]—वाच्यवाचकभावभिन्नेन व्यञ्जनाव्यापारेण अर्थात् वाच्यस्यैव यदभिधानं तत् पर्यायोक्तम् ॥ (1) विवक्षितस्वप्रकारातिरिक्तेन चारुतरेण रूपेण व्यङ्ग्यस्याभिधानम् ॥ (2) रमणीयेन व्याजेन स्वस्य परस्य वा इष्टस्य यत् सम्पादनम् ॥ (p. 470)

३२. उदात्तम्[56]—धनशौर्यौदार्यादेः असंभाव्यमानसमृद्धियोगवर्णनम् ॥ वर्णनीयस्यार्थस्य विशेषणतया महतः=उदाररामादिवीरचरितादेः उपादाने अपरमुदात्तम् ॥ (p. 473)

[अत्युक्तिः][57] अत्युक्तिरद्भुतातथ्यशौर्योदार्यादिवर्णनम् । त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः । इयं उदात्ते अन्तर्भूता ॥

३३. समुच्चयः[58]—प्रस्तुतकार्यसाधके स्थिते सति साधकान्तराणि यत्र अभिधीयन्ते तत्र समुच्चयः ॥ अविरोधेन सम्भावितयौगपद्यानां बहूनां गुम्फनं-वर्णनम् ॥ (p. 476)

३४. पर्यायः[59]—एकत्वेन विवक्षितं वस्तु यत्र क्रमेण अनेकस्मिन् भवति क्रियते वा स एकः । अनेकं एकस्मिन् क्रमेण यद्भवति क्रियते वा स अपरः ॥ (p. 482)

[वर्धमानः][60] अयं पर्याये अन्तर्भूतः ॥

३५. अनुमानम्[61]—कविप्रतिभाकल्पितं यत् एकस्मिन् धर्मिणि साधनेन साध्यस्य उन्नयनं तत् अनुमानम् । इदं च दीक्षितैः नोद्भावितम् ॥ (p. 486)

[अनुमानम्][62] प्रमाणालङ्कारस्यास्य अत्रैवान्तर्भावः ॥

[अर्थापत्तिः][63] येन केनचिदर्थेनोक्तेन तुल्यकारणत्वादर्थान्तरस्यापादनम् । अस्याः अनुमाने अन्तर्भावः । यद्यर्थोक्तौ च अतिशयोक्तावन्तर्भावः ॥

३६. परिकरः[64]—प्रकृतार्थोपपादकचमत्कारिव्यङ्ग्यकैः बहुभिर्विशेषणैः विशेष्यस्य परिपोषणम् ॥ (p. 488)

[परिकराङ्कुरः][65] साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवः चतुर्भुजः ॥ अस्य परिकरे अन्तर्भावः ॥

२७. व्याजोक्तिः[66]—अस्फुटमपि वस्तुस्वरूपं लिङ्गादिना कथं चिदभिव्यक्तं केनापि कपटेन अपह्नूयते चेत् व्याजोक्तिः ॥ (p. 490)

[व्याजोक्तिः][67] कुवलयानन्दोक्तायाः अस्याः ध्वनिविशेषे अन्तर्भावः ॥

[युक्तिः][68] युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये । त्वामालिखन्ती दृष्ट्वाऽन्यं धनुः पौष्पं करेऽलिखत् ॥ अस्याः व्याजोक्तावन्तर्भावः । उक्तिपदस्य व्यापारमात्रपरत्वात् ॥

३८. परिसङ्ख्या[69]—यत्किञ्चित् कथितं सत् स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत् कल्पते सा परिसङ्ख्या । सा द्विविधा—प्रश्नपूर्विका, तदपूर्विका चेति ॥ एकं वस्तु प्रतिषिध्य अपरस्मिन् वस्तुनो नियमनम् ॥ (p. 492)

३९. कारणमाला[70]—उत्तरमुत्तरमर्थं प्रति पूर्वस्य पूर्वस्यार्थस्य कारणता वर्ण्यते चेत् कारणमाला । यथापूर्वं परस्य परस्य कारणत्वे वर्णितेऽपि कारणमाला ॥ (p. 496)

४०. अन्योन्यम्[71]—परस्परं परस्परगतयोः एकजातीयक्रिययोः गुणयोर्वा जनने वर्णिते अन्योन्यम् ॥ परस्परमुपकारवर्णनम् ॥ (p. 499)

४१. उत्तरम्[72]—यत्र उत्तरश्रवणमात्रेण अनुपात्तमपि प्रश्नवाक्यं परिकल्प्यते तदेकम् । प्रश्ने सति लोकातिक्रान्तगोचरतया असम्भाव्यं यत् असकृत्प्रतिवचनं तदपरम् ॥ किञ्चिदभिप्रायसहितं गूढमुत्तरम् । प्रश्नेन उत्तरान्तरेण च अभिन्नमुत्तरं चित्रमुत्तरम् ॥ (p. 500)

४२. सूक्ष्मम्[73]—सूक्ष्ममतिमात्रसंवेद्यस्य आकाराल्लक्षितस्य, इङ्गिताल्लक्षितस्य वा प्रकाशनम् ॥ पराशयाभिज्ञस्य इतरस्मिन् परविषये साभिप्रायं चेष्टितम् ॥ (p. 503)

[भावः][74] सूक्ष्मालङ्कार एवायं भावः परिकल्पितः इति केचिद्वदन्ति ॥

[पिहितम्][75] पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् । प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ अस्य सूक्ष्मे अन्तर्भावः ॥

४३. सारः[76]—उत्तरोत्तरमधिकतया वर्णनीयस्य उत्कर्षस्य वाक्यशेषांशरूपचरमसीमागमित्वे सारः ॥ (p. 504)

[वर्धमानः][77] रत्नाकरोक्तस्य अस्यालङ्कारस्य सारेऽप्यन्तर्भावः ॥

४४. असङ्गतिः[78]—कार्यकारणभूतयोः धर्मयोः अत्यन्तं भिन्नदेशतया एककाले कथनम् ॥ (1) यत्र कार्यहेत्वोः भिन्नाधिकरणत्वं अदृष्टं तयोः तन्निबध्यमानं एका ॥ (2) अन्यत्र कर्तव्यस्य वस्तुनः ततोऽन्यत्र कृतिः द्वितीया । (3) अन्यत् कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकार्यकरणम् तृतीया ॥ समानाधिकरणत्वेन प्रसिद्धयोः वैयधिकरण्यनिबन्धो वा ॥ (p. 506)

४५. समाधिः[79]—एककारणजन्यकार्यस्य आकस्मिककारणान्तरसमवधानाहितं सौकर्यम् ॥ कारणान्तरसंनिधेर्वशात् कार्यस्य सुकरत्वम् ॥ (p. 509)

[प्रहर्षणम्][80]—उत्कण्ठितार्थसंसिद्धिः विना यत्नं प्रहर्षणम् । तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ अस्य समाधौ अन्तर्भावः । सौकर्यस्य अनायासेन सिद्धयादिरूपस्येव आकस्मिकत्वादिरूपस्यापि ग्रहणात् ॥

[पूर्वरूपम्][81] पुनः स्वगुणसम्प्राप्तिः पूर्वरूपमुदाहृतम् । हरकण्ठांशुलिप्तोऽपि शेषः त्वद्यशसा सितः ॥ पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि । दीपे निर्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः ॥ अस्य च समाधौ अन्तर्भावः ॥

४६ समम्[82]—इदमनयोः समुचितमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानम् । योग्यता च प्रकर्षनिकर्षाभ्याम् ॥ वर्णनीयद्वयं विषयीकृत्य अनयोरिदं श्लाघ्यमिति ज्ञानं चेत् तदा समम् ॥ (1) परस्परमनुरूपयोः सम्बन्धस्य वर्णनम् । (2) कारणेन सारूप्यवर्णनम् ॥ (p. 510)

४७. विषमम्[83]—द्वयोरत्यन्तविलक्षणतया यत् क्वचिद्योगः घटनां नोपैति, किन्तु अनुपपद्यमानतयैव प्रतीयते स एकः । यच्च क्वचित् कार्यमारभमाणः कर्ता बलवत्कारणान्तरेण विष्टम्भात् तत्क्रियाफलं नाप्नोति, प्रत्युतानिष्टं विषयमासादयेत् स द्वितीयः । यच्च क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतः तौ तृतीयचतुर्थौ । सर्वत्र समताया विपर्ययात् ॥ (1) परस्परमानुरूप्यरहितयोः पदार्थयोः यत्र सम्बन्धो वर्ण्यते । (2) कारणविलक्षणस्वरूपस्योत्पत्तिर्यत्र वर्ण्यते । (3) इष्टार्थसमुद्यमादनिष्टस्यावाप्तिरपि ॥ (p. 512)

[उल्लासः][84] अस्य विषमे वा काव्यलिङ्गे वा अन्तर्भावः ॥

[विषादः][85] इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥ अस्य विषमे अन्तर्भावः ॥

[अवज्ञा][86] ताभ्यां तौ यदि न स्यातां अवज्ञालङ्कृतिस्तु सा । स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरम् ॥ मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥ अस्याः विषमे विशेषोक्तौ वा अन्तर्भावः ॥

---

[विचित्रम्][87] विचित्रं तत्प्रयत्नश्चेत् विपरीतः फलेच्छया । नमन्ति सन्तः त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ फलेच्छया विपरीतः प्रयत्नश्चेत्= इष्टविपरीताचरणं चेत् विचित्रम् । अस्य च विषमे अन्तर्भावः ॥

४८. **अधिकम्**[88] वर्णनीयोत्कर्षं बोधयितुं यन्महत्याश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयस्तया वर्ण्यते, महत्याश्रये वा विषय आधेय एव वा तथा वर्ण्यते तदुभयं अधिकम् ॥ विशालादाधारादाधेयस्य, विशाला-दाधेयादाधारस्य वा आधिक्यवर्णनम् ॥ (p. 516)

[अल्पम्][89] अल्पं तु सूक्ष्मादाधेयाद्यधारस्य सूक्ष्मता । मणि-मालोर्मिका तेऽद्य करे जपवटीयते ॥ अस्य अधिके अन्तर्भावः ॥

४९. **प्रत्यनीकम्**[90]—अपकारिणमपि विपक्षं साक्षादपकर्तुमक्ष-मेण केनापि तदीयस्य तिरस्करणं तमेवोत्कर्षयितुं यत् उच्यते तत् ॥ बलवतः शत्रोः पक्षान्तःपातिनि तदीये यः पराक्रमः सः ॥ (p. 518)

५०. **मीलितम्**[91]—स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनः लिङ्गैः अतिसाम्यात् भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्व वर्णनम् मीलितम् ॥ (p. 520)

[उन्मीलितम्][92] भेदवैशिष्ट्ययोः स्फूर्तौ उन्मीलितविशेषकौ । हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ॥ अस्य मीलिते अन्तर्भावः ॥

५१. **एकावली**[93]—पूर्वं पूर्वं प्रति उत्तरस्य वस्तुनः यत्र विशेषणतया बाहुल्येन विधिः, यत्र वा तथा निषेधः सा द्विधा एकावली ॥ गृहीत-मुक्तरीत्या निबद्धार्थपङ्क्तिः एकावली ॥ (p. 523)

५२. स्मरणम्[94]—सदृशदर्शनोद्बुद्धसंस्कारजन्या वैचित्र्यजननी स्मृतिः स्मरणम् ॥ (p. 524)

५३. भ्रान्तिमान्[95]—प्राकरणिकदर्शनोद्बुद्धसंस्कारजन्याप्राकरणिकस्मृतिजन्यं यत् अप्राकरणिकतादात्म्येन निश्चयात्मकं ज्ञानं सः ॥ (p. 527)

५४. प्रतीपम्[96]—उपमानस्य प्रयोजनं निर्वाहयितुं उपमेयमेवालमिति अप्रयोजकतया उपमानं यदाक्षिप्यते, यच्च उपमानतया प्रसिद्धस्य उपमेये तस्माद्विशेषविवक्षया अनादरार्थं उपमेयभावः कल्प्यते तदुभयरूपं प्रतीपम् ॥ (1) प्रसिद्धोपमानोपमेयभावप्रातिलोम्यम् । (2) अत्युत्कृष्टगुणतया वर्ण्यमानस्य अन्यत्र स्वसादृश्यमसहमानस्य उपमेयं किञ्चित्प्रदर्श्य तावता तस्य तिरस्कारः । (3) अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्य अवर्ण्यस्य वर्ण्योपमेयं परिकल्प्य तावता तस्य तिरस्कारः । (4) अवर्ण्ये वर्ण्योपमित्यनिष्पत्तिवचनम् । (5) उपमेयस्यैव उपमानप्रयोजनधूर्वहत्वेन उपमानकैमर्थ्यवर्णनम् ॥ (p. 528)

५५. सामान्यम्[97]—अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्य अप्रस्तुतेन गुणसाम्यविवक्षया ऐकात्म्यं बध्यते चेत् तत् सामान्यम् । समानगुणयोगात् ॥ (p. 532)

[विशेषः][98]—ग्रन्थान्तरोक्तः विशेषः सामान्ये एवान्तर्भूतः ॥

५६. विशेषः[99]—(1) प्रसिद्धमाधारं विना आधेयस्य विशिष्टावस्थितिः । (2) एकस्य वस्तुनः युगपद्वा एकस्वभावेन अनेकवृत्तिः सः । (3) रभसेन अन्यत् कार्यं कुर्वतः कर्तुः यत् अशक्यस्यान्यस्यापि कार्यस्य तथैव करणं सः ॥ (p. 535)

[अनुज्ञा][100] दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् । विपदः सन्तु नः शश्वत् यासु सङ्कीर्त्यते हरिः ॥ अस्याः विशेषे अन्तर्भावः ॥

[लेशः][101] लेशः स्यात् दोषगुणयोः गुणदोषत्वकल्पनम् अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु । शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ अस्य च विशेषे अन्तर्भावः ॥

५७. तद्गुणः[102]—अत्युत्कृष्टगुणस्य अप्रस्तुतस्य योगात् तद्गुणसम्पदुपरागात् स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत् तदनुकारमेवासादयति सः ॥ स्वगुणत्यागादनन्तरं अन्यदीयगुणग्रहणम् ॥ (p. 539)

[अनुगुणः][103] प्राक्सिद्धस्वगुणोत्कर्षोनुगुणः परसंनिधेः । नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥ परसंनिधिवशात् पूर्वसिद्धस्य स्वगुणस्योत्कर्षः ॥ अस्य तद्गुणे एवान्तर्भावः ॥

५८ अतद्गुणः[104]—अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणः अप्रकृतः प्रकृतस्य गुणं नानुहरति तदा अतद्गुणः । स्वसम्बन्धपदार्थान्तरनिष्ठरूपादिगुणासङ्क्रमणोक्तिः ॥ (p. 540)

५९. व्याघातः[105]—केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं, तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तज्जातीयेनैवोपायेन ततोऽन्यथा चेत् साध्यते स व्याघातः ॥ (1) तत्कार्यसाधनं वस्तु तद्विरुद्धकार्यसाधनं चेत् एकः । (2) कार्यविशेषनिष्पादकतया केनचित् सम्भाव्यमानादर्थात् अन्येन कार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत् स द्वितीयः ॥ (p. 542)

६०. संसृष्टिः[106]—एवमुक्तानां अलङ्काराणां स्वरूपतो विषयतो वा परस्परमनपेक्षतया यदेकस्मिन् काव्ये स्थितिः सा संसृष्टिः ॥ तिलतण्डुलन्यायेन स्फुटावगम्यभेदालङ्कारमेलने संसृष्टिः ॥ (p. 544)

६१. सङ्करः[107]—तेषामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये वा अन्यापेक्षणात् आत्ममात्रे अनासादितस्वतन्त्रभावानां परस्परं अनुग्राह्यानुग्राहकत्वं चेत् स एकः। यत्र द्वयोर्बहूनां वा अलङ्काराणां एकत्र योग्यत्वेऽपि विरोधान्नैकदा व्यवस्थितिः, न चैकतरपरिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत, सोऽप्यनिश्चयरूपः द्वितीयः। एकत्र पदे यदुभौ शब्दार्थालङ्कारौ स्फुटं व्यवस्थितौ भवतः सः तृतीयः॥ नीरक्षीरन्यायेन अस्फुटभेदालङ्कारसंमेलने सङ्करः। स च अङ्गाङ्गिभावेन, समप्राधान्येन, सन्देहेन, एकवाचकानुप्रवेशेन चेति चतुर्विधः॥ (सङ्करसंसृष्टी नृसिंहाकारन्यायेन चारुत्वातिशयोपलम्भात् पृथक्परिगणिते)॥ (p. 547)

इतः परं अष्टसु प्रमाणालङ्कारेषु—

[प्रत्यक्षम्][108]—भाविके अन्तर्भूतम्, इन्द्रियजन्यज्ञानस्य वर्णनात्मकम्॥

[अनुमानम्][109] दोषरहिताल्लिङ्गात् अर्थस्य प्रतीतिः। अस्य अनुमानाख्ये अलङ्कारे अन्तर्भावः॥

[उपमानम्][110] वर्ण्यमानात्सादृश्यात् प्रकृतस्य वस्तुनः प्रतीतिः। इदं उपमायां अन्तर्भूतम्॥

[शब्दः][111] वेदादिवचनोपन्यासान्निश्चयः। अस्य अलङ्कारत्वं न॥

[ऐतिह्यम्][112] जनवार्ता प्रमाणत्वेन वर्ण्यते चेत्। अस्य च अलङ्कारत्वमेव नास्ति॥

[अर्थापत्तिः][113] प्रकारान्तरेण असिद्ध्या अर्थस्य कल्पनम्। अस्य अलङ्कारत्वं नास्ति॥

[अनुपलब्धिः][114] प्रमाणत्वेन निदर्शितः अत्यन्ताभावः। अस्य अलङ्कारत्वं नास्ति॥

[सम्भवः][115] सम्भवः प्रकृतार्थनिर्णायकश्चेत् सम्भवः। अस्य अलङ्कारत्वं नास्ति, सर्वत्र अलङ्कारत्वाभावे चमत्काराभाव एव हेतुः ॥

केषाञ्चिन्मते—

[रसवदलङ्कारः][116] रसः यत्र अपरस्याङ्गं भवति तत्रायम् ॥

[प्रेयोऽलङ्कारः][117] विभावाद्यभिव्यञ्जितनिर्वेदादिः, देवतादिष्वभिव्यज्यमाना रतिश्च भावः यत्रापरस्याङ्गं भवति तत्र ॥

[ऊर्जस्व्यलङ्कारः][118] अनौचित्येन प्रवृत्तो रसो भावश्च यत्रापरस्याङ्गं तत्रायम् ॥

[समाहितालङ्कारः][119] भावस्य प्रशाम्यदवस्था भावशान्तिः, तस्या अपराङ्गत्वे समाहितम् ॥

[भावोदयालङ्कारः][120] भावोद्गमावस्थायाः इतराङ्गत्वेऽयम् ॥

[भावसन्धिरलङ्कारः][121] द्वयोर्विरुद्धभावयोः परस्परस्पर्धाभावस्य इतराङ्गत्वेऽयम् ॥

[भावशबलतालङ्कारः][122] बहूनां भावानां पूर्वपूर्वोपमर्देन उत्पत्तेः इतराङ्गत्वेऽयम् ॥

[गूढोक्तिः][123] गूढोक्तिरन्योद्देश्यं चेत् यदन्यं प्रतिकथ्यते। वृषापेहि परक्षेत्रादायाति क्षेत्रपालकः ॥ इयं ध्वनिरेव, नालङ्कारः ॥

[विवृतोक्तिः][124] विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि। वृषापेहि परक्षेत्रात् इति वक्ति ससूचनम् ॥ इयं गुणीभूतव्यङ्ग्यमात्रम्, नालङ्कारः ॥

[लोकोक्तिः][125] लोकप्रवादानुकृतिः लोकोक्तिरिति भण्यते। सहस्व कतिचिन्मासान् मीलयित्वा विलोचने ॥ अस्य अलङ्कारत्वमेव नास्ति ॥

[छेकोक्तिः][126] छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भिता । भुजङ्ग एव जानीते भुजङ्गचरणं सखे ॥ अस्य च अलङ्कारत्वमेव नास्ति ॥

[मुद्रा][127] सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः । नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ अस्याः अलङ्कारत्वमेव न । प्रकृतोपस्कारकत्वाभावात् ॥

[रत्नावली][128] क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः । चतुरास्यः पतिः लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥ अस्याः अलङ्कारत्वमेव नास्ति । रूपकेणैवात्र वर्ण्यस्योपस्कारः, न तु क्रमकृतोऽपीति तस्या अलङ्कारत्वाभावात् ॥

[वाक्यार्थरूपकम्][129] अस्य रूपके अन्तर्भावः ॥

[विधिः][130] सिद्धस्यैव विधानं यत् तामाहुर्विध्यलङ्कृतिम् । पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभवत् ॥ अयं च ध्वनावन्तर्भूतः ॥

[प्रतिषेधः][131] प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् । न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः ॥ अलङ्कारत्वमेव न ॥

[आनुकूल्यम्][132] आनुकूल्यं प्रातिकूल्यं आनुकूल्यानुबन्धि चेत् ॥ (सा. द.) इदं च पर्यायोक्ते अन्तर्भूतम् ॥

[निमीलितम्][133] भेदाग्रहेण लिङ्गानां लिङ्गैः प्रत्यक्षवस्तुनः । अप्रकाशो ह्यनध्यक्षवस्तुनस्तन्निमीलितम् ॥ (र. गं.) अस्य अलङ्कारत्वमेव नास्ति । स्ववृत्तिधर्मप्रकारकत्वेन वस्तुनि उभयत्राप्यनवभासात् ॥

[निश्चयः][134] अन्यं निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ (सा. द.) अस्य अपह्नुतावन्तर्भावः ॥

एवं अलङ्काराः बुभुत्सूनां सौकर्यपरिक्लृप्तये प्रदीपोद्योताद्यनुसारेण सङ्गृहीताः इति शम् ॥

अलङ्कारदोषप्रकरणम्

**एषां दोषाः यथायोगं**
**सम्भवन्तोऽपि केचन ।**
**उक्तेष्वन्तर्भवन्तीति[1]**
**न पृथक् प्रतिपादिताः ॥१४२॥**

तथाहि—(१) अनुप्रासस्य प्रसिद्ध्यभावः, (२) वैफल्यम्, (३) वृत्तिविरोधः, इति ये त्रयो दोषाः[2] ते प्रसिद्धिविरुद्धतां अपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति[3] । तत्स्वभावत्वात् ॥ क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिः धूर्ध्वजाग्रान्
अक्षे नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।

---

संकेतः

एषां अलङ्काराणाम् । उक्तेषु दोषेषु । अनर्थाः दोषाः ॥

प्रसिद्धीति । कदाचित् चक्री चक्रारप्रियोऽपि[4] स्यात् । अन्यानि तु न घटन्त एव ॥

मधुमती

इदानीं अलङ्कारदोषान् अन्यैः पृथगुक्तान् उक्तदोषेष्वन्तर्भावयितुमाह— **एषामिति** ॥

---

1 'उक्तेष्वन्तः पतन्तीति'–क. 2 'त्रयोऽनर्थाः'–ख. 3 'नातिक्रामन्ति'–क. 4 'हरिप्रियोऽपि'–ग.

रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः[1] सोऽव्यतात् स्यन्दनो वः ॥
॥ ५८६ ॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता,[2] न पुराणेतिहासादिषु तथा प्रतीता, इति प्रसिद्धिविरोधः ॥

भण तरुणि ! रमणमन्दिरं
आनन्दस्यन्दि सुन्दरेन्दुमुखि ! ।
यदि सल्लीलोल्लासिनि[3]
गच्छसि तत् किं त्वदीयं मे ॥ ५८७ ॥

अनुरणन्मणिमेखलं[4]
अविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणं अरुणचरणे
रणरणकं अकारणं कुरुते ॥ ५८८ ॥

अत्र वाच्यस्य विचिन्त्यमानं[5] न किञ्चिदपि चारुत्वं प्रतीयते इति अपुष्टार्थतैव अनुप्रासस्य वैफल्यम् ॥

---

सङ्केतः

रमणेति । रमणं-क्रीडा, न प्रियः । अन्यथा 'अकारण'मिति असङ्गतं स्यात्[6] ॥

---

1 'रुचः'–क. 2 'धेनैव प्रतिपादिता'–क. 3 'सल्लीलोल्लापिनि'–ख. 4 'चरणरणन्मणिमेखलं'–क. 'अनणुरणन्मणिमेखलं'–ख. 5 'विवेच्यमानं'–क. 6 'मिति अस्या अघटनात्'–घ.

अकुण्ठोत्कण्ठया पूर्णं आकण्ठं कलकण्ठि! माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ५८८ ॥

अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासः अत्र प्रतिकूलवर्णतैव[1] वृत्तिविरोधः ॥

यमकस्य पादत्रयगतत्वेन यमनं अप्रयुक्तत्वं दोषः । यथा—

भुजङ्गमस्येव मणिः सदम्भाः
ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः
कर्षन्ति चेतः प्रसभं[2] सदम्भाः ॥ ५८९ ॥

---

## सङ्केतः

अकुण्ठेति । अत्र शृङ्गारप्रतिकूलाः वर्णाः । शृङ्गारे हि उपनागरिका[3] वृत्तिर्योग्या ॥

भुजङ्गमस्येति । 'सदं' शब्दो निपातः छान्दसः, सदाऽर्थः । सदं भासते सदम्भाः । सदम्भाः=सज्जलाः, सदम्भाः—खलाः ॥

## मधुमती

वृत्तीति । उपनागरिकावृत्तिविरोध इत्यर्थः । माधुर्यव्यञ्जकवृत्तौ टवर्गपर्युदासादिति भावः ॥

भुजङ्गमस्येवेति । अम्भः तेजः, मणिपक्षे[4] । यथा—'धाराजलैः' इत्यादौ ॥

---

1 'वर्णता'–क.   2 'प्रमुखे'–ख.   3 'नागरिकी'–ग.   4 'अस्तं भेजे मणिपक्षे ज्वलनपक्षे'–च.

उपमायां उपमानस्य जातिप्रमाणगतन्यूनत्वम्, अधिकता वा तादृश्यनुचितार्थत्वं दोषः। धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वं च न व्यभिचरतः। क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥५९०॥

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥५९१॥

अयं पद्मासनासीनः चक्रवाको विराजते।
युगादौ भगवान् वेधाः[1] विनिर्मित्सुरिव प्रजाः ॥५९२॥

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥५९३॥

---

## सङ्केतः

तादृशी जातिप्रमाणगता।

चण्डालैरिति। अत्र जातिः न्यूना[2]।

पातालमिति। पातः प्रवाहः। अत्र प्रमाणस्य आधिक्यम्। अयं पद्मेत्यत्र तु जातेः॥

## मधुमती

पातालमिवेति। अत्र यथाक्रमं निम्नत्व-काठिन्य-श्यामत्वमात्रेण साम्यविवक्षायां नायं दोषः। किन्तु आद्यन्तयोः अप्रयुक्तत्वम्। मध्यस्यतु तु[3] निर्दोषत्वमेव। प्रसङ्गस्तु[4] परिणामनिबन्धनसाम्यविवक्षया द्रष्टव्यः॥

---

1 'भगवान् स्रष्टा'–क. 2 'न्यूना। वह्नीत्यत्र प्रमाणम्'–ग. 3 'मध्यस्थतो'–च. 4 'ग्रन्थस्तु'–च.

अत्र चण्डालादिभिः उपमानैः प्रस्तुतोऽर्थः अत्यर्थमेव कदर्थितः इति अनुचितार्थता ॥

स मुनिः लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५९४ ॥

अत्र उपमानस्य मौञ्जीस्थानीयः तटिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादितः इति हीनपदत्वम् ॥

स पीतवासाः प्रगृहीतशार्ङ्गः
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः ॥ ५९५ ॥

अत्र उपमेयस्य शङ्खादेः अनिर्देशे शशिनः ग्रहणं अतिरिच्यते इति अधिकपदत्वम् ॥

लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् धर्मं अन्यरूपं[1] कुर्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्य उपमानत्वं उप-

---

सङ्केतः

अन्यरूपमिति । उपमेयरूपं उपमानरूपं वा इत्यर्थः । तस्य

मधुमती

साधारणं रूपमिति । साधारणधर्मतया विवक्षितं इत्यर्थः । अन्यरूपं अन्यसाधारणम्[2] । तदा एकतरस्यैवेति । असाधारणत्वादेव नोभयत्रान्वयोऽस्येति भावः[3] । सविशेषणस्येति । तदसाधारणं रूपं

---

1 'धर्मसजन्यरूपं'–ख. 2 अन्यरूपमित्यादि नास्ति–ज. 3 'न भयोत्रार्थितमित्यर्थः'–च.

मेयत्वं वा प्रतीयमानेन[1] धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहात् अस्य भग्नप्रक्रमरूपत्वम् ॥

यथा—

चिन्तारत्नमिव च्युतोऽसि करतो
धिङ्मन्दभाग्यस्य मे ॥ ५९६ ॥

सक्तवो भक्षिता देव!
शुद्धाः कुलवधूरिव ॥ ५९७ ॥

---

## सङ्केतः

धर्मिणः ॥ **प्रतीयमानेन** । शब्दानुक्तेन उभयानुगमक्षमेण । शब्दोक्तसमानधर्मव्यतिरिक्तेन[2] केनापीत्यर्थः ॥ **भग्नेति** । उपमेयस्य विशेषणादिकं उपमाने चेत् न निर्व्यूढं, तदा प्रक्रमभङ्गः[3] इति भावः ।

**चिन्तेति** । अत्र च्युतत्वादिको धर्मः उपमानोपमेययोः प्रत्येकं अन्यलिङ्गवचनः इति प्रक्रमभङ्गः ॥ लिङ्गवचनविपरिणामेन यदि अपरस्यापि

## मधुमती

यद्युपमान्वितं तदा विशिष्टस्यो[4]पमानता, यद्युपमेयान्वितं[5] तदा तादृशस्यैवोपमेयता इत्यर्थः । **प्रतीयमानेनापीति** । अपिशब्दात् शब्दोपस्थितेनेति समुच्चीयते । **प्रक्रान्तार्थस्येति** । विशिष्टस्य अविशिष्टस्य वा इत्यर्थः ॥

**चिन्तारत्नमिवेति** । अत्र **च्युतोऽसि** इति पुल्लिङ्गरूपासाधारंणधर्मविशिष्टं उपमेयं प्रतीयते, न च तथाविधं उपमानं इति भग्नप्रक्रमत्वम् । **सक्तवः इति** । अत्र **भक्षिताः** इति बहुवचनरूपासाधारणधर्मवतः सक्तोः

---

1 'प्रतीयमानेनापि'–क. 2 'समानव्यतिरिक्तेन'–घ. 3 'तदाक्रमभङ्गः'–घ. 4 'यद्युपमानाविशिष्टस्यो'–च. 5 'यार्थितं'–ज.

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभि-धायि पदं स्वरूपभेदं नापद्यते न तत्र तद्दूषणावतारः। उभयथाऽप्यस्य[1] अनुगमक्षमस्वभावत्वात्। यथा—

गुणैरनर्घैः[2] प्रथितः रत्नैरिव महार्णवः ॥ ५९८ ॥

---

### सङ्केतः

सम्बन्धः तदा, अभ्यास[3]रूपवाक्यभेदे वाक्यद्वयी। तथा सति हि प्रकृतार्थ-प्रतीतिः[4] व्यवधीयते। विपरिणामश्च साहित्ये न स्यात्॥

**अनर्घैरिति**[5]। **गुण-रत्नानां** पुंक्लीबानां विशेषणत्वेऽपि न स्वरूप-

### मधुमती

उपमानत्वं प्रतीयते एतच्च उपमेये वधूलक्षणे एकवचनावरुद्धे अनन्वितमिति भग्नप्रक्रमत्वम्॥

**यत्र त्विति**। **गुणैरिति**। अत्र उपमेयोपमानवाचकयोः गुण-रत्नयोः[6] शब्दयोः लिङ्गभेदेऽपि **अनर्घैः**[7] इत्यत्र[8] तृतीयादौ द्वयोः तुल्यरूप-त्वात् न दोषः॥

---

1 'उभयथाऽर्थस्य'–क. 2 'रनर्घ्यैः'–ख. 3 'तदा व्यास'–घ. 4 'हि प्रतीतिः'–ग. 5 'अनर्घ्यैरिति'–ग. 6 'गुणगुणिनोः'–च. 7 'अनर्घ्यैः'–च. 8 'इत्यस्य'–च.

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिः मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥५९९॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिः अस्खलितरूपतया विश्रान्तिमासादयतीति असावपि भग्नप्रक्रमतयैव व्याप्तः । यथा—

---

## सङ्केतः

भेदः । असदृश इति । टक् क्विबन्तत्वे स्यन्तं जसन्तं च[1] । मधुरतया भृतः मधुरतां वा बिभ्रतीति मधुरताभृतः ॥

न तथेति । कोविदप्रसिद्धप्रकारेण ।

## मधुमती

तद्वेष[2] इति । वेषः इत्युपमेयम्[3] । विभ्रमाः इत्युपमानम् । असदृशः इति कञन्तत्वात् एकवचनान्तम् , दधते इति दधातेः क्विबन्तत्वात् । तेन उभयोः तुल्यरूपत्वात् वचनभेदेऽपि न दोषः । एवं मधुराभृतः इति तु उभयत्र समानाकारावधारणमिति[4] । यद्यप्येवमपि लिङ्गवचनभेदः तदवस्थ एव । तथापि न द्राक् प्रतीयते । किन्तु उपपत्तिपर्यालोचनया इति श्लेष-मर्यादया न दोषः । अत एव—'येन ध्वस्तमनोभवेन' इत्यत्र अप्रयुक्त-निहतार्थयोः न दोषत्वम्[5] ॥

कालेति । कालः वर्तमानादिः, पुरुषः प्रथममध्यमोत्तमरूपः, विधिः अप्रवृत्तप्रवर्तनम् ।

---

1 'इयं च प्रक्रिया हेमचन्द्रव्याकरणानुसारेणोक्ता. 2 'प्रद्वेष'–च. 3 'इत्युपलक्षणम्'–ज. 4 'दधातेश्चात्मनेपदे बहुवचनान्तमित्यत्रापि वचन-भेदोऽकिञ्चित्करः'–ज. 5 'अप्रयुक्तमिह भार्ययोर्निर्दोषत्वम्'–च.

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥ ६०० ॥

अत्र चेतना प्रसादमाप्नोति, न पुनः आप इति कालभेदः ॥

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः[1]
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ६०१ ॥

---

## सङ्केतः

प्रत्यग्रेति । मज्जने स्नानब्रुडने, ताभ्यां विशेषेण विविक्ता शुद्धा मूर्तिः यस्याः सा तथा । अन्तशब्दः स्वरूपे सम्बन्धे वा । लता तु अंशुभिः कान्ता । अर्चयन्ती शोभयन्ती पूजयन्ती च[2] । अत्र राज्ञी

## मधुमती

अतिथिमिति । अत्र कालभेदं दर्शयति—अत्रेति । यद्यपि—'अतीतपश्चिमयामात् अतीतचेतनाप्रसादमिव' इति विवक्षिते क्व कालभेदः? तथापि—'पश्चिमयामरात्रिजातीयात् अद्यापि चेतनाजातीयं प्रसादमाप्नोति[3] इति उपमेये विवक्षिते तु न तथेति कालभेदः ॥

---

1 'विविक्तकान्तिः'–ख. 2 'पूजयन्ती चेति नास्ति–घ. 3 'मापेति'–ज.

अत्र—लता विभ्राजते, न तु विभ्राजसे, इति सम्बोध्यमाननिष्ठस्य परभागस्य[1] असम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ॥

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ ६०२ ॥

इत्यादौ च 'गङ्गा प्रवहति, न तु प्रवहतु' इति अप्रवृत्तप्रवर्तनात्मनः विधेः (भेदः) ॥ एवंजातीयकस्य च अन्यस्यार्थस्य उपमानगतस्य असम्भवात् विध्यादिभेदः ॥

---

## सङ्केतः

सम्बोध्या, न लता । परभागः युष्मदर्थः ॥

**विधेरिति** । अप्रवृत्तप्रवृत्तिरूपस्य गङ्गायां असम्भवात् इति योगः । **एवंजातीयकस्येति** । निमन्त्रणादेः—

'गमिष्याम्यपहास्यतां वामन इव ।'

इत्यादाविव क्वचित् कालपुरुषविध्यादियोगेनापि दोषः स्यात् ॥

## मधुमती

**अत्रेति** । तथाच—देवीं सम्बोध्य अभिधानात् युष्मदर्थप्रतीतौ मध्यमपुरुषावश्यम्भावात् पुरुषभेदः इत्यर्थः ॥

विधिभेदं[2] दर्शयति—**इत्यादाविति** । 'प्रवहतु' इत्यत्र आशिषि लोट्प्रत्ययः । अविद्यमानस्यार्थस्य आशंसनं आशीः । न च कीर्तेरिव[3] गङ्गायाः प्रवहनं अविद्यमानम् । तथाच 'गङ्गा प्रवहति, कीर्तिः प्रवहतु' इति विधिभेदः इति ॥

---

1 'निष्ठस्य पुरुषभागस्य'–क. 2 'विषयभेदं'–च. 3 'कीर्तेरेव'–ज.

ननु—समानं उच्चारितं प्रतीयमानं वा धर्मान्तर[1]-मुपादाय पर्यवसितायां उपमायां उपमेयस्य प्रकृत-धर्माभिसम्बन्धात् न कश्चित्[2] कालादिभेदोऽस्ति[3] ॥ यत्रापि उपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा—

## सङ्केतः

उच्चारितम् शब्दोक्तम् । प्रतीयमानम् अनुक्तमपि गम्यम् । यथा 'पद्ममिव मुखम्' इत्यादौ 'भाती'त्यादिगम्यधर्मान्तरेणोपमा । कालादिभेद-वाचकात्तु[4] काव्ये साक्षादुक्तात् धर्मात् अन्यो धर्मः धर्मान्तरम् । प्रकृतेति । कालादिभेदवाची प्रकृतो धर्मः आपेत्यादिः । सामान्यधर्मेणेति । कालादि-भेदवाचिनेत्यर्थः । 'युधिष्ठिरो ह्यवदत्, अयं तु वदति' इति कालभेदः

## मधुमती

अत्र शङ्कते—नन्विति । समानमिति धर्मान्तरमित्यग्रिमेण सम्बध्यते । उच्चारितं साक्षाच्छब्दतः । प्रतीतं प्रतीयमानं अनुमानसामर्थ्य-लभ्यं[5] धर्मान्तरं कालादिभेदभिन्नम्[6] । न कश्चन कालादिभेदोऽस्ति । रूपकताप्रयोजक इति शेषः । तथा च तादृशधर्ममादाय औपम्ये प्रतीते,[7] पश्चात् प्रतीतोऽपि कालादिभेदः न दूषकः । 'काम इव सुन्दरोऽयं राजा भाति' इत्यादौ, 'काम इवायं राजा भाति' इत्यादौ च यथाक्रमं उच्चारितं प्रतीयमानं च सौन्दर्यरूपं धर्मान्तरमवलम्ब्य उपमा प्रतीयते, भति इति क्रिया च उपमेये राज्येवान्वेति, न तु उपमानभूते कामेऽपि इति कथं कालादिभेदः

1 'वा साधर्म्यान्तर'–क. 2 'कश्चन'–ख. 3 'स्तीति'–ख. 4 'वाच-कात्'–ग. 5 'प्रतीयमानमर्थलभ्यं'–च. 6 'हेतुभिन्नं'–ज. 7 'औपम्य-प्रतीतेः'–ज.

'युधिष्ठिर इवायं सत्यं वदति।'

इति, तत्र 'युधिष्ठिर इव सत्यवादी अयं सत्यं वदति' इति प्रतिपत्स्यामहे। 'सत्यवादी सत्यं वदति' इति च न पौनरुक्त्यं आशङ्कनीयम्। 'रैपोषं[1] पुष्णाति' इतिवत्, 'युधिष्ठिर इव सत्यवदनेन[2] सत्यवादी अयम्' इत्यर्थावगमात्।

---

## सङ्केतः

व्यक्तः। सत्यवाद्ययमिति। 'युधिष्ठिर इव सत्यवादी सन् असौ सत्यं

## मधुमती

दोषः?[3]। अभिहितान्वयस्य पञ्चमोल्लासे व्यवस्थापितत्वात्, प्रथमं विशेषणेनैव कारकान्वयः,[4] पश्चात् क्रियान्वयः इति प्रघट्टकार्थः॥

ननु यत्र कालादिविशिष्टेनोपात्तेनैव धर्मेण उपमापर्यवसानं, तत्र नेदमपि साधनमित्यत्राह—यत्रेति। युधिष्ठिर इवेति। अत्र हि सत्यवादित्वं उपात्तमेव साधर्म्यं उपमाप्रयोजकम्। अत्र च अतीतवर्तमानलक्षणकालभेदेऽपि अस्त्येव उपमाप्रतीतिसमयः इत्यर्थः॥ दूषयति—तत्रेति। सत्यवादित्वं अतीतादिसाधारणमिति न वर्तमानमात्रकालप्रतीत्या कालभेदः इत्यर्थः॥ पौनरुक्त्यमाशङ्कते—सत्यवादीति। स्वपोषं पुष्णाति इत्यत्र यथा स्वपोषेण पुष्यतीत्यर्थः[5] प्रतीयते इत्यर्थः। युधिष्ठिरेति। युधिष्ठिर-

---

1 'स्वपोषं'–क. 2 'युधिष्ठिरवत्सत्यवचने'–क. 3 काम इव सुन्दरः इत्याद्येतत्पर्यन्तग्रन्थस्थाने –'अर्थाद्वेति। राम इवायं राजा भातीत्यत्र साधारणधर्मप्रतीतिः शब्दादर्थाद्वेति प्रघट्टकार्थः। राम इवायं राजा भातीत्यर्थात् साधारणधर्मस्य शौर्यादेवार्थपरत्वेऽप्यर्थसामर्थ्येन प्रतीयमानत्वात् रामसादृश्यप्रतीतौ पश्चात् क्रियान्वये वर्तमानकालभानात् कालभेदेऽपि न दोषः' इति ग्रन्थः दृश्यते–ज. 4 'प्रथमविशेषणेनैवकारान्वयः'–च. 5 'स्वपोषः पुष्णाती'–ज.

सत्यमेतत् । किन्तु—स्थितेषु प्रयोगेषु समर्थनमिदम् । न तु सर्वथा निरवद्यम्, प्रस्तुतवस्तुव्याघातात्,[1] इति सचेतस एव अत्र प्रमाणम् ॥

असादृश्यासम्भवौ अपि उपमायां अनुचितार्थतायामेव पर्यवस्यतः । यथा—

'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' ॥ ६०३ ॥

इति । अत्र काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतं इति, अनुचितार्थत्वम् ॥

निपेतुरास्यादिव तस्य दीप्ताः
शराः धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधाराः
दिनार्धभाजः परिवेषिणोऽर्कात् ॥ ६०४ ॥

---

### सङ्केतः

वदति' इति च णिनौ कालनिर्देशात्[2] न कालभेदः इत्यर्थः ॥

### मधुमती

सत्यवचनेन सत्यवाङ्मयमित्यर्थः । युधिष्ठिरसम्बन्धित्वज्ञापनं तु साधारणधर्मतास्फोरणार्थम् ॥ वस्तुतस्तु—'स्वपोषं पुष्णाति' इत्यत्र उपपदस्य पुषेः साधुत्वार्थकतया न[3] पौनरुक्त्यशङ्का । प्रकृते च तदभावात् यद्यपि पौनरुक्त्यमेव प्रतिभाति । तथापि 'घटेन घटवद्भूतलम्' इतिवत् 'सत्यवचनेन सत्यवाग्ययम्' इत्यर्थावगमात् न पौनरुक्त्यम् ॥ प्रस्तुतेति । औपम्य-

---

1 'वस्तु प्रतीति विघातात्'—क. 2 'वदतीति'—घ. 3 न इति नास्ति—च.

अत्रापि—'ज्वलन्त्यः अम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यः न सम्भवन्ति' इत्युपनिबध्यमानः अर्थः अनौचित्यमेव पुष्णाति ॥

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादयः[1] एव शब्दाः वक्तुं सहन्ते,[2] न यथाशब्दोऽपि; केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात्; तस्य च अस्यां अविवक्षितत्वात् इति तत्र अशक्तिः अस्य अवाचकत्वं दोषः ॥ यथा—

---

## सङ्केतः

**न सम्भवन्तीति** । कथं तदुपमानीभविष्यन्तीत्यर्थः ।

**केवलस्य** । असमासस्थस्य । समासस्थस्तु योग्यताद्यर्थवादी स्यात् । **तस्य च** साधर्म्यस्य च । **अस्यां** उत्प्रेक्षायाम् । **तत्र** सम्भावनाभिधाने ॥

## मधुमती

प्रतीतावपि प्रस्तुतस्य कालादेर्भङ्गेन भग्नप्रक्रमत्वानपायादित्यर्थः[3] ।

**साधर्म्यमेवेति** । अत्रावधारणं सम्भावनापेक्षया अर्थान्तरस्यापि यथाशब्दवाच्यत्वात् ॥

---

1 'ध्रुवेववादयः'–ख. 2 'वक्तुमुत्सहन्ते'–क. 3 'प्रक्रमत्वात् न स्यादित्यर्थः'–ज.

उदयौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥ ६०५ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यम् । तत्समर्थनाय यत् अर्थान्तरन्यासोपादानं, तत् आलेख्यमिव गगनतले अत्यन्तमसमीचीनमिति निर्विषयत्वं एतस्य[1] अनुचितार्थतैव दोषः ॥

यथा—

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव[2] ॥ ६०६ ॥

अत्र अचेतनस्य तमसः दिवाकरात् त्रास एव न संभवतीति, कुत एव तत्प्रयोजितं अद्रिणा परित्राणम् ? सम्भावितेन[3] तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिः अवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः[4] ॥

---

सुङ्केतः

मेचकोत्पलं नीलोत्पलम् । प्रख्यं निर्गताभिधानप्रत्ययम् ॥
प्रतिभासमानस्य उत्प्रेक्षणरूपस्य । व्यर्थ एवेति । उत्प्रेक्षामात्र-

मधुमती

दिवाकरादिति । इदं च अर्थस्य स्वतस्सम्भवित्वपक्षे । कविप्रौढोक्तिसिद्धे तु न दोषः ।

---

1 'निर्विषयत्वमेव तस्य'–क. 2 'शिरसां सतीव'–ख. 3 'सम्भावितक्रमेण'–क. 4 'नार्थं प्रयत्नः'–क. 'नायां प्रयत्नः'–ख.

साधारणविशेषणवशादेव समासोक्तिः अनुक्तमपि उपमानविशेषं प्रकाशयतीति, तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत् तत् अपुष्टार्थत्वं पुनरुक्तत्वं वा दोषः। यथा—

स्पृशति तिग्मरुचौ ककुभः करैः
दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं
रुचिरया चिरयायिदिनश्रिया[1] ॥ ६०७॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन

---

## सङ्केतः

मेवात्र युक्तम्, न तत्समर्थकः अर्थान्तरन्यासः। 'दिवाभीत'[2]शब्दस्य उलूकार्थत्वेन समुचितोपमाख्यायां नैतद्दोषावतारः॥

**तस्य** उपमानविशेषस्य।

**स्पृशतीति**। **तापः** स्वेदोऽपि। **मानशब्दः** परिमाणाभिमानयोः। **चिरयायिदिनः** दीर्घाहोनिदाघः[3]। **सदृशेति**। 'रवेः करैः' इति सदृशं अनुकूलं विशेषणम्। **दिनश्रियास्तु** 'तापये'ति विशेषणम्।

## मधुमती

'गाढालिङ्गनरभसोद्यते
दयिते लघु समपसरति।

---

1 'चिरयादिवसश्रिया'–ख. 'चिरयाऽपि दिनश्रिया'–क. 2 'दिवाभीरु'–ग. 3 'दीर्घाहानिदाघः'–घ.

व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं 'दयितया' इति स्वशब्दोपादानेन ॥

श्लेषोपमायास्तु स विषयः, यत्र उपमानस्य उपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः[1] । यथा—

---

## सङ्केतः

**नायकतयेति** । नायकश्च नायिका चेत्येकशेषः ॥ **व्यक्तिः** लिङ्गम् । तद्विशेषः पुंस्त्वं स्त्रीत्वं च ॥

ननु यथा—प्रियां स्पृशन्तं दृष्ट्वा अन्यस्याः तापः[2] स्यात्, तथा अर्के दिशः स्पृशति सति ग्रीष्मश्रियोऽपि तापः स्यात् इति श्लेषोपमेयं इति युक्तमेव 'दयितया' इति पदम् इत्याह—**श्लेषेति** । **न तथा** समासोक्तिप्रतीतिः ॥

## मधुमती

मनस्विन्या मानः

पीडनभीत इव हृदयात् ॥'

इत्यादौ[3] उत्प्रेक्षायाः व्यञ्जकस्य स्वयमेवोदाहृतत्वात् इति ध्येयम् ॥

नन्वेवं श्लिष्टोपमा निर्विषया स्यात्—अत आह—**श्लेषेति । न तथा प्रतीतिरिति** । इदमत्र तत्त्वम्—यत्र उपमानस्य स्वपदोपादानेऽपि न समासोक्तिभङ्गः, तत्र अवश्यकसमासोक्त्यैव चमत्कारात् उपमानस्य

---

1 'प्रतिपत्तिः'–क. 2 'अन्यस्य ताप'–ग. 3 'न दोषः । ताडनभीरुवेत्यादौ–च. 'न दोषः पीडनभीतत्वेत्यादौ'–ज.

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥ ६०८ ॥

अप्रस्तुतप्रशंसायामपि उपमेयं अनयैव रीत्या[1] प्रतीतम्, न पुनः प्रयोगेण कदर्थतां नेयम् । यथा—

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि[2] वा वसंस्तृणमणिः धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्! सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥६०९॥

अत्र अचेतनस्य प्रभोः अप्रस्तुतविशिष्टसामान्यद्वारेण अभिव्यक्तौ न युक्तमेव पुनः कथनम् ॥

---

## सङ्केतः

स्वयं चेति । न सुखेनाप्यते इति अस्वापं दुर्लभं यत् फलं तल्लुब्धानां ईहितप्रदा । स्वापस्य शयनस्य फले विश्रान्तौ यो न लुब्धः तत्र हितप्रदा च । अत्र श्लेषोपमैव । सन्ध्योपमानोपादानं विना समासोक्तिप्रतीतेः अभावात् । रीत्या[3] साधारणविशेषणरूपया ॥

मध्ये वारिधीति[4] । तृणप्रायो मणिः अप्रधानः, काचादिः तृणमणिः । न कम्पते न बिभेति ॥

अप्रस्तुतेति । अप्रस्तुतं अचेतनत्वेन विशेषितं च यत् सामान्यं मशकादि तद्द्वारेणेत्यर्थः । तथा प्रस्तुतस्य प्रभोः प्रतीतौ प्रभुमिव

## मधुमती

स्वशब्दोपादानं व्यर्थम् । यथा उदाहृते 'स्पृशती'त्यादौ । अत्र हि

---

1 'नीत्या'–क. 2 'मध्ये वा धुरि'–ख. 3 'नीत्या'–घ. 4 'मध्ये वा इति'–घ.

तदेते अलङ्कारदोषाः यथासम्भविनः अन्येऽप्येवं-

सङ्केतः

इत्यधिकम् ॥ यथा वा—

'द्रविणमापदि भूषणमुत्सवे
शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमः
भवति कोऽपि भवानिव सन्मणिः ॥'

अत्र भवानिवेति ॥

अन्येऽपीति[1] । उपमायां हीनपदत्वे यथा—

'क्वचित् काले प्रसरता[2] क्वचिदापत्य[3] निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥'

मधुमती

'दयितया' इत्यनुपादानेऽपि तिग्मरुचेः नायकत्वं, दिवसश्रियश्च प्रतिनायिकात्वं यथायोग्यविशेषणवशेनैव प्रतीयते इति, समासोक्तेः आवश्यकत्वात् । यत्र तु उपमानोपादाने समासोक्तिः निवर्तते, तत्र उपमाया एव चमत्कारनिर्वाहकत्वात् उपादेयमेवोपमानम्, यथा 'स्वयं चे'त्यादौ । अत्र उपमानोपादाने समासोक्त्यप्रतीतेः इति ॥

अन्येऽपीति । यथा—

'या घर्मभासः तनयाऽपि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णाऽपि शुद्धेरधिकं विधायिभिः
विहन्तुमंहांसि जलैः पटीयसी ॥'

---

1 'तद्द्वारेण । अन्येपीऽति'–ग. 2 'अग्रे प्रसरता'–ग. 'कालेऽपसरता'–घ. 3 'दाहत्य'–घ.

जातीयकाः पूर्वोक्तयैव दोषजात्या अन्तर्भाविताः न पृथक् प्रतिपादनं अर्हन्तीति ॥

सम्पूर्णमिदं काव्यलक्षणम् ॥

---

## सङ्केतः

अत्र शुनोपमानेन प्रकृतार्थकदर्थने[1] अनुचितार्थता । क्वचिदिति सामान्येन निष्पाद्य, पश्चात् कालेन विशेषेण योगः । अन्यथा तु निन्दानिषेधः चिन्त्यः ॥ प्रोत्साहननिन्दादौ तु अनुचितार्थताऽपि न दोषः । यथा—

'हनूमानिव प्रेषणे प्रेष्य एषः ।'

'कुशलसखीजनवचनैः
अतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं
मारयति वियोगिनीश्चन्द्रः ॥'

## मधुमती

इत्यत्र तात्पर्यविषयीभूतस्य विरोधालङ्कारस्य, विरुद्धयोः सामानाधिकरण्यप्रतिभानमूलत्वात्, अत्र उष्णत्वादीनां[2] वैयधिकरण्येन निर्देशात् अनभिहितवाच्यत्वं इति ॥

**सम्पूर्णम्** सम्यगेव पूर्णम्, लेशतोऽपि न्यूनताविरहादिति शम् ॥

अच्युतमन्त्रितनूभव-[3]
मन्त्रिमनोधरसुतस्य गुणसिन्धोः ।
गौरीतनयस्यैषा
श्रीरविपाणेः कृतिर्जयति ॥ १ ॥

---

1 'तार्थकथने'–ग. 2 'प्रतीतौ समूलत्वादीनाम्'–च. 3 'तनूद्भव'–ज.

## सङ्केतः

'वियोगे मारकः स्त्रीणां चण्डाल इव चन्द्रमाः ।'

'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ॥'

इत्यादौ ॥—

'यस्यार्कसुभगा मूर्तिः सच्चक्रानन्ददायिनी ।'

इत्यत्र अर्केण सह मूर्तेः साम्यं वाच्यम्, न सुभगत्वमात्रम्; सच्चक्रेति विशेषणवैयर्थ्यप्रसङ्गात् । न च तत्साम्यं तुल्यादिशब्दवत् 'सुभग'शब्दो वक्ति इति, उपमां प्रत्यवाचकत्वम् ॥

'भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिव जलधिः चचाल ।'

'राजा कुवलयोल्लासी पीयूषांशुरिवारुचत् ।'

इत्यादौ राजन्शब्दस्य उभयार्थत्वेन श्लेषनिष्पत्त्या स्वार्थसिद्धौ यत् औपम्यकल्पनम्, तदधिकम् ॥

औपम्यं हि आर्थमेव हृद्यम्, व्यङ्ग्यत्वात्, न तु शाब्दम् ॥

एवम्—

'दिलीप इव राजेन्दुः इन्दुः क्षीरनिधाविव ।'

इत्यत्रापि 'राजा' इति श्लेषं हित्वा 'इन्दुः क्षीरनिधाविव' इति उपमानुरागिणा कविना राजेन्दुरिति रूपकमुक्तम् । न चोपमा व्यङ्ग्यार्थाधिक्यवतोः श्लेषरूपकयोःसमा स्यात्, व्यङ्ग्यार्थस्पर्शाभावात् । तस्मात् अत्र उपमा अधिका । यदाहुः—

'वाच्यात् प्रतीयमानोऽर्थः तद्विदां स्वदतेऽधिकम् ।
रूपकादिरतः श्रेयान् अलङ्कारेषु नोपमा ॥'

इति ॥

सङ्केतः

तथा—

'निर्मोकमुक्तिमिव[1] गगनोरगस्य,
लीलाललाटिकामिव त्रिविष्टपस्य ।'

इत्यादौ रूपकेणैव साम्यस्य प्रतिपादितत्वात्, 'इवे'त्यधिकम् ॥

तथा—

'लक्ष्मीरप्यरविन्दसौधवलभीनिर्यूह[2]पर्यङ्किका ।'

इत्यत्र अरविन्दस्य केनापि साम्येन सौधत्वेन रूपण[3]मस्तु, वलभ्यादीनां तु न किञ्चिद्रूप्यमस्तीति अधिकपदत्वम् । साध्यवसानलक्षणया किमपि औन्नत्यादि-कल्प्यते चेत् तदपि न चमत्कारि इति ॥ तथा—

'या घर्मभासः[4] तनयाऽपि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णाऽपि शुद्धेरधिकं विधातृभिः
विहन्तुमंहांसि जलैः पटीयसी ॥'

इत्यत्र नद्याः पयोभिः परमार्थादैक्येऽपि शब्दार्पितनानात्वानुभवात् विरोधस्य भिन्नाधारत्वम्, तच्च असम्भवि । विरोधस्य एकाधारत्वेन उक्तत्वात् इति असम्भवो दोषः । तथा—

'तरङ्गसदृशोऽङ्गणे पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिकां
उदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥'

---

1 'मुक्तिरिव'–घ. 2 'निर्व्यूह'–घ. 3 'साम्ये सौधत्वेन रूपक'–घ.
4 'घर्मभानोः'–ग.

इत्येष मार्गो विदुषां विभिन्नोऽ-
प्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्-
विनिर्मिता सङ्घटनैव हेतुः[1] ॥ १४३ ॥

इति श्रीमम्मटविरचिते काव्यप्रकाशे
अर्थालङ्कारनिर्णयो नाम
दशमः उल्लासः

---

समाप्तश्चायं ग्रन्थः

---

---

## सङ्केतः

इत्यत्र उपमानभूतेन्दीवरादेः अपकर्षणद्वारेण नेत्रादीनां व्यतिरेकः वक्तुं प्रक्रान्तः । स च—'भवतु च द्विचन्द्रं नभः' इत्युक्त्या साम्यमात्रप्रतीतौ न निर्व्यूढः, इति व्यतिरेके भग्नप्रक्रमत्वम् । 'भवतु तद्द्विचन्द्रं नभः' इति तु युक्तम् ॥ एवमपि नभोमुखयोः नान्वयसङ्गतिः । 'अङ्गणे उदञ्चय मनाङ्मुखम्' इत्युक्त्या मुखाञ्चित[2]मङ्गणं चन्द्राञ्चितात् व्योम्नः अधिकम्, तद्द्वारेण च चन्द्रात् मुखं अधिकम् इति तु युक्तम् ।

**इत्येष इति** । एषः अद्भुतः अलङ्काराध्वा । **विभिन्नोऽपीति** । नानाग्रन्थगतत्वेन पार्थक्येन स्थितोऽपि **यत्** एकरूपो भवति, तत्र **सङ्घटना** विसंस्थुलस्य सुखबोधाय एकत्र संग्रहणमेव **हेतुः** । सर्वेऽपि ग्रन्थाः अत्र अन्तर्मग्नाः इत्यर्थः ॥

अथ चायं ग्रन्थः अन्येनारब्धः, अपरेण च समर्थितः इति द्विखण्डोऽपि, सङ्घटनावशात् अखण्डायते । सुघटं हि अलक्ष्यसन्धि स्यात् इत्यप्यर्थः ॥

---

1 अयं श्लोकः ख पुस्तके अन्येषु बहुषु पुस्तकेषु च न दृश्यते । 2 'मुखोचित–घ.

## सङ्केतः

श्रीभोजेन तु जैमिन्युक्तानि षट् प्रमाणानि सम्भवश्च अलङ्कारतया उक्तानि ॥

तत्र केषांचित् उक्तेष्वेव अन्तर्भावात्, केषांचित् अचमत्कारित्वात्,[1] केषांचित् काव्यशरीरत्वाच्च तानि नात्र काव्यालङ्कारतया प्रतिपादितानीति शम् ॥

[2]गुणानपेक्षिणी यस्मिन् अर्थालङ्कारतत्परा ।
प्रौढाऽपि जायते बुद्धिः सङ्केतः सोऽयमद्भुतः ॥ १ ॥

नानाग्रन्थसमुद्धृतैः असकलैरप्येष संसूचितः
सङ्केतोऽर्थलवैः लविष्यति[3] नृणां शङ्के[4] विशङ्कं तमः ।
निष्पन्ना ननु जीर्णशीर्णवसनैः नीरन्ध्रविच्छित्तिभिः
प्रालेय[5]प्रथितां न मन्थति कथं कन्थाव्यथां[6] सर्वथा ॥ २ ॥

श्रीशीलभद्रसूरीणां पट्टे माणिक्यसंनिभाः ।
परमज्योतिषो जाताः भरतेश्वरसूरयः ॥ ३ ॥

भरतेन[7] परित्यक्तोऽस्मीति कोपं वहन्निव ।
शान्तो रसः तदधिकं भेजे श्रीभरतेश्वरम् ॥ ४ ॥

पदं तदन्वलंचक्रे वेरस्वामि[8]मुनीश्वरः ।
अनुप्रद्योतनोद्योतं दिवं इन्दुमरीचिवत् ॥ ५ ॥

वाञ्छन् सिद्धिवधूं हसन् सितरुचिं कीर्त्या रतिं रोदयन्
पञ्चेषोर्मथनात् दहन् भववनं क्रामन् कषायद्विषः[9] ।

---

1 'अचमत्कारकारित्वात्'–ग. 2 एतदारभ्य 'सङ्केतोऽयं समर्थितः' इत्यन्तं ग पुस्तके नास्ति। 3 'छेत्स्यति इत्यर्थः। 4 नूनमित्यस्य पर्यायोऽयम्। 5 प्रालेयं हिमिका। 6 शीतबाधाम्। 7 भरताचार्येण। 8 वैरस्वामि–ङ. 9 पापरूपशत्रून्।

## सङ्केतः

त्रस्यन् रागमलात् घनाघनशकृद्भस्त्राः[1] त्यजन् योषितः
बिभ्राणः शममद्भुतं नवरसीं यस्तुल्यमस्फोरयत्[2] ॥ ६ ॥

पट्टतर्कीललनाविलासवसतिः स्फूर्जत्तपोऽहर्पतिः
तत्पट्टोदयचन्द्रमाः समजनि श्रीनेमिचन्द्रप्रभुः ।
निस्सामान्यगुणैः भुवि प्रसृमरैः प्रालेयशैलोज्ज्वलैः
यश्चक्रे कणभोजिनो मुनिपतेः[3] व्यर्थं मतं[4] सर्वतः ॥ ७ ॥

यत्र प्रातिभशालिनामपि नृणां सञ्चारमातन्वतां
सन्देहैः प्रतिभाकिरीटपटली सद्यः समुत्तार्यते ।
नीरन्ध्रं विषमप्रमेयविटपिव्राताविकीर्णे सदा
तस्मिंस्तर्कपथे यथेष्टगमना जज्ञे यदीया मतिः ॥ ८ ॥

यस्मात् प्राप्य पृथुप्रसादविशदां विद्योपदेशात्मिकां
पत्रीं मुक्तिकरीमतीव जडतावस्त्वन्विता मन्मतिः ।
विक्षिप्य श्रमशौल्किकात् कलयतो लब्धाश्रयं[5] मानसे
मध्ये वाङ्मयपत्तनं प्रविशति द्वारि स्थिता[6] तत्क्षणात् ॥ ९ ॥

मदमदनतुषारक्षेपपूषा विभूषा
जिनवदनसरोजावासिवागीश्वरीया[7] ।
द्युमुखमखिलतर्कग्रन्थपङ्केरुहाणां
तदनु समजनि श्रीसागरेन्दुः मुनीन्द्रः ॥ १० ॥

---

1 त्रस्यन् रागमलङ्घनात् घनशकृद्भस्त्राः—ग. त्रस्यन्नागमलङ्घनाद्घनशकृद्भस्त्राः—ङ. घनाघनशकृद्भस्त्राः=घातुकसत्त्वबीजरूपाः पुरीषभरितभस्त्रिकारूपाश्च स्त्रियः त्यजन्; रागजनितात् मलात् त्रास एव स्त्रीत्यागे कारणमित्यर्थः । 2 मास्फारयत्—ग. 3 मुनिपतिः—ङ. 4 न्यायमतमित्यर्थः । 5 ऽलं चाश्रयं—ग. 6 स्थितां—ग. 7 वागीश्वरायाः—ग.

## सङ्केतः

माणिक्यचन्द्राचार्येण तदङ्घ्रिकमलालिना ।
काव्यप्रकाशसङ्केतः[1] स्वान्योपकृतये कृतः ॥ ११ ॥
रसवक्त्रग्रहाधीशवत्सरे[2] मासि माधवे[3] ।
काव्ये[4] काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः ॥ १२ ॥

[5]अदृष्टदोषात् स्मृतिविभ्रमाच्च
यदर्थहीनं लिखितं मयाऽत्र ।
तत्सर्वमार्यैः परिशोधनीयं
प्रायेण मुह्यन्ति हि ये लिखन्ति ॥ १३ ॥

" शुभमस्तु सर्वजगतां
परहितनिरताः भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं
सर्वत्र सुखी भवतु लोकः ॥ १४ ॥ "

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते
काव्यप्रकाशसङ्केते दशमोल्लासः
समाप्तश्चायं ग्रन्थः

---

## मधुमती

पित्रा काव्यप्रकाशस्य
कृतो यः काव्यदर्पणः
युक्तिचूर्णेन तस्येदं
मार्जनं विहितं मया ॥ २ ॥

---

1 शे सङ्केतः–ग. 2 १२१६ तमे विक्रमशके इत्यर्थः। प्रायशो जैनाः विक्रमशकमेव निर्दिशन्ति । प्रबन्धचिन्तामणिधृतः माणिक्यचन्द्रस्तु ११५० विक्रम-संवत्सरीयः अन्य एव ॥ 3 चैत्रमासे। 4 शुक्रवासरे इत्यर्थः। 5 'अदृष्टे'त्यारभ्य 'भवतुलोकः' इत्यन्तं ग पुस्तके नास्ति ।

## मधुमती

मत्तोऽनतिचिरं जाता[1]
मृदुपदविन्यासजनितजनकुतुका ।
भुवि मधुमति[2]नाम्ना
टीका कन्या च गच्छतु[3] ख्यातिम् ॥ ३ ॥

समस्तेत्यादि[4]महासामन्ताधिपति–महामहोपाध्याय–मन्त्रि-
मनोधरात्मज–श्रीरविपाणिविरचितायां काव्यप्रकाश-
टीकायां मधुमत्यां दशमः उल्लासः
ग्रन्थश्चायं समाप्तः[5]

---

1 'मत्तोऽलभि चिरजाता'–च. 2 'मधुमती'–घ. 3 'कन्याऽव-गच्छतु'–च. 4 आदिपदग्राह्या अस्य विरुदावलिः कस्यामपि मातृकायां नोपलभ्यते। अतः यथामातृकं प्रकाशितम् । 5 मैसूरु प्राच्यविद्यासंशोधनालयस्य 'च' संज्ञक मातृकान्ते—"काञ्चीपुरसविधवर्ति-नावल्पाक्काग्रहारात् श्रीरामानुजताताचार्यैः प्रहितं १३३ पत्रमितं आन्ध्राक्षरमयं तालपत्रकोशमादर्शीकृत्य प्लववत्सर-अधिकाषाढ-शुक्ल-दशमी-बुधवासरे (26-6-1901) लिखितोऽयं कोशः।" इति वर्तते॥ 'ज' संज्ञकमद्रपुरीमातृकायां तु गौर्नमेण्ट् ओरियण्टल् म्यानुस्क्रिप्ट् लैब्ररीस्थां–R. 1676 अङ्केन अङ्कितां मातृकामाधारीकृत्य S. V. परमेश्वरन् इत्येतैः लिखितोऽयं कोशः इति दृश्यते। अधिकं तु भूमिकायां द्रष्टव्यमिति शम् ॥

एवं वेङ्कटनाथेन संदृब्धा भावुकप्रिया ।
टिप्पणी मूलटीकास्थपाठ-भावादिदर्शिनी ॥

प्रमादात् स्खलनं यत् स्यात्
शब्दतश्चार्थतोऽपि वा ।
क्षन्तव्यं तत् क्षमासारैः
कृपयैव समीक्षकैः ॥

इति न्यायव्याकरणसाहित्यालङ्कारविदुषा क्रतुनाथवंश्येन वेङ्कटनाथाचार्येण विरचितायां भावुकप्रियायां सव्याख्यकाव्यप्रकाशटिप्पण्यां अन्तिमोल्लास-चतुष्टयात्मकं उत्तरार्धं समाप्तम्

---

# अनुबन्धः—१

## काव्यप्रकाशोत्तरार्धगतविषयाणां

## अकारादिसूचनी

—o—

### अ



---

अलं० = अर्थालङ्कारः। श. अ = शब्दालङ्कारः। वा. अ. दो = वाक्यासाधारणदोषः। सङ्ख्ययोः प्रथमा पुटस्य, द्वितीया तु पंक्तेरिति ज्ञेयम्॥

## ए

## ओ



## औ



## क

### य

## र

41

## स

# अनुबन्धः—२

## प्रयुक्तानां न्यायानां नियमानां च

## अकाराद्यनुक्रमणिका

—o—

### अ

## आ



## इ



## उ



## ए



## क

ल



व

## श



## ष



## स

---

# अनुबन्धः—३

## लोकानुभवानुलापिनां वाक्यानां दृष्टान्तानां च

## अकाराद्यनुक्रमणी

—०—

### अ



### आ



### उ

## ए



## क



## ग



## छ



## त

## द



## ध



## न

## स



---

# अनुबन्धः—४

## काव्यप्रकाश-द्वितीयसम्पुटगत-मूलकारिकापादानां

## अकाराद्यनुक्रमणिका

—o—

———

# अनुबन्धः—५

## सव्याख्यकाव्यप्रकाशोत्तरार्धगतानां प्रमाणोदाहरणानां

## अकाराद्यनुक्रमणी

—o—



---

1. 'वेबर' सम्पादितगाथासप्तशतीपुस्तकानुसारेण निर्दिष्टम्।
2. '*' एवं चिह्नितं उदाहृतश्लोकानां उत्तरार्धमिति मन्तव्यम्॥

ख



ग

## द

## फ



## ब



## भ

## श

# अनुबन्धः—६

## विशिष्टानां पदानां अकाराद्यनुक्रमणी

—o—



* ग्रन्थे प्रधानतया निरूपणीयविषयनिर्देशस्वरूपाणां पदानां अकाराद्यनुक्रमणी प्रथमानुबन्धे एव निर्दिष्टा । अत्र तु तदतिरिक्तानां प्रसङ्गतोऽङ्गतया वा विवृतानां पदानां केवलं अनुक्रमणी निर्दिष्टेति ध्येयम् । प्रथमा संख्या पुटानाम्, द्वितीया तु पंक्तिसंख्येति ज्ञेयम् ॥

# अनुबन्धः—७

## एतत्सम्पुटगतानां

## ग्रन्थ-ग्रन्थकारनाम्नां मत-मतीयनिर्देशानां च

## अकाराद्यनुक्रमणिका

—o—

---

# अनुबन्धः—८

## एतत्सम्पुटप्रयुक्तसङ्केताक्षरविवरणम्

—०—

### अ

| | |
|---|---|
| अ. गु. | अभिनवगुप्तः (लोचनकारः) |
| अ. पु. | अग्निपुराणम् (व्यासः) |
| अ. भा. | अभिनवभारती (भरतनाट्यशास्त्रव्याख्या अभिनवगुप्तकृता) |
| अ. रा. | अनर्घराघवं (मुरारिः) |
| अ. श. | अमरुशतकम् (अमरुककविः) |
| अ. शा. | अभिज्ञानशाकुन्तलम् (कालिदासः) |
| अ. शे. | अमरशेषः (पुरुषोत्तमः) |
| अ. स. | अलङ्कारसर्वस्वम् (रुय्यकः) |

### आ

| | |
|---|---|
| आ. श्रौ. सू. | आपस्तम्बश्रौतसूत्रम् (आपस्तम्बः) |

### उ

| | |
|---|---|
| उ. च. | उत्तररामचरितम् (भवभूतिः) |
| उ. रा. | उत्पलराजीयम् |
| उ. श्लो. | काव्यप्रकाशोदाहरणश्लोकः |
| उ. वि. | उक्तिविवेकः |
| उ. ह. | उषाहरणम् (त्रिविक्रमपण्डितः) |

## ऋ

| | |
|---|---|
| ऋ. सं. | ऋक्संहिता |

## औ

| | |
|---|---|
| औ. वि. च. | औचित्यविचारचर्चा (भट्टेन्दुराजस्य) |

## क

| | |
|---|---|
| क. अ. | कप्फिनाभ्युदयः (शिवस्वामी) |
| क. मं. | कर्पूरमञ्जरी (राजशेखरः) |
| का. अ. सू. | काव्यालङ्कारसूत्रम् (वामनः) |
| का. अ. | भामहकाव्यालङ्कारः |
| का. आ. | काव्यादर्शः (दण्डी) |
| का. क. | काव्यकल्पलता (अमरचन्द्रः) |
| का. का. | काव्यप्रकाशमूलकारिकाः (मम्मटः) |
| का. कौ. | काव्यकौतुकम् (भट्टतौतः) |
| का. द. | काव्यादर्शः (दण्डी) |
| का. प्र. | काव्यप्रकाशः (मम्मटः) |
| का. मी. | काव्यमीमांसा (राजशेखरः) |
| का. शा. | कामशास्त्रम् (वात्स्यायनः) |
| का. सं. | काण्वसंहिता |
| का. अ. सा. सं. | काव्यालङ्कारसारसङ्ग्रहः (उद्भटः) |
| कि. अ. | किरातार्जुनीयम् (भारविः) |
| कु. आ. | कुवलयानन्दः (अप्पयदीक्षितः) |
| कु. म. | कुट्टनीमतं (दामोदरगुप्तः) |

| | |
|---|---|
| कु. सं. | कुमारसम्भवः (कालिदासः) |
| कू. पु. | कूर्मपुराणम् (व्यासः) |
| कृ. रा. | कृत्यारावणम् |

ख

| | |
|---|---|
| खं. प्र. | खण्डप्रशस्तिः (हनूमान्) |

ग

| | |
|---|---|
| गा. स. | गाथासप्तशती (सातवाहनः) |
| गीता. | भगवद्गीता (व्यासः) |
| गो. स्वा. | गोपालस्वामी (साहित्यचूडामणिः) |
| गौ. व. | गौडवहो (वाक्पतिः) |

च

| | |
|---|---|
| चं. | चन्द्रालोकः (जयदेवः) |
| चो. पं. | चोरपञ्चाशिका (बिल्हणः) |

छ

| | |
|---|---|
| छ. रा. | छलितरामम् |

ज

| | |
|---|---|
| ज्ञान. क्ष. | ज्ञानश्रीमित्रनिबन्धावली क्षणभङ्गाध्यायः |

त

| | |
|---|---|
| त. कौ. | तत्त्वकौमुदी (वाचस्पतिमिश्रः) |
| तं. वा. | तन्त्रवार्तिकम् (कुमारिलः) |

| | |
|---|---|
| तै. उ. | तैत्तिरीयोपनिषत् |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै. सं. | तैत्तिरीयसंहिता |
| ता. व. | तापसवत्सराजचरितम् |

## द

| | |
|---|---|
| द. रू. | दशरूपकम् (धनञ्जयः) |
| दे. श. | देवीशतकम् (आनन्दवर्धनः) |

## ध

| | |
|---|---|
| धा. पा. | धातुपाठः (पाणिनिः) |
| ध्व. आ. | ध्वन्यालोकः (आनन्दवर्धनः) |
| ध्व. लो. | ध्वन्यालोकलोचनम् (अभिनवगुप्तः) |

## न

| | |
|---|---|
| न. सा. च. | नवसाहसाङ्कचरितम् (पद्मगुप्तः) |
| ना. आ. | नागानन्दः (श्रीहर्षः) |
| ना. भ. ज. | नारायणभट्टकृतत्वेन जयन्तभट्टोलेखः |
| ना. लिं. | नामलिङ्गानुशासनम् (अमरसिंहः) |
| नी. श. | नीतिशतकम् (भर्तृहरिः) |
| न्या. कु. चं. | न्यायकुमुदचन्द्रः (प्रभाचन्द्राचार्यकृतः) |
| न्या. बिं. | न्यायबिन्दुः (धर्मकीर्तिः) |
| न्या. मं. | न्यायसिद्धान्तमञ्जरी (जानकीनाथः) |
| न्या. सू. | न्यायसूत्रम् (गौतमः) |

## प

| | |
|---|---|
| प. स्त. | पञ्चस्तवी (कालिदासः) |
| पा. शि. | पणिनीयशिक्षा (पाणिनिः) |
| पा. सू. | पाणिनीयाष्टाध्यायीसूत्रपाठः |
| पा. सू. वा. | पाणिनीयसूत्रवार्तिकम् (कात्यायनः) |
| पू. मी. | पूर्वमीमांसासूत्रम् (जैमिनिः) |
| पं. प्र. | पञ्चाक्षरीप्रशस्तिः |
| पं. ली. | पञ्चबाणलीला (आनन्दवर्धनः) |

## ब

| | |
|---|---|
| ब. ब्रा. | बह्वृचब्राह्मणम् |
| बा. भा. | बालभारतम् (राजशेखरः) |
| बा. रा. | बालरामायणनाटकम् (राजशेखरः) |
| बृ. दे. | बृहद्देशी |
| बि. च. | बिल्हणचरितम् |

## भ

| | |
|---|---|
| भ. इ. सू. | भट्टेन्दुराजस्य सूक्तिमुक्तावली |
| भ. का. | भट्टिकाव्यम् |
| भट्टना. | भट्टनायकः |
| भै. ना. | भरतनाट्यशास्त्रम् |
| भ. श. | भल्लटशतकम् |
| भ. शृं. श. | भर्तृहरिकृतं शृङ्गारशतकम् |
| भा. | भामती (ब्रह्मसूत्रशाङ्करभाष्यव्याख्या) |

| | |
|---|---|
| भा. अ. | भामहालङ्कारः (भामहः) |
| भा. वि. | भामहविवरणम् (भट्टोद्भटः) |
| भो. | भोजराजः (शृङ्गारप्रकाशः) |

## म

| | |
|---|---|
| म. च. | महावीरचरितम् (भवभूतिः) |
| म. भा. | महाभारतम् (व्यासः) |
| म. भा. शां. | महाभारते शान्तिपर्व |
| म. भा. स्त्री. | महाभारते स्त्रीपर्व |
| म. वी. च. | महावीरचरितम् (भवभूतिः) |
| मा. चं. | माणिक्यचन्द्रस्य |
| मा. मा. | मालतीमाधवम् (भवभूतिः) |
| मा. सं. | माणिक्यचन्द्रकृता सङ्केतटीका |
| मृ. श. | मृच्छकटिकम् (शूद्रकः) |
| मे. | मेदिनीकोशः |
| मे. दू. पू. | मेघदूते पूर्वभागः (कालिदासः) |
| मे. दू. उ. | मेघदूते उत्तरभागः ( ,, ) |
| मु. | मुकुलभट्टः (अभिधावृत्तिमातृका) |

## र

| | |
|---|---|
| रत्ना. | रत्नावली (श्रीहर्षः) |
| र. पा. | रविपाणेः |
| र. म. | रवि(कवि)(भट्टाचार्य)पाणिकृता मधुमती |
| र. वं. | रघुवंशः (कालिदासः) |

| | |
|---|---|
| र. सु. सं. | रविगुप्तकृतः सुभाषितसङ्ग्रहः |
| रा. आ. | राघवानन्दः |
| रा. अ. | रामाभ्युदयम् |
| रा. च. | रामचरितम् (अभिनन्दः) |
| रु. का. अ. | रुद्रटकाव्यालङ्कारः |

ल

| | |
|---|---|
| लौ. | लौकिकव्यवहारप्रचलितानि वाक्यानि |

व

| | |
|---|---|
| व. जी. | वक्रोक्तिजीवितम् (कुन्तकः) |
| व. का. अ. | वामनकृतं काव्यालङ्कारसूत्रम् |
| वा. प. | वाक्यपदीयम् (भर्तृहरिः) |
| वा. रा. | वाल्मीकिरामायणम् |
| वि. उ. | विक्रमोर्वशीयम् (कालिदासः) |
| वि. पु. | विष्णुपुराणम् (व्यासः) |
| वि. बा. | विषमबाणलीला (आनन्दवर्धनः) |
| वि. शा. भं. | विद्धशालभंजिका (राजशेखरः) |
| विश्व. | विश्वकोशः |
| वे. सं. | वेणीसंहारम् (भट्टनारायणः) |
| वै. को. | वैजयन्तीकोशः (यादवप्रकाशः) |
| वै. श. | वैराग्यशतकम् (भर्तृहरिः) |
| वै. सू. | वैशेषिकसूत्रम् (कणादः) |
| व्य. वि. | व्यक्तिविवेकः (महिमभट्टः) |
| व्या. म. भा. | व्याकरणमहाभाष्यम् (पतञ्जलिः) |

## श

| | |
|---|---|
| शा. प. | शार्ङ्गधरपद्धतिः (धनदेवः) |
| शा. भा. | शाबरभाष्यम् (शबरस्वामी) |
| शि. व. | शिशुपालवधम् (माघः) |
| शी. भ. | शीलाभट्टारिका (धनदेवः) |
| शृं. ति. | शृङ्गारतिलकम् (रुद्रभट्टः) |
| शृं. प्र. | शृङ्गारप्रकाशः (भोजराजः) |
| शृं. श. | शृङ्गारशतकं (भर्तृहरिः) |
| श्लो. वा. | श्लोकवार्तिकम् (कुमारिलभट्टः) |

## स

| | |
|---|---|
| स. क. | सदुक्तिकर्णामृतम् (श्रीधरदासः) |
| स. क. आ. | सरस्वतीकण्ठाभरणम् (भोजराजः) |
| सा. द. | साहित्यदर्पणम् (विश्वनाथः) |
| सा. मी. | साहित्यमीमांसा (रुय्यकः) |
| सु. र. का. | सुभाषितरत्नाकरः |
| सू. श. | सूर्यशतकम् (मयूरः) |
| सौ. नं. | सौन्दरनन्दम् (अश्वघोषः) |
| स्त. चिं. | स्तवचिन्तामणिः (नारायणः) |

## ह

| | |
|---|---|
| ह. च. | हर्षचरितम् (बाणभट्टः) |
| ह. ना. | हनुमन्नाटकम् (महानाटकम्) |
| ह. व. | हयग्रीववधः (मेण्ठकविः) |
| ह. वि. | हरविजयम् (रत्नाकरः) |
| हृ. द. | हृदयदर्पणम् (भट्टनायकः) |
| हे. श. | हेमचन्द्रकृतं शब्दानुशासनम् |

# अशुद्धसंशोधनी

—o—

| पठनीयः पाठः | पृ. | पं. |
|---|---|---|
| माधुर्ये वैरस्यमनुभूयते | 16 | 11 |
| जघनं जङ्घा | 20 | 7 |
| तत् दिनं | 24 | 6 |
| अस्त्येवैतत् | 67 | 3 |
| शासनिका | 77 | 13 |
| अनर्घराघवे | 85 | 20 |
| आवयोर्वल्लभा | 91 | 8 |
| अस्त्येवैतत् | 94 | 6 |
| सप्तमः | 102 | 1 |
| सौरभोल्लासस्य | 120 | 13 |
| द्विः शब्देना | 120 | 19 |
| व्याहतत्वम् | 122 | 1 |
| सम्प्रदायाविरुद्धं | 129 | 10 |
| वाग्रूपत्वात् | 147 | 9 |
| क्तिन्प्रत्यय | 151 | 9 |
| दीधीवेवीङिति | 151 | 18 |
| न च मे शक्ताः | 162 | 4 |
| ग्रहो दीप्तिः | 168 | 6 |
| देवीमाहात्म्ये | 180 | 4 |
| एवं च | 188 | 11 |
| शृङ्गारो | 190 | 5 |
| रसानां भावानां वा | 196 | 9 |
| ओजस्यन्तर्भाव | 224 | 1 |
| अनङ्गरङ्ग | 234 | 1 |
| धिधिपर्यन्तत्वं | 272 | 13 |
| कमलापदं | 282 | 13 |
| तत्र पौन | 284 | 12 |
| सङ्ग्रामं | 293 | 13 |
| मम देहि | 302 | 5 |
| नयोपकारं | 303 | 6 |

| पठनीयः पाठः | पृ. | पं |
|---|---|---|
| पुरपक्षे | 309 | 20 |
| व्युत्पादनविरोधः | 312 | 10 |
| किन्तु श्लेषः | 312 | 12 |
| तदाक्षिप्तः | 312 | 14 |
| भेदे इति | 333 | 6 |
| भेदाभेदप्राधान्ये | 333 | 16 |
| शब्दादेव | 338 | 10 |
| उपमानभूत | 348 | 16 |
| मृधे निदाघ | 351 | 1 |
| मधुमती | 367 | 11 |
| अधरसंयोग | 368 | 13 |
| विभाकरपदे | 392 | 14 |
| कुलवालिकानां | 422 | 7 |
| आवेदयति | 425 | 8 |
| हेतुरूपक्रियायाः | 441 | 4 |
| परिवर्तते | 442 | 3 |
| एकगुणहानौ | 443 | 15 |
| समासमैः | 464 | 3 |
| भावात् | 473 | 12 |
| बिम्बाहरे | 434 | 3 |
| रोहितया | 504 | 11 |
| त्रुटितो धूमखण्डः | 505 | 14 |
| असङ्गतित्वेना | 505 | 19 |
| समुच्चये | 511 | 10 |
| आद्यं यथा | 514 | 14 |
| प्रतीपालङ्कारः | 529 | 1 |
| ” | 530 | 1 |
| ” | 531 | 1 |
| इति प्रतीपालङ्कारः | 532 | 9 |
| निर्णेतुमशक्यत्वे | 553 | 9 |
| हीनपदत्वं अधिकपदत्वं च | 590 | 3 |
| तरङ्गय दृशोऽङ्गणे | 608 | 17 |

## मैसूरु-विश्वविद्यानिलयीय-प्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशिताः ग्रन्थाः

—o—

[सूचना :— * एतच्चिह्नाङ्किताः ग्रन्थाः सम्प्रति विक्रयाय नोपलभ्यन्ते ॥
† एतच्चिह्नाङ्किताः तत्सङ्ख्याकग्रन्थानुबन्धतया योजिताः ॥]

### 1. वेदग्रन्थाः

| Series No. | | Rs. | P. |
|---|---|---|---|
| * 28 | एकाग्निकाण्डः (सस्वरचिह्नः) हरदत्तीयभाष्यसहितः | 1 | 25 |
| * 36 | तैत्तिरीयब्राह्मणम् भट्टभास्करभाष्यसहितम् प्रथमाष्टकम् | 3 | 50 |
| * 57 | ,, द्वितीयाष्टकम् | 3 | 50 |
| * 38 | ,, तृतीयाष्टकम् (१) | 3 | 50 |
| * 42 | ,, ,, (२) | 2 | 25 |
| * 4 | तैत्तिरीयसंहिता सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्य भाष्यसहिता (प्रथमं सम्पुटम्) | 2 | 50 |
| * 5 | ,, (द्वितीयं ,, ) | 2 | 50 |
| * 7 | ,, (तृतीयं ,, ) | 3 | 00 |
| * 9 | ,, (चतुर्थं ,, ) | 3 | 00 |
| * 12 | ,, (पञ्चमं ,, ) | 3 | 00 |
| * 13 | ,, (षष्ठं ,, ) | 4 | 00 |
| * 14 | ,, (सप्तमं ,, ) | 3 | 00 |
| * 16 | ,, (अष्टमं ,, ) | 3 | 00 |
| * 17 | ,, (नवमं ,, ) | 2 | 25 |
| * 18 | ,, (दशमं ,, ) | 1 | 75 |

| | | | |
|---|---|---|---|
| * 26 | तैत्तिरीयारण्यकम् भट्टभास्करभाष्यसहितम् (प्रथमं सम्पुटम्) | 1 | 75 |
| * 27 | ,, (द्वितीयं ,, ) | 1 | 00 |
| * 29 | ,, (तृतीयं ,, ) | 1 | 00 |

## 2. वेदाङ्गग्रन्थः

| | | | |
|---|---|---|---|
| * 33 | तैत्तिरीयप्रातिशाख्यम् वैदिकाभरण-त्रिभाष्यरत्नाभ्यां युतम् | 4 | 00 |

## 3. श्रौतग्रन्थाः

| | | | |
|---|---|---|---|
| * 12 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्त-कपर्दिस्वामि-भाष्याभ्यां सहितम् | 1 | 00 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय-करविन्दीय-सुन्दर-राजीयव्याख्याभिः सहितम् | 2 | 75 |
| 87 | आपस्तम्बश्रौतसूत्रम् रामाग्निचिद्वृत्तिसहित-धूर्तस्वामि-भाष्ययुतम् (प्रथमं सम्पुटं) | 4 | 00 |
| 93 | ,, (द्वितीयं ,, ) | 8 | 50 |
| 104 | ,, (तृतीयं ,, ) | 10 | 00 |

## 4. गृह्यसूत्रग्रन्थाः

| | | | |
|---|---|---|---|
| * 1 | आपस्तम्बगृह्यसूत्रम् सुदर्शनाचार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम् | 1 | 75 |
| * 41 | खादिरगृह्यसूत्रम् रुद्रस्कन्दीयवृत्तिसहितम् | 1 | 00 |
| * 32 | बोधायनगृह्यसूत्रम् सपरिशिष्टं (प्रथममुद्रणम्) | 2 | 25 |
| * 55 | ,, (द्वितीयमुद्रणम्) | 2 | 25 |

## 5. धर्मसूत्रग्रन्थाः

| | | | |
|---|---|---|---|
| * 15 | आपस्तम्बधर्मसूत्रम् हरदत्ताचार्यप्रणीतोज्ज्वलाख्यवृत्तियुतम् | 1 | 75 |
| * 50 | गौतमधर्मसूत्रम् मस्करिभाष्ययुतम् | 3 | 75 |
| * 34 | बोधायनधर्मसूत्रम् गोविन्दस्वामिकृतविवरणसमेतम् | 3 | 00 |

## 6. निबन्धग्रन्थाः

| | | | |
|---|---|---|---|
| * 25 | गोत्रप्रवरनिबन्धकदम्बम् | 2 | 00 |
| 71 | सरस्वतीविलासः व्यवहारकाण्डः | 2 | 50 |
| * 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता (प्रथमं सम्पुटम्) | 1 | 50 |
| * 44 | ,, (द्वितीयं ,, ) | 2 | 50 |
| 45 | ,, (तृतीयं ,, ) | 2 | 00 |
| 48 | ,, (चतुर्थं ,, ) | 3 | 00 |
| 52 | ,, (पञ्चमं ,, ) | 3 | 25 |
| 56 | ,, (षष्ठं ,, ) | 1 | 50 |

## 7. इतिहासग्रन्थाः

| | | | |
|---|---|---|---|
| 102 | वाल्मीकिरामायणम् माधवयोगिविरचितामृतकतकव्याख्यायुतम् (बालकाण्डः) (प्रथमं सम्पुटं) | 5 | 50 |
| 107 | ,, (अयोध्याकाण्डः) (द्वितीयं ,, ) | 5 | 50 |
| 111 | ,, ( ,, ) (तृतीयं ,, ) | 11 | 75 |
| 110 | ,, (अरण्यकाण्डः) (चतुर्थं ,, ) | 9 | 70 |
| 119 | ,, (किष्किन्धाकाण्डः) (पञ्चमं ,, ) | 17 | 00 |

## 8. स्तोत्रग्रन्थाः

| | | | |
|---|---|---|---|
| * 6 | दक्षिणामूर्तिस्तोत्रम् सुरेश्वराचार्यटीकासहितम् (प्रथमं मुद्रणम्) | 1 | 25 |
| 118 | दक्षिणामूर्तिस्त्रोत्रम् सुरेश्वराचार्यटीकासहितम् परिष्कृतं (द्वितीयं मुद्रणम्) | 10 | 25 |
| 118† | ,, कर्णाटकानुवादसहितम् | 10 | 25 |
| * 11† | देवीपञ्चस्तवी कालिदासकृता (प्रथमं मुद्रणं) | 1 | 00 |
| * 85† | ,, ,, (द्वितीयं ,, ) | 2 | 50 |
| * 91† | ,, ,, (तृतीयं ,, ) | 3 | 00 |
| 114† | ,, ,, (चतुर्थं ,, ) | 7 | 00 |
| 105 | विष्णुसहस्रनामस्तोत्रम् नामावालीशङ्करभाष्यार्थसङ्ग्रह-पद्यप्रसूनाञ्जलिभिः सहितम् | 4 | 00 |
| 106 | ,, तारकब्रह्मानन्दसरस्वतीयविवृतिसमेत-शाङ्करभाष्ययुतम् | 13 | 25 |
| * 11 | सौन्दर्यलहरी शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्या-सहिता (प्रथमं मुद्रणम्) | 1 | 00 |
| * 85 | ,, ,, (द्वितीयं ,, ) | 2 | 50 |
| * 91 | ,, ,, (तृतीयं ,, ) | 3 | 00 |
| 114 | ,, ,, (चतुर्थं ,, ) | 7 | 00 |
| 114† | ,, ,, कर्णाटकानुवादसहिता | 7 | 00 |

## 9. काव्यग्रन्थाः

| | | | |
|---|---|---|---|
| 121 | कविकर्णरसायनम् महाकविषडक्षरीशविरचितम्, वेङ्कन-सुधीविरचितसाहित्यसुधोदयव्याख्यासमन्वितम् | 20 | 75 |

| | | | |
|---|---|---|---|
| * 86 | यादवाभ्युदयम् वेदान्तदेशिककृतम् अप्पयदीक्षितरचित-व्याख्यायुतम् (१३-१८ सर्गाः) (तृतीयो भागः) | 3 | 25 |
| 89 | ,, (१९-२४ सर्गाः) (चतुर्थो भागः) | 5 | 00 |

## 10. नाटकग्रन्थः

| | | | |
|---|---|---|---|
| 101 | सेवन्तिकापरिणयम् चोक्कनाथविरचितम् | 2 | 25 |

## 11. अलङ्कारग्रन्थाः

| | | | |
|---|---|---|---|
| * 51 | अलङ्कारमणिहारः (प्रथमं सम्पुटम्) | 3 | 00 |
| * 58 | ,, (द्वितीयं ,, ) | 3 | 50 |
| * 62 | ,, (तृतीयं ,, ) | 2 | 50 |
| 72 | ,, (चतुर्थं ,, ) | 2 | 25 |
| * 60 | काव्यप्रकाशः मम्मटभट्टकृतः माणिक्यचन्द्रकृतसङ्केत-टीकासहितः | 3 | 50 |
| 120 | ,, माणिक्यचन्द्रकृतसङ्केतटीका—रविपाणिकृत-मधुमतीटीकाभ्यां सहितः (प्रथमं सम्पुटम्) | 10 | 00 |
| 122 | ,, (द्वितीयं ,, ) | .... | .... |

## 12. व्याकरणग्रन्थाः

| | | | |
|---|---|---|---|
| 92 | प्राकृतमणिदीपः अप्पयदीक्षितकृतः दीधितिव्याख्यायुतः (प्रथमो भागः) | 6 | 25 |
| * 23 | माधवीया धातुवृत्तिः (प्रथमो भागः) | 2 | 00 |
| * 24 | ,, (द्वितीयो ,, ) | 2 | 00 |
| 3 | ,, (तृतीयो ,, ) | 2 | 00 |
| * 31 | ,, (चतुर्थो ,, ) | 2 | 00 |

## 13. न्यायग्रन्थः

| | | | |
|---|---|---|---|
| 116 | न्यायमञ्जरी जयन्तभट्टविरचिता सटिप्पणा (प्रथमो भागः) | 42 | 00 |

## 14. वैद्यग्रन्थः

| | | | |
|---|---|---|---|
| * 61 | आयुर्वेदसूत्रम् योगानन्दनाथभाष्ययुतम् | 2 | 00 |

## 15. ज्यौतिषग्रन्थाः

| | | | |
|---|---|---|---|
| * 63 | विद्यामाधवीयम् विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् (प्रथमो भागः) | 2 | 00 |
| * 67 | ,, (द्वितीयो ,, ) | 2 | 00 |
| * 70 | ,, (तृतीयो ,, ) | 1 | 50 |

## 16. योगग्रन्थाः

| | | | |
|---|---|---|---|
| 117 | पञ्चदशाङ्गयोगप्रकरणम् अप्पयशिवाचार्यकृतम् | 2 | 00 |
| * 10 | मण्डलब्राह्मणोपनिषत् शङ्कराचार्यरचितराजयोगभाष्यसहिता (प्रथमं मुद्रणम् ) | 1 | 00 |
| 115 | ,, (द्वितीयं ,, ) | 3 | 75 |
| 115† | योगतारावली शङ्कराचार्यविरचिता सव्याख्या | 3 | 75 |

## 17. पूर्वमीमांसाग्रन्थाः

| | | | |
|---|---|---|---|
| * 35 | भाट्टदीपिका खण्डदेवविरचिता (प्रथमो भागः) | 3 | 00 |
| * 40 | ,, ,, (द्वितीयो ,, ) | 3 | 00 |
| * 46 | ,, ,, (तृतीयो ,, ) | 2 | 50 |
| * 49 | ,, ,, (चतुर्थो ,, ) | 3 | 00 |
| 83 | वाक्यार्थरत्नम् सुवर्णमुद्रिकायुतम् | 1 | 00 |

## 18. अद्वैतग्रन्थाः

| | | | |
|---|---|---|---|
| 75 | अद्वैतसिद्धिः गुरुचन्द्रिकायुता (प्रथमो भागः) | 3 | 75 |
| * 78 | ,, ,, (द्वितीयो ,, ) | 3 | 25 |
| * 80 | ,, ,, (तृतीयो ,, ) | 2 | 25 |
| * 6 | दक्षिणामूर्तिस्तोत्रम् सुरेश्वराचार्यविरचितव्याख्यायुतम् (प्रथमं मुद्रणम् ) | 1 | 25 |
| 118 | ,, (द्वितीयं मुद्रणम् ) | 10 | 25 |
| * 8 | भगवद्गीता शङ्करभाष्ययुता | 2 | 75 |
| 105 | विष्णुसहस्रनामस्तोत्रम् नामावली-शङ्करभाष्यार्थसङ्ग्रह-पद्यप्रसूनाञ्जलिभिः सहितम् | 4 | 00 |
| 106 | ,, तारकब्रह्मानन्दीयविवृतिसहितशङ्कर-भाष्ययुतम् | 13 | 25 |
| 96 | वेदान्ततत्त्वविवेकः सव्याख्यः | 15 | 00 |
| * 19 | शङ्कराचार्यप्रकरणप्रबन्धावलिः (प्रथमो भागः) | 1 | 25 |
| * 20 | ,, (द्वितीयो भागः) | 1 | 25 |
| * 21 | ,, (तृतीयो भागः) | 2 | 00 |
| * 22 | ,, (चतुर्थो भागः) | 1 | 00 |
| 109 | सिद्धान्तसिद्धाञ्जनम् कृष्णानन्दसरस्वतीकृतम् भास्करदीक्षितकृतरत्नतूलिकायुतम् (प्रथमो भागः) | 15 | 00 |

## 19. अनुभवाद्वैतग्रन्थः

| | | | |
|---|---|---|---|
| 113 | अद्वयतारकोपनिषत् अप्पयशिवाचार्यकृतभाष्ययुता | 0 | 35 |

## 20. विशिष्टाद्वैतग्रन्थाः

| | | | |
|---|---|---|---|
| * 76 | तत्त्वमुक्ताकलापः स्वोपज्ञसर्वार्थसिद्धि-तद्व्याख्यानन्द-दायिनी-भावप्रकाशैः संवलितः (प्रथमो भागः) | 4 | 00 |
| * 81 | ,, (द्वितीयो ,, ) | 3 | 00 |
| 94 | ,, (तृतीयो ,, ) | 6 | 75 |
| 97 | ,, (चतुर्थो ,, ) | 6 | 00 |

## 21. द्वैतग्रन्थाः

| | | | |
|---|---|---|---|
| 74 | तर्कताण्डवम् व्यासयतिकृतम् न्यायदीपाख्यव्याख्या-युतम् (प्रथमो भागः) | 3 | 00 |
| 77 | ,, (द्वितीयो ,, ) | 2 | 00 |
| 79 | ,, (तृतीयो ,, ) | 2 | 00 |
| 82 | ,, (चतुर्थो ,, ) | 2 | 25 |
| * 39 | ब्रह्मसूत्रभाष्यम् आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशैः सहितम् (प्रथमो भागः) | 3 | 00 |
| * 47 | ,, (द्वितीयो ,, ) | 3 | 00 |
| * 53 | ,, (तृतीयो ,, ) | 4 | 00 |
| * 59 | ,, (चतुर्थो ,, ) | 3 | 50 |

## 22. शैवग्रन्थाः

| | | | |
|---|---|---|---|
| 84 | तत्त्वार्थसूत्रम् उमास्वामिकृतम्, भास्करनन्दिरचित-सुखबोधवृत्तियुतम् | 2 | 25 |
| * 30 | ब्रह्ममीमांसा श्रीकण्ठभाष्यसहिता | 2 | 00 |
| 90 | शैवपरिभाषा शिवाग्रयोगिकृता | 3 | 00 |

## 23. वीरशैवग्रन्थाः

| | | | |
|---|---|---|---|
| 95 | क्रियासारः नीलकण्ठशिवाचार्यकृतः (प्रथमो भागः) | 5 | 50 |
| 99 | ,, ,, (द्वितीयो ,, ) | 6 | 00 |
| 100 | ,, ,, (तृतीयो ,, ) | 5 | 00 |
| 108 | शिवतत्त्वरत्नाकरः केळदि-बसवभूपालविरचितः (प्रथमो भागः) | 9 | 75 |
| 112 | ,, (द्वितीयो ,, ) | 30 | 00 |

## 24. जैनग्रन्थः

| | | | |
|---|---|---|---|
| 88 | प्रमेयरत्नालङ्कारः अभिनवचारुकीर्तिपण्डिताचार्यविरचितः | 2 | 75 |

## 25. मन्त्रशास्त्रग्रन्थाः

| | | | |
|---|---|---|---|
| * 11 | सौन्दर्यलहरी शङ्कराचार्यकृता लक्ष्मीधरव्याख्यासहिता (प्रथमं मुद्रणम्) | 1 | 00 |
| * 85 | ,, (द्वितीयं ,, ) | 2 | 50 |
| * 91 | ,, (तृतीयं ,, ) | 3 | 00 |
| 114 | (चतुर्थं ,, ) | 7 | 00 |
| 114† | सौन्दर्यलहरी कर्णाटकभाषानुवादसहिता | 7 | 00 |
| 11* | भावनोपनिषत् भास्कररायविरचितभाष्यसहिता (प्रथमं मुद्रणम्) | 1 | 00 |
| * 85† | ,, (द्वितीयं ,, ) | 2 | 50 |
| 91† | ,, (तृतीयं ,, ) | 3 | 00 |
| 114† | ,, (चतुर्थं ,, ) | 7 | 00 |

## 26. अर्थशास्त्रग्रन्थाः

| | | | |
|---|---|---|---|
| * 37 | कौटलीयार्थशास्त्रम् (प्रथमं मुद्रणम्) | 3 | 00 |
| * 54 | ,, (द्वितीयं ,, ) | 3 | 00 |
| * 64 | ,, (तृतीयं ,, ) | 3 | 00 |
| 103 | ,, परिष्कृतं (चतुर्थं ,, ) | 14 | 00 |
| * 65 | ,, पदसूची (प्रथमो भागः) | 2 | 50 |
| * 66 | ,, ,, (द्वितीयो ,, ) | 2 | 50 |
| * 68 | ,, ,, (तृतीयो ,, ) | 2 | 00 |
| 98† | कौटलीयार्थशास्त्रसङ्ग्रहः | 2 | 25 |
| 103† | कौटलीयार्थशास्त्रसुभाषितसङ्ग्रहः | 14 | 00 |
| 98 | नीतिसूत्राणि | 2 | 25 |
| 98 (103†) | चाणक्यनीतिसूत्राणि | 2 | 25 |
| 98 (103†) | सोमदेवनीतिसूत्राणि | 2 | 25 |
| 98 (103†) | बृहस्पतिनीतिसूत्राणि | 2 | 25 |

## 27. कोशग्रन्थाः

| | | | |
|---|---|---|---|
| 69 | अभिलषितार्थचिन्तामणिः (प्रथमो भागः) | 2 | 00 |
| 108 | शिवतत्त्वरत्नाकरः केळदि बसवभूपालविरचितः (प्रथमो भागः) | 9 | 75 |
| 112 | ,, (द्वितीयो भागः) | 10 | 00 |

## 28. सङ्कीर्णग्रन्थाः–(ग्रन्थमालाबहिर्भूताः)

| | | | |
|---|---|---|---|
| 1 | मैसूरु प्राच्यकोशागारस्थ-लिखितग्रन्थसूचनी (प्रथमो भागः) | 3 | 75 |

| | | | |
|---|---|---|---|
| 2 | मैसूरु प्राच्यकोशागारस्थ-लिखितग्रन्थसूचनी (द्वितीयो भागः) | 1 | 25 |
| 12 | ,, ,, (तृतीयो ,, ) | 90 | 00 |
| 5 | ,, ,, (चतुर्थः ,, ) | 0 | 75 |
| 3 | मैसूरु प्राच्यकोशागारस्थ-मुद्रितपुस्तकसूचनी (प्रथमः भागः) | 2 | 75 |
| 4 | ,, ,, (द्वितीयः ,, ) | 1 | 25 |
| 6 | ,, ,, मुद्रिताङ्गपुस्तकसूचनी | 3 | 00 |
| 7 | सीतारावणसंवादझरी (प्रथमो भागः) | 2 | 00 |
| 8*a* | ,, (द्वितीयो ,, ) | 1 | 00 |
| 9 | कृष्णभूपालीयमु | 0 | 75 |
| 10 | सावित्रीपरिणयचम्पूः | 1 | 50 |
| * 11 | पातञ्जलयोगसूत्रम् सव्याख्यम् | 0 | 25 |
| * 11 | हठयोगप्रदीपिका | 0 | 25 |
| 14 | हंससन्देशः वेदान्तदेशिककृतः सव्याख्यः | 3 | 50 |

## 29. मुद्रणाय स्वीकृताः ग्रन्थाः

1 वाल्मीकिरामायणम् अमृतकतकव्याख्यायुतम् सुन्दर-युद्ध-उत्तरकाण्डात्मकाः ६, ७, ८, ९, १० भागाः

2 शिवतत्त्वरत्नाकरः तृतीयो भागः

3 न्यायमञ्जरी द्वितीयो भागः

4 आपस्तम्बश्रौतसूत्रम् चतुर्थो भागः

5 [illegible]वृत्तिः प्रौढदेवरायकृता

6 पञ्च[illegible]हः

7 हृदयामृतम् जगन्नाथविरचितम्

8 बृहज्जातकसुबोधिनी

9 काव्यदर्पणः राजचूडामणिदीक्षितकृतः

10 पुराणसारः माधवाचार्यकृतः

11 शिवलिङ्गसूर्योदयनाटकम् मल्लणारध्यकृतम्

12 अणुभाष्यटीका छलारिशेषाचार्यकृता

13 वीरमाहेश्वराचारसङ्ग्रहः नीलकण्ठनागनाथाचार्यकृतः कर्णाटकव्याख्या-
सहितः

14 सारस्वतव्याकरणटीका चेन्नवीरकविकृता

15 बसवराजीयम् पाल्कुरिके सोमनाथकृतम्

16 विवेकचिन्तामणिः निजगुणशिवयोगिकृतः

17 एकोत्तरशतस्थलम् जक्कणाचार्यकृतम्

18 तर्कसङ्ग्रहदीपिका महाचार्यकृततत्त्वार्थदीपिकायुता

19 सिद्धान्तशिखामणिः शिवयोगिकृतः

20 वैभाषिककोशः कृष्णकविकृतः

21 शिवनामकल्पलतालवालसुधापूरः वेङ्कटाचलीन.

22 सङ्ख्यारत्नमाला

23 वीरभद्रविजयचम्पूः एकाम्रयज्वविरचिता

24 साङ्ख्यकारिकाव्याख्या नारायणतीर्थकृता

25 गीतराघवम् (रामाष्टपदी) रामकविकृतम्

26 वैयाकरणसिद्धान्तसङ्ग्रहः दत्तरामभट्टकृतः

---

3

